THE

# KASHI SANSKRIT SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

## NO. 98.

( Kavya Section No 15. )

महाकविश्रीत्रिविक्रमभट्टविरचिता

# नलचम्पूः ।

अथवा

## दमयन्तीकथा ।





JAI KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

*Benares City.*



1932.

THE

# KÂSHI-SANSKRIT-SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

NO 98.

( Kavya Section, No. 15. )



THE

# NALACHAMPŪ

*Or*

## DAMAYANTĪ KATHĀ

*With*

*The Visamapada Prakās'a Commentary*

*By*

**CHANDAPĀLA**

*Edited with Introduction, Bhāvabodhinī Annotations, etc,*

By

SAHITYĀCHĀRYA PANDIT NANDA KISHORE S'ARMA

Research Scholar, Govt. Sanskrit Library, Benares.

Under the Supervision

OF

SAHITYĀCHARYA

PANDIT NARAYAN SHASTRI KHISTE

Asst. Librarian Govt. Sanskrit Libra y Benares

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*Benares City.*

1932.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिजपुस्तकमालायाः
९८
काव्यविभागे (१५) पञ्चदशं पुष्पम् ।

महाकविश्रीत्रिविक्रमभट्टविरचिता

# नलचम्पूः ।

अथवा

## दमयन्तीकथा ।

प्राग्वाटवंशीयश्रीचण्डपालकृतया

विषमपदप्रकाशाख्यव्याख्यया सहिता ।

जयपुरमहाराजाश्रित-राजगुरुकथाभट्टवंश्य-कथाभट्टश्रीजयचन्द्रात्मज-काशिकगवर्नमेण्ट-संस्कृतपुस्तकालयीयान्वेषकविद्वद्-वेदान्तभूषण-श्रीनन्दकिशोरशर्मणा साहित्याचार्येण स्वविरचितभावबोधिन्याख्यटिप्पण्या संयोज्य सम्पादिता ।
काशीस्थराजकीय सरस्वतीभवनोपाध्यक्षेण साहित्याचार्य खिस्ते-नारायणशास्त्रिणा च निर्ध्याता ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज् आफिस
बनारस सिटी ।

१९८९.

# * समर्पणम् *

राष्ट्रकूटकुलदिवाकर-पुरुहूतपुरवरातिथि-जोधपुरपुरन्दर--
त्रिविधबिरुदविराजित-श्रीसुमेरसिंहमहाराजचरमधर्मपत्नीनाम्,
श्रीकृष्णचरणसमाराधननितान्तनिर्मलस्वान्तानाम्,
शीलशालीनकुलीनविपश्चिदपश्चिमैकसमाश्रयाणाम्,

चौहानान्वयावतंसानाम्, श्रीमतीनाम्,

**श्रीउमरावकुँवरीणाम्,**

करकमलयोः सविनयमिदम्,

"श्रीमज्जोधपुराधिनाथसुरभूप्रेष्ठातिथिख्यातिम-
न्नामोद्दीप्तसुमेरसिंहनृपते राज्ञी द्वितीयास्ति या।
चौहानान्वयसूर्यमल्लतनया साध्वीषु मूर्धन्यतां
प्राप्ता राजति सोमरावकुँवरी माता प्रजावत्सला ॥ १ ॥
सोहिन्तराग्रामसमुद्रलक्ष्मीः संस्थापितश्रीपतिमन्दिराढ्या।
श्रीवल्लभार्योक्तपथाध्वनीना सा राजमाता जयति प्रकामम् ॥ २ ॥
श्रीमज्जोधपुराधीशोम्मेदसिंहमहीपतेः।
कीर्त्यमाना जनैर्यास्ते माता चौहानवंशजा ॥ ३ ॥
तदीयवात्सल्यदयादिसद्गुणैराकृष्टचित्तेन तदाश्रितेन।
भक्त्युल्लसन्मानसपङ्कजेन राज्ञीसमाराधनसादरेण ॥ ४ ॥
श्रीमन्नन्दकिशोरेण तस्यै सादरमर्प्यते।
नलचम्पूप्रबन्धस्य टिप्पणी भावबोधिनी ॥ ५ ॥"

इति।

श्रीमतीश्रीचांपावतजीमन्दिरम्,
जयपुरम्,
विजया दशमी १९८९ संवत्।

शुभाशीर्वादिनो
जयपुरराजगुरुकथाभट्टवंशावतंस-
**श्रीनन्दकिशोरशर्मणः**
साहित्याचार्यस्य।

# हिन्दी-अनुवाद

राठौडवंशके भास्कर विविधविरुदावलियों से सुशोभित स्वर्गीय-
जोधपुरनरेश श्रीसुमेरसिंहजी महाराजकी द्वितीयमहाराणी,
श्रीकृष्णचरणारविन्दकी निरन्तर आराधनासे अत्यन्त स्वच्छहृदया,
सुशीलता से सुशोभित-कुलीन विद्वानों की अवलम्बन,
श्रीमती माजीसाहिबां **श्रीउमरावकुँवरीजी** चौहानजी महोदया के
करकमलों में सादर समर्पण,

दिगन्तविश्रान्तकीर्तिसे सर्वतः प्रकाशित स्वर्गीय जोधपुरनरेश श्रीसुमेरसिंहजी के० बी० आई० महोदयकी द्वितीयमहाराणी, तथा चौहानवंशीय स्वर्गीय ठाकुरसाहिब श्रीसूर्यमल्लजीकी श्रेष्ठदुहिता, पतिव्रता पत्नियोंमें अग्रासनको प्राप्त, प्रजावत्सल, माजीसाहिबां श्रीउमरावकुँवरीजी सर्वोत्तम हैं ॥ १ ॥

सोहिन्तरा ( जोधपुरीय पचपदरापरगनाके अन्तर्गत ) ग्रामकी मूर्तिमती लक्ष्मी, वल्लभसम्प्रदायमें परमश्रद्धा एवं असीम भक्तिमती, विष्णुमन्दिरकी निर्मापयित्री उक्त श्रीमाजीसाहिबां सर्वातिशायी हैं ॥ २ ॥

श्रीयुत जोधपुराधीश श्रीउम्मेदसिंहजी महाराजासाहिब बहादुर के० सी० एस० आई०, के० सी० वी० ओ०, की माजीसाहिबां श्रीचौहानजी हैं ॥ ३ ॥

उन माजीसाहिबां के वात्सल्य अनुकम्पा प्रभृतिसद्गुणों से आकर्षितहृदय, तथा उनमें असीमश्रद्धासे प्रफुल्लितमना, एवं उनकी आराधनामें तत्पर, उनके आश्रित कथाभट्ट श्रीनन्दकिशोरशर्मा साहित्याचार्य, मान्यखेट ( मालखेडा ) के अधीश राठौडराज श्रीइन्द्रराजतृतीयके समाश्रित त्रिविक्रमभट्टसे निर्मित नलचम्पू ( दमयन्तीकथा ) की भावबोधिनी टिप्पणी ( संक्षिप्तटीका ) उक्त माजीसाहिबां श्रीचौहानजीको सादर समर्पण करता है ॥ ४ ॥ ५ ॥

जयपुरराजमाजीसाहिब-
श्रीचांपावतजीका मन्दिर, जयपुर।
विजया दशमी १९८९ संवत्।

शुभाशीर्वादक-
जयपुरमहाराजाश्रित-राजगुरुकथाभट्टवंश्य-
**श्रीनन्दकिशोरशर्मा**
साहित्याचार्य ।

# उपोद्घातः ।

अथेयं नलचम्पूः संस्कृतभाषाश्लेषरसिकानां विद्वदग्रणीनां करकमलयोः समर्प्यते मनोविनोदमाधातुम् । बम्बईस्थनिर्णयसागरयन्त्रालयतः प्रकाशमितोऽपि प्रबन्धोऽसौ भावबोधिन्याख्यटिप्पण्या विषयसूच्या पात्रसूच्या भौगोलिकपदसंग्रहेण ग्रन्थकारटीकाकारादीतिवृत्तप्रतिपादकेन बृहतोपोद्घातेन च विशिष्य समलङ्कृतो नवीनाकारतामादधद् विदुषां संस्कृतपरीक्षाप्रविष्टानां छात्राणां चोपकारमेव विधास्यतीति संशोधने संस्करणे च प्रवृत्तस्य मे न विफलः प्रयासः । त्रिविक्रमभट्टतत्कृतनलचम्पूपरिचयश्च मया(१) संस्कृतकविपरिचयप्रबन्धे प्रतिपादित इति तत एवोद्धृत्यात्राप्यसावुपन्यस्यते । मन्ये च तेनैव भूमिकाप्रतिपाद्यविषयस्य निराकाङ्क्षता संपद्येत नामेति ।

## त्रिविक्रमभट्टः ( ९१५ ई० ) ।

शाण्डिल्यगोत्रोत्पन्नोऽयं त्रिविक्रमभट्टः(२)श्रीधरपौत्रो नेमादित्यपुत्रो दक्षिणस्यां दिशि मान्यखेटाधीश्वर ( हैदराबादान्तर्गत )स्य राष्ट्रकूटकुलचूडामणेरिन्द्रराजस्य (=तृतीयस्य ) राजसभायाः प्रमुखपण्डितो बभूव । मान्यखेटाधीश्वरः श्रीइन्द्रराजः ( तृतीयः) स्वराज्याभिषेकोत्सवाय मान्यखेटतः कुरुण्डकं (कृष्णागङ्गासंगमे वर्त्तमानं) ग्रामं जगाम । तत्र च ९७२ विक्रमवत्सरे(९१९ ई०) फाल्गुनशुक्लसप्तम्यां राष्ट्रकूटवंशरत्नेन्द्रराजस्य राज्याभिषेको बभूव । इन्द्रराजेनाभिषेकानन्तरं सौवर्णं तुलादानं, तथानेके ग्रामा ब्राह्मणेभ्यो दत्ता इतीत्यादिवृत्तान्तावबोधिका ताम्रलिपिर्नवसारीग्रामे ( बडौदान्तःपातिनि ) साम्प्रतं समधिगता(३) । कुरुण्डकदानपत्रस्यास्य निर्माता लेखकश्चायं त्रिविक्रमभट्ट एवेति निर्णीतमन्वेषकैर्विद्वद्भिः ।

## राष्ट्रकूटवंशीयो मान्यखेटाधिपः श्रीइन्द्रराजः(तृतीयः)(४) ।

राज्ञो जगत्तुङ्ग ( द्वितीय )स्य पुत्र इन्द्रराजोऽयं पितरि यौवराज्यावस्थायामेव लोकान्तरिते स्वपितामहस्य कृष्णराजद्वितीयस्योत्तराधिकारी बभूव । जगत्तुङ्गस्य धर्मपत्नी, इन्द्रराजस्य च माननीया माता लक्ष्मीदेव्याख्या समभूदित्यपि प्रतीयते ।

---

( १ ) संस्कृतकविपरिचयस्य भारविवर्णनात्मको भागो वाराणसेयराजकीयसंस्कृतपुस्तकालयसरस्वतीभवनात्प्रकाश्यमाने सारस्वतालोके प्रथमकिरणस्य परिशिष्टरूपतया मुद्रित आसीत् ।

( २ ) तेषां वंशे विशदयशसां श्रीधरस्यात्मजोऽभू—

न्नेमादित्यः स्वमतिविकसद्वेदविद्याविवेकः । देवादित्य इति पाठान्तरम् ।<br>
उत्कल्लोलां दिशि दिशि जनाः कीर्तिपीयूषसिन्धुं<br>
यस्याद्यापि श्रवणपुटकैः कूणिताक्षाः पिबन्ति ॥ (नलचम्पू—१ उ १९ श्लो.)<br>
तैस्तैरात्मगुणैर्येन त्रैलोक्यास्तिलकायितम् ।<br>
तस्मादस्मि सुतो जातो जाड्यपात्रं त्रिविक्रमः । (न. १ उ. २० श्लो०) ।

( ३ ) जर्नल बाम्बे ब्राञ्च रायल एशियाटिक सोसाइटी, १८ भागे २५३, २५७ तथा २५३, २६१ पृष्ठेषु ।

( ४ ) श्रीयुत विश्वेश्वरनाथरेऊकृत "भारतके प्राचीनं राजवंश ( राष्ट्रकूट )" भाग ३ पृ. ५०–५२ । सन् १९२५ ई० ।

किं चेन्द्रराजस्य धर्मपत्नी बीजाम्बाख्या कलचुरि (हैहय) कौक्कलस्य प्रपौत्री, अर्जुनदेवस्य पौत्री, अम्मणदेव (अनङ्गदेव)स्य पुत्री छक्कतिमती समजायत । दानपत्रादिषु समधिगता इन्द्रराजस्य 'नित्यवर्ष, महाराजाधिराज, परमेश्वर, परमभट्टारक, श्रीपृथिवीवल्लभ, इत्युपाधयः । इन्द्रराजस्य राज्येऽभिषेकः फ्रेब्रुअरीमासस्य चतुर्विंशदिने ९१९ ई० वर्षे बभूवेति निवेदितमेव । अस्य महासामन्तो लेण्डेयरसाख्योऽभवदिति हत्तिमत्तूरं (धरवाडप्रान्त) (१)ग्रामप्राप्तात् ९१६ ई० वर्षीयलिखितात् लेखाज्ज्ञायते । अपि चायमिन्द्रराजो राष्ट्रकूटवंशीयः सात्यकीकुले (यादववंशे) समुत्पन्न इति राष्ट्रकूटा यादववंश्या इत्यपि प्रतीयते कुरुण्डकलेखात् ।

एकस्मिन्समये श्रीइन्द्रराजो मेरुनगरं स्वसैन्याक्रान्तं विधाय विदलितमकुरुत । मेरुनगरं (महोदय = कन्नौज) कान्यकुब्जशब्देनोच्यते स्मेति साम्प्रतिकानां निश्चयः । एतस्मिन्समये कान्यकुब्जराज्यं प्रतिहारवंशीयमहीपालाख्यमहाराजायत्तमासीत् । यद्यपीन्द्रराजेन महीपालराज्यं स्वायत्तमक्रियत । तथापि महीपालः स्वचातुर्येण कान्यकुब्जराज्यं पुनः स्वायत्तमकरोत् । अस्तु ।

(२)अयमिन्द्रराजो (तृतीयः) महावदान्य आसीदत एवानेन प्राचीनैर्दत्तप्रत्यादत्ता अपि चतुःशतग्रामा पुनेरव विप्रेभ्यः प्रादीयन्त ।

---

(१) इन्डियन् आण्टिक्वेरी, भागे १२ पृष्ठे २२४ ।

(२) इन्द्रराजप्रपितामहस्यामोघवर्षप्रथमस्य ७९५ शाकवर्षीयसञ्जानग्रामस्थताम्रपत्रोत्कीर्णे (एपिग्राफीया इन्डिका १८ भागे)—

"हत्वा भ्रातरमेव राज्यमहरद् द्रव्यं च दीनस्ततो
लक्षं कोटिमलेखयत्किल कलौ दत्तं स गुप्तान्वयः ।
येनात्याज्यतनु स्वराज्यमसकृद् बाह्यार्थके का कथा
ह्रीस्तस्याजनि राष्ट्रकूटतिलको दातेति कीर्तावपि" ॥

इत्यत्र श्लोके ताम्रपत्रसम्पादकमहोदयो गुप्तान्वयपदेन समुद्रगुप्तमहाराजमाक्षिपति स्म । परन्तु मुद्राराक्षसकर्तृविशाखदत्तप्रणीतदेवीचन्द्रगुप्तनाटकोक्तकथासंवादेन पूर्वोक्तश्लोके उपमेयतयोपन्यस्तो गुप्तान्वयी राजा चन्द्रगुप्तविक्रमादित्य(द्वितीयः) एव परिग्रहीतुं शक्यत इति निश्चितं वाराणसेयहिन्दूविश्वविद्यालयीयाध्यापक ए. एस. आल्टेकरमहाशयेन (जरनल् आफ विहार अन्ड ओरिसा रिसर्च सोसाइटी १९२८ सन्) । तदेतच्च स्वीकारार्हमपि ।

देवीचन्द्रगुप्तनाटकस्योद्धरणांशैः (नाट्यदर्पणशृङ्गारप्रकाशकाव्यमीमांसास्थैः) वाराणसीहिन्दूविश्वविद्यालयप्रोवाइस् चान्सलर श्रीयुत ए. बी. ध्रुवमहोदयैरयं तदीयकथासारांशः सङ्कलितः "समुद्रगुप्तानन्तरं तत्पुत्रो रामगुप्तो शर्मगुप्तापरनामा गुप्तराज्याधिकारी बभूव । स च गिरिनारपर्वते शकजातीयतृतीयरुद्रसिंहेनोपद्रुतः सन् तेन सह निजपत्नीध्रुवदेवीप्रदानेन सन्धि चकार । ततश्च रामगुप्तस्य तृतीयोऽनुजश्चन्द्रगुप्तः कृतध्रुवदेवीनेपथ्यो रामगुप्तेन निवार्यमाणोऽपि राजगणिकया माधवसेनया सह रुद्रसिंहान्तःपुरे प्रविश्य तं च निहत्योन्मत्त इव प्रत्यागतः । एतत्पराक्रमसन्तुष्टो ज्येष्ठो रामगुप्तोऽकर्मण्योऽमुं राज्येऽभिसिषेच । ततश्च मध्यमो भ्राता कनिष्ठचन्द्रगुप्तराज्याभिषेकेण सञ्जातरोषः सन् राज्याय विग्रहं चक्रे । तं च चन्द्रगुप्तो निहतवान्' इति ।

(गुजरातीयसाहित्यपरिषन्नवमाधिवेशननिबन्धे १५ पृष्ठे, अहमदाबाद २७।१०।२८)

## मान्यखेटाधिपराष्ट्रकूटानां राज्ञां (राठौड )वंशक्रमः ।

१—दन्तिवर्मा ।
२—इन्द्रराजः ( प्रथमः ) ।
३—गोविन्दराजः ( प्रथमः ) ।
४—कर्कराजः ( प्रथमः ) ।
५—इन्द्रराजः ( द्वितीयः )




सोऽयं नलचम्पूकर्ता त्रिविक्रमभट्ट इन्द्रराजतृतीयस्य प्रधानपण्डितो ९१५ ई० वर्षे संजात इति कुरुण्डकलेखान्निश्चीयते । अनेनैव त्रिविक्रमभट्टेन मदालसाचम्पूरपि प्रणीता सा च साम्प्रतमुपलभ्यते ।

## त्रिविक्रमभट्टभास्कराचार्ययोरभिन्नान्वयित्वम् ।

त्रिविक्रमभट्टस्य पुत्रो भोजराजेन विद्यापतिरित्युपाधिविभूषितो भास्करभट्टनामा बभूव । तथैतस्यैव वंशे प्रसिद्धज्यौतिषी भास्कराचार्योऽपि जन्म लेभ इति डा० भाऊदाजीनाम्ना विदुषा नासिकक्षेत्रनिकटे चासादितात् ताम्रपत्रात्स्पष्टीकृतम् । सेऽयं ताम्रलिपिः ११२८ शाकवर्षे देवगिरिस्थयादववंशीयसोईदेवेन खानदेशान्तर्गतपाटणाख्ये

---

इत्थमुक्तसञ्जानग्रामस्थताम्रपत्रश्लोकेऽपि ( "हत्वा भ्रातरमेव" ) चन्द्रगुप्तकृतस्यैव भ्रातृवधस्योपमेयतयोपन्यसनमेवोचितं न तु समुद्रगुप्तकृतस्यैतस्य । एतत्कृतभ्रातृवधवर्णनात्मककथायाः कुत्राप्यनुपलम्भादिति सर्वमनवद्यम् ।

ग्रामे लेखिता । अस्यास्ताम्रलिपेरत्रोपयुक्तांशस्त्वयम्—

'शाण्डिल्यवंशे कविचक्रवर्ती त्रिविक्रमोऽभूत्तनयोऽस्य जातः ।
यो भोजराजेन कृताभिधानो विद्यापतिर्भास्करभट्टनामा ॥ १६ ॥
तस्माद्गोविन्दसर्वज्ञो जातो गोविन्दसंनिभः ।
प्रभाकरः सुतस्तस्मात् प्रभाकर इवापरः ॥ १७ ॥
तस्मान्मनोरथो जातः सतां पूर्णमनोरथः ।
श्रीमान् महेश्वराचार्यस्ततोऽजनि कवीश्वरः ॥ १८ ॥
तत्सूनुः कविवृन्दवन्दितपदः सद्वेदविद्यालता-
कन्दः कंसरिपुप्रसादितपदः सर्वज्ञविद्यासदः ।
यच्छिष्यैः सह कोऽपि नो विवदितुं दक्षो विवादी क्वचित्
श्रीमान् भास्करकोविदः समभवत् सत्कीर्तिपुण्यान्वितः ॥ १९ ॥
लक्ष्मीधराख्योऽखिलसूरिमुख्यो वेदार्थवित्तार्किकचक्रवर्ती ।
क्रतुक्रियाकाण्डविचारसारो विशारदो भास्करनन्दनोऽभूत् ॥ २० ॥
सर्वशास्त्रार्थदक्षोऽयमिति मत्वा पुरादतः ।
जैत्रपालेन यो नीतः कृतश्च विबुधाग्रणीः ॥ २१ ॥
तस्मात्सुतः सिंघणचक्रवर्ती दैवज्ञवर्योऽजनि चङ्गदेवः ।
श्रीभास्कराचार्यनिबद्धशास्त्रविस्तारहेतोः कुरुते मठं यः ॥ २२ ॥
भास्कररचितग्रन्थाः सिद्धान्तशिरोमणिप्रमुखाः ।
तद्वंश्यकृताश्चान्ये व्याख्येया मन्मठे नियतम् ॥ २३ ॥
श्रीसोइदेवेन मठाय दत्तं हेमादि वा किञ्चिदिहापरैश्च ।
भूम्यादि सर्वं परिपालनीयं भविष्यभूपैर्बहुपुण्यवृद्धयै ॥ २४ ॥

स्वस्ति श्रीशके ११२८ प्रभवसंवत्सरे श्रीश्रावणे मासे पौर्णमास्यां चन्द्रग्रहणसमये श्रीसोइदेवेन सर्वजनसन्निधौ हस्तोदकपूर्वं निजगुरुरचितमठायाग्रस्थानं दत्तम् । (१)तथेत्यादि ।

त्रिविक्रमभट्टवंशे भास्कराचार्यो जज्ञे, तथा सर्वे एव तद्वंशीयाः पुरुषाः स्वपाण्डित्यवैभवप्रकाशीकृतदिगन्तराला राजगुरवो बभूवुरिति लेखेनानेन स्पष्टमवगम्यते ।

असौ १०३६ (=१११४ई०) शाकवर्षे समुत्पन्नः शाण्डिल्यगोत्रोद्भवकनाडाब्राह्मणो भास्करः सह्याद्रिनिकटवर्त्तिनि कर्णाटकप्रान्तान्तर्गते बिज्जडविडग्रामे (बीजापुरे) निवासमकुरुतेति वासनावार्तिककृतो नृसिंहस्य गणिताध्यायप्रथमश्लोकव्याख्यातः प्रतीयते ।

## भास्कराचार्यग्रन्थास्त्वेते ।

१ सिद्धान्तशिरोमणिर्वासनाभाष्ययुतः ( ११५१ ई० वर्षे रचितः ) ।

( ग्रहागमकुतूहलं ब्रह्मतुल्यकर्णकुतूहलं, ब्रह्मतुल्यसिद्धान्तः इति नामान्तराणि । )

२—कर्णकुतूहलम् ( ११८४ ई०)
३—कर्णकेसरी ।
४—गणितपदी ।
५—ग्रहगणितम् ।
६—ग्रहलाघवम् ।
७—ज्ञानभास्करः ।
८—रेखागणितम् ।
९—लिङ्गशास्त्रम् ।
१०—विवाहपटलः ।
११—सूत्रगणितम् ।
१२—सूर्यसिद्धान्तव्याख्या ।
१३—भास्करदीक्षतीयम् ।

( १ ) एपिग्राफीया इन्डिका, १ पृष्ठ ३४१ ।

भास्कराचार्यस्य सप्रपञ्चविवरणं (१)गणकतरङ्गिण्यां तथा 'आमादेर(२) ज्यौतिष औ ज्यौतिषी'' इत्यस्य प्रथमभागे विलोकनीयम् ।

त्रिविक्रमभट्टवंश्योऽनन्तदेवो यादववंशीयसिंघणमहाराजगुरुरासीदिति बहालाग्रामे ( खानदेशमध्ये ) प्राप्ताद् लेखात्प्रतीयते । अयं लेखोऽनन्तदेवेन कस्मिंश्चिन्मन्दिरे निर्माय राजाज्ञया (३) स्थापित इति । अत्रानन्तदेववंशपरम्परेयं दृश्यते । शाण्डिल्यगोत्रे महेश्वरः । तत्पुत्रः श्रीपतिः । ततो गणपतिः । अनन्तदेवमहेश्वरौ च गणपतिपुत्रौ ।

## त्रिविक्रमभट्टस्येयं संकलिता वंशपरम्परा ।

श्रीधरः शाण्डिल्यगोत्री ( नलचम्पूतः ) ।
|
नेमादित्यः ( देवादित्यो वा ) ।
|
त्रिविक्रमः (नलचम्पूमदा(४)लसाचम्पूकर्ता तथा कुरण्डकताम्रलिपिलेखकः) ।
|
भास्करभट्टः ( विद्यापतिरित्युपाधिभूषितः ) ।
|
गोविन्दः ।
|
प्रभाकरः ।
|
मनोरथः ।
|
महेश्वरः ।

| | |
|---|---|
| भास्कराचार्यः, ज्योतिषी । | श्रीपतिः । |
| लक्ष्मीधरः । | गणपतिः । |
| (५) चङ्गदेवः । | (६) अनन्तदेवः ।    महेश्वरः । |

---

( १ ) म० म० सुधाकरद्विवेदिकृता १८९२ ई० वर्षे मुद्रिता गणकतरङ्गिणी, पृष्ठ ३४—४२ ।

( २ ) योगेशचन्द्ररायकृतं १९०३ ई० वर्षे च मुद्रितमिदम् , पृ. ९८–१०२ ।

( ३ ) बहाला ( इन खानदेश ) इन्स्क्रिप्सन् आफ दी यादव किङ्ग सिङ्घण, शक ११४४( =१२२२ ई० ) एपि. इन्डि. वा० ३ पृ. ११२ । अयं लेखोऽनन्तदेवेन राजगुरुणा लिखितः ।

( ४ ) मुद्रितेयं चम्पूः "पब्लिक लाइब्रेरी जयपुर" इत्यत्रास्ते ।

( ५ ) एपि, इ. वा. १ पृ. ३४१ ।    ( ६ ) एपि. इ., वा. १ पृ. ३४१ ।

इत्थं त्रिविक्रमभट्टस्य काले कुले निकेतने च निर्णीते (१) नलचम्पूभूमिकायां लिखिता प्राचीना किंवदन्ती न तथ्यपदमधिरोहति । साधकबाधकप्रमाणाभावात् । न च नलचम्प्वाः कथाया अपर्यवसानमत्र हेतुरिति वाच्यम् । महाभारतीयकथाया नैषधीयचरितेऽप्यसंपूर्णत्वात् । यद्वा कथाया असमाप्तेरन्येनापि निमित्तेन संभवाच्च । किंवदन्तीस्वरूपं चदेमालिखितं वर्त्तते ।

"पुरा किल कस्मिंश्चित्पुरेऽधीतसकलशास्त्रो राज्यपूज्यः कश्चिद्देवादित्यनामा द्विजन्मा बभूव । तस्य जन्मारभ्याधीतकुकर्मानधीतविद्यस्त्रिविक्रम इति सुतोऽभूत् । एकदा हि केनचित्प्रयोजनेन देवादित्यभट्टे ग्रामान्तरं गते तदुद्वेजितः परमामर्षी कश्चिद्विपश्चित्तदन्तरं विचार्य तत्रागत्य 'राजन्' मया सह शास्त्रार्थं केनापि बुधेन सह कारय, अन्यथा जयपत्रं देहि, इति राज्ञे निवेदितवान् । अथ भूभृता 'देवादित्यमानय' इत्यादिष्टेन राजदूतेन तद्गृहं गत्वा तं ग्रामान्तरगतं निशम्य तत्पुत्र एव राजसभायां शास्त्रार्थायाहूतः । अथ तेन त्रिविक्रमभट्टेन पश्चात्तापपरितप्तेन 'भगवति भारति, मयि मूर्खे कृपाकटाक्षपातं मुञ्च' अद्यात्रागतेन महापण्डितेन त्वद्भक्तस्य सर्वमपि यशो मा ह्रियेत । यथाहं तेन संवादं कृत्वा विजेष्ये" इति स्वगृहवासिनी पितृपराराधिता सरस्वती देवी समभ्यर्थिता । ततोऽपारकरुणानिधिरियं 'यावत्त्वत्पितागमिष्यति तावत्त्वन्मुखे निवसामि" इति प्रोचे । अथ प्राप्तसरस्वतीवरप्रसादः सोऽयं राजसभागतोऽनेककोटिभिस्तं पराजित्य प्रसन्नतरपार्थिववितीर्णानेकाभरणभूषितो गजस्कन्धादिरूढः स्वगृहान् प्रतिनिवृत्य च 'यावत् पित्रागमनं मदीयमुखे सरस्वती वसतीति" तावद्यशोऽर्थं किमपि प्रबन्धरत्नं करिष्यामीति संचिन्त्य पुण्यश्लोकस्य नलस्य सुचरितं गद्यपद्यैर्ग्रथितुमारब्धवान् । इत्थं सप्तमोच्छ्वाससमाप्तिदिवसे ग्रन्थसमाप्तिप्रतिबन्धकपित्रागमनेन मुखारविन्दान्निर्जगाम सरस्वती । तेनैव चम्पूग्रन्थोऽसमाप्तकथ एव स्थित इति गुरुमुखोद्गतः प्रवादः" इति ।

"प्राकृतग्रामर"निर्माता त्रिविक्रमोऽस्माद्भिन्नः ई० १३ तमशताब्दीमध्ये वर्त्तमानश्चेति निर्णयो द्रष्टव्यः, इन्डियन् आण्टिक्वेरी भागे ४० पृष्ठे २१६ ।

## त्रिविक्रमभट्टस्य
## नलचम्पूर्दमयन्तीकथा वा ।

नलचम्पूरेव दमयन्तीकथानाम्नापि व्यवह्रियते । इयं महाभारतीयवनपर्वान्तर्गतं नलोपाख्यानमवलम्ब्य निर्मिता सप्तोच्छ्वासमती उच्छ्वासान्तिमपद्येषु हरचरणसरोजपदाङ्किता सभङ्गश्लेषमयी कस्य विदुषो मनो नानन्दयतीत्येतस्या विषये नाधिकं वक्तव्यमवशिष्यते । त्रिशतोत्तरसप्तत्रिंशता पद्यैस्तथा गद्यभागैश्चात्र नलदमयन्तीयेतिवृत्तस्योपनिबद्धत्वादिदं काव्यं चम्पूशब्देनोच्यते काव्यभेदोपभेदवर्गीकरणकृद्भिर्विद्वद्भिः ।

सोऽयं चम्पुशब्दो गत्यर्थकाच्चौरादिकाच्चपि धातोरुप्रत्यये कृते सति "चम्पयति, "चम्पति" इति व्युत्पत्त्या व्याक्रियमाणः(२) काव्यवाचकतयादौ कदा प्रयुज्यमाणं

(१) १९३१ ईशवीये वर्षे निर्णयसागरबम्बईतः प्रकाशितायाम् ।

(२) चमत्कृत्य पुनाति सहृदयान् विस्मतीकृत्य प्रसादयतीति चम्पूरिति हरिदासभट्टाचार्यः ।

आसीदिति पर्यालोच्यमाने सतीमम्—

'मिश्रं (१)चम्पुरिति ख्यातं प्रकीर्णमिति च द्विधा ।
श्रव्यं चैवाभिनेयं च प्रकीर्णं सकलोक्तिभिः, । ( ३३६ अ० ३८ ) ।

इत्यत्राग्निपुराण(२) उपलभामहे । काव्यं गद्यपद्यतदुभयमिश्रभेदेभ्यस्त्रैविध्यमासादयति । तत्र तृतीयो गद्यपद्यमिश्रणात्मको भेदश्चम्पूशब्देनोच्यत इत्यभिसन्धिः ।

ततश्च खिस्ताब्दीयसप्तमशताब्द्यां दण्डिना काव्यादर्शे ( १ अ० ३१ ) "गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते" इति चम्पूशब्द उपात्तः । तथा यदि गद्यपद्यमयी राजस्तुतिर्भवेत्तदा सा बिरुदशब्देन व्यवहर्तव्येत्यपि तेनैव सूक्ष्मेक्षिकया पर्यालोचितम् । किंच—दण्डिनैवं विशिष्य चम्पूलक्षणे प्रतिपादितेऽपि गद्यपद्यमये नाटकादावतिव्याप्तिमाशङ्कमानो द्वादशशताब्द्यां हेमचन्द्राचार्यः काव्यानुशासने चम्पूलक्षणं परिष्कृत्य—

"गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः" इत्युक्तवान् ।

यथात्र नलचम्प्वामेव कथाविभाजका उच्छ्वासा हरचरणसरोजपदाङ्किता वर्तन्ते । तथाविधोच्छ्वासादियुता गद्यपद्यमयी वाणी चम्पूशब्दव्यवहार्या ।

असौ चम्पूकाव्यनिर्माणप्रणाली वैदिकोपाख्यानभागेभ्यः पालीभाषामयबौद्धजातककथाभ्यः पञ्चतन्त्रहितोपदेशादिसंस्कृतकाव्येभ्यश्च पर्यालोच्य रूपान्तरमानीता प्रतीयते।

यद्यपि हेमचन्द्राचार्येण काव्यानुशासने चम्पूलक्षणं निर्माय सुबन्धुविरचितवासवदत्ता तदुदाहरणत्वेन निरदिश्यत तथापि सर्वे आलङ्कारिकास्तां चम्पूकाव्यतया न व्यवहरन्तीति नलचम्पूरेव सर्वविद्वज्जनानुमता सर्वप्रथमा चम्पूर्मन्तव्या ।

साम्प्रतं संस्कृतसाहित्ये समुपलब्धाश्चम्प्वः पर्यालोचितसमयापर्यालोचितसमयत्वेन द्विधा विभक्ता अस्माभिर्वीरमित्रोदयकर्तृश्रीमन्मित्रमिश्रविरचितानन्दकन्द(३)चम्पूकाव्यस्योपोद्घाते नामतो निर्दिष्टाः । ताश्च सर्वा शताधिकैकत्रिंशत्संख्याकास्तत्रैव विलोकनीयाः ( ३–१२ पृ० ) ।

किंच—बूंदीमहाराजश्रीरामसिंहस(४)मये तदाश्रितमिश्रणाख्यचारणजातिसमुत्पन्नकविशिरोमणिश्रीसूर्यमल्लेन संस्कृतप्राकृतमागधीपैशाचीपिङ्गलडिङ्गलहिन्द्याद्यनेकभाषाभिरुपनिबद्धा वंशभास्कराख्या(५) महाचम्पूर्विविधभाषाविलासिनीरसास्वादरसिकैरवश्यमेव विलोकनीया ।

---

( १ ) यद्यपि "मिश्रं वपुरिति ख्यातम्" इति पाठोऽस्ति प्रकृतपुस्तके, तथापि सोऽपपाठः । अर्थानवधानात् ।

( २ ) बंगाल एशियाटिक सोसाइटीद्वारा १९३३ संवत्सरे राजेन्द्रलालमित्रेण प्रकाशितम् ।

( ३ ) काशिकराजकीयसंस्कृतपुस्तकालयसरस्वतीभवनग्रन्थमालायाः षट्त्रिंशत्–संख्यायां प्रकाशिता ।

(४) १८७८ वैक्रमाब्दीयश्रावणकृष्णद्वादशीदिने श्रीरामसिंहः सार्धनववयस्को राज्येऽभिषिक्तो बभूव । एतस्यात्र कविना १९२७ विक्रमवत्सरान्तमेव चरित्रं चित्रितम् ।

( ५ ) ग्रन्थोऽयं प्रतापप्रेस जोधपुरतः १९५६ वैक्रमाब्दे पं० रामकर्णशर्मदाधिमथमहोदयैः प्रकाशितः । अस्य ग्रन्थस्य दुर्बोधतया बूंदीराजमन्त्रि पं० गङ्गासहायशर्मभिर्हिन्दीभाषया **वंशप्रकाशनाम्ना** संक्षिप्तविषयः प्रकाशितः ।

सेयं चम्पूर्बूंदीमहाराजानामितिवृत्तवर्णनात्मिकापि प्रकाशितानेकगम्भीरविषया द्वादशभी राशिभिः समाप्तुमिष्टापि केनाप्यन्तरायेणान्तरैवाष्टमराशेरवसानं यावद्विरचितेत्यलं प्रसङ्गागतेन । प्रकृतमनुसरामः ।

नलचम्पूपद्यानि—नमिसाधुविरचितायां रुद्रटकृतकाव्यालङ्कारटीकायां सरस्वतीकण्ठाभरणे सदुक्तिकर्णामृते सुभाषितावलौ पद्यावलौ च संप्राप्यन्ते ।

## त्रिविक्रमभट्टस्य रचनासरणिः ।

अयं कविः श्लेषबन्धे परमनिपुणोऽनुदितान्यतुलः सुविदित आसीत् । यद्यपि श्लेषबन्धे वाचः काठिन्यं जायते तथाप्यत्र तदभाव इत्यप्यस्य रचनासरणौ वैलक्षण्यं प्रतिभाति । श्लेषनिबन्धनं च न साधारणमतेः कार्यं तत्र च काठिन्यमपि बोधे जायत इत्युक्तं कविना स्वयमेव प्रथमोच्छ्वासे—

"वाचः काठिन्यमायान्ति भङ्गश्लेषविशेषतः ।
नोद्वेगस्तत्र कर्तव्यो यस्मान्नैको रसः कवेः ।। १६ ।।
काव्यस्याम्रफलस्येव कोमलस्येतरस्य च ।
बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ १७ ॥
भङ्गश्लेषकथाबन्धं दुस्तरं कुर्वता मया ।
दुर्गस्तरीतुमारब्धो बाहुभ्यामम्भसां पतिः ॥ २२ ॥
उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ।। २३ ।।
उदात्तनायकोपेता गुणवद्वृत्तमुक्तका ।
चम्पूश्च हारयष्टिश्च केन न क्रियते हृदि" ।। २४ ।। इत्यादि ।

कविनात्र प्रथमैकत्वबहुत्वयोः ( ९७, ९९, १८८, १९१, २०७, पृष्ठेषु ), स्त्रीक्लीबयोः ( ९९ पृ० ), तृतीयाप्रथमयोश्च पदयोः ( ९९ पृ० ), श्लेषोऽनेकधा निबद्धः । नात्राधिकमालोचयामो ग्रन्थगौरवभिया तत्सर्वं चम्पूग्रन्थ एव विलोकनीयम् ।

अयं कविः—

"उदयगिरिगतायां प्राक्प्रभापाण्डुतायामनुसरति निशीथे श्रृङ्गमस्ताचलस्य ।
जयति किमपि तेजः साम्प्रतं व्योममध्ये सलिलमिव विभिन्नं जाह्नवं यामुनं च" ।।

( ६ उच्छ्वा० १ )

अनेन चम्पूश्लोकेन यमुनात्रिविक्रम इत्याख्यां शिशुपालवधकर्ता माघो घण्टामाघमितीवावापत् । यथा च चण्डपालेनाप्युक्तम्—

"प्राच्याद्विष्णुपदीहेतोरपूर्वोऽयं त्रिविक्रमः ।
निर्ममे विमलं व्योम्नि यत्पदं यमुनामपि" इति ।






## नलचम्पूव्याख्याः ।

नलचम्पूकाव्ये कियत्यष्टीका आसन्निति निश्चयेन वक्तुं दुःशकम् ।

अस्माभिस्तु सप्तैव टीकाः समुपलब्धाः । तद् यथा—

( १ )—अज्ञातकर्तृनाम्नी—( आपेर्टसूचीपत्रे २११ संख्यायां निर्दिष्टा । अस्या विवरणं न प्राप्यते ) ।

( २ )—गुणविनयगणिकृता—( अस्या विवरणमग्रे दास्यते ) ।

( ३ )—चण्डपालकृता विषमपदप्रकाशाख्या—( मुद्रितेयम् ) ।

( ४ )—दामोदरकृता—{ इयं टीका जयपुरराजगुरुश्रीनरहरिशर्मणां सविधे आसीदिति निर्णयसागरीयनलचम्पूभूमिकायां लिखितम् ।

( ५ )—नागदेवकृता—{ डा० बर्नेल सूचीपत्र १९९ ( a ) संख्यायां निर्दिष्टा । विवरणं न प्राप्यते ।

( ६ )—बृहट्टीका—{ जयपुरराजवैद्यश्रीकृष्णरामशर्मणां सविधे आसीदिति निर्णयसागरीयनलचम्पूभूमिकायां लिखितं वर्तते ।

( ७ )—विवृतिनाम्नी टीका—(अस्या निर्देशश्चण्डपालेन १४३ पृष्ठे विहितः) ।

डा० हीरालालमहाशयेन स्वीयसूचीपत्र २१४७ संख्यायां "दमयन्तीकथापुस्तकं टीकापञ्चकसमेतम्" इति लिखितम् । तन्न जाने कास्ताः पञ्च टीकाः । विवरणाप्रदानात् ।

### (क) चण्डपालकृता—विषमपदप्रकाशाख्या व्याख्या ।

प्रा(१)ग्वाटवंशीयो यशोराजतनयश्चण्डसिंहानुजः श्रीलूणिगाद्गुरोरधीती चण्डपालः कस्मिन् काले बभूवेति न निश्चितम् । किन्तु गुणविनयगणिना १६४६ मितं वैक्र(२)मेब्दे (१५८९ ई०) कृतायां दमयन्तीचम्पूवृत्तौ चण्डपालटीकोल्लेखात्प्रतीयते चण्डपालस्य षोडशताब्दीपूर्वभावित्वम् ।

किंच, चण्डपालेन विषमपदप्रकाशे नै(३)षधकाव्यनाम गृहीतम् । अतो नैषधीयकाव्यानन्तरभावीत्यपि वक्तुं युज्यते । नैषधीयकाव्यं च १२४२ ईशवीयाब्दात्पूर्वमेव निर्मितमिति १२४२ ई० वर्षे निर्मितान्मन्त्रिहरीश्वर(४)कृतनैषधकाव्यव्याख्यानादवगम्यते । इत्थं १२४२—१५८९ ई० वर्षाभ्यन्तरे चण्डपाल इति सिद्ध्यति ।

चण्डपालोऽयं जैनः स्वीयटीकायां जैनव्याकरणसूत्राण्येव प्रमाणत्वेनोपन्यस्तवान् । तानि सूत्राणि दूरीकृत्यास्माभिः सर्वोपयोगीनि पाणिनीयव्याकरणसूत्राणि सर्वत्र निहितानि ।

---

( १ ) "श्रीप्राग्वाटकुलाब्धिचन्द्रविशदः श्रीमान् यशोराज इत्यार्यो यस्य पिता प्रबन्धसुकविः श्रीचण्डसिंहोऽग्रजः ।
श्रीसारस्वतसिद्धये गुरुरपि श्रीलूणिगः शुद्धधीः
सोऽकार्षीद्दमयन्त्युदारविवृतिं श्रीचण्डपालः कृती ॥ १ ॥

प्राग्वाटनाम्नोदयपुरप्रान्तैकदेश उच्यते स्मेति म. म. गौरीशङ्कर ओझा महोदयो "राजपूताने का इतिहास" २ पृष्ठेऽलिखत ।

( २ ) बडौदातः १९२३ ई० वर्षे प्रकाशिते जैसलमेरजैनभाण्डागारीयग्रन्थानां सूचीपत्रे ।

( ३ ) १०६ पृष्ठे ।

( ४ ) संस्कृतकविपरिचये नैषधकाव्यटीकावर्णनावसरेऽस्माभिः स्फुटीकृतम् ।

चण्डपालस्य नाम्ना निर्मितिरुपलभ्यते साम्प्रतम् । प्रा(१)कृतलक्षणकर्त्ता चण्डस्तु प्राचीनोऽस्माद्भिन्नश्चेति बुलनर(२) महाशयैरुक्तमेव स्वीकार्यम् । तद्विरोधिप्रमाणाभावात् ।

## एतट्टीकाविवरणम् ।

चण्डपालकृता विषमपदप्रकाशाख्या व्याख्या नाम्नैव स्वल्पाकारतां द्योतयति । अत्र टीकायां प्रथममुपमेयम्, ततश्चोपमानम्, एवं प्रथमं विरोधस्ततस्तस्य सम्यक् परिहार इत्यादिक्रम उपात्तः ।

अत्र विषमपदप्रकाशे १४३ पृष्ठे विवृतिनामकटीकानिर्देशो वर्त्तते । किन्तु नायं विज्ञायते यदियं विवृतिः केन कदा निर्मितेति । चण्डपालेन स्वाग्रजस्य चण्डसिंहस्य चण्डिकाचरितं महाकाव्यं विषमपदप्रकाशे समुल्लिखितम् । यथा—२१ पृष्ठटीकायाम्—

"पुष्पादपामिह सदाधिगमे समृद्ध्याऽपुष्पादपाः फलभराच्च विनम्रभावम् ।
पुष्पादपापि दधतो मुनिवत्सुजन्मा पुष्पादपाति मधु साधु मधुव्रतौघः" ।।

"प्रियत्रिवर्गश्च क्रमे सकामम्" २१३ मिते पृष्ठे च ।

चण्डिकाचरितमहाकाव्यस्य निर्देशो गुणविनयगणिनापि दमयन्तीकथाटीकायां कृत इत्यप्यवधेयम् ।

चण्डसिंहवंशे समुत्पन्नः समरसिंहो हि ताजिक(३)तन्त्रसारे स्ववंशपरम्परामेवाह स्म ।

## चण्डपालीयवंशक्रमः ।

१—यशोराजः
├ २—चण्डसिंहः ।
│ ३—शोभनदेवः ।
│ ४—सामन्तः ।
│ ५—कुमारसिंहः ।
│ ६—समरसिंहः ( ताजिकतन्त्रसारकर्त्ता ) ।
└ चण्डपालः ।

## विषमपदप्रकाशे निर्दिष्टा ग्रन्था ग्रन्थकाराश्चेमे ।

| | |
|---|---|
| काव्यप्रकाशकारः ६ पृ० । | मल्हणः ११३ पृ. । |
| विश्वप्रकाशः १० पृ० । | भवभूतिः १२० पृ० । |
| व्याडिः १० पृ० । | विवृतिटीका १४३ पृ. । |
| अमरः— १७ पृ० । | अभिधानकारः १६८ पृ० । |
| | भरतः—१६३ पृ० । |
| चण्डदासः—२१ पृ० २१३ पृ० । | मेघदूतप्रतीकम्—१६९ पृ० । |

---

( १ ) डा० हार्नेल्, एशियाटिक सोसाइटी १८८० ई०, कलकत्ता ।

( २ )—"इन्ट्रोडेक्सन् टु प्राकृत" १९१७ ई०, कलकत्ता मिशन प्रेस, पृष्ठ—७९ ।

( ३ ) गणकभूषणकर्मप्रकाशनामान्तरे ताजिकतन्त्रसारे समरसिंहेन कर्मप्रकाशिनी टीका निर्मिता ।

कविरहस्यम्- २४ पृ० ।
विश्वः ३१ पृ० ।
मुद्राराक्षसश्लोकः-३१ पृ० ।
प्रशस्तपादः— ६० पृ० ।
अजयः—७७ पृ० ।
नैषधम्—१०६ पृ० ।
चाणक्यः—१०७ पृ० ।
शिवमहिम्नस्तोत्रम् १७३ पृ. ।
माघः-१७६ पृ० ।
मुकुटताडितककर्ता बाणः १८५ पृ०।
धनिकः—१९१ पृ० ।
भारविः—२१३ पृ. ।

## (ख)गुणविनयगणिकृता-दमयन्तीचम्पूवृत्तिः ।

( १६८४-१६१८ ई० )

दमयन्तीचम्पूवृत्तिकारोऽयं गुणविनयपाठकः खरतरगच्छीयजयसोमोपाध्यायस्य शिष्यः प्रमोदमाणिक्यस्य प्रशिष्यो वि. १६७५ वर्षे विमलाचले जिनराजसूरिकृतायामादिनाथप्रतिष्ठायामुपस्थितोऽभवदिति 'एपिग्राफीया' इण्डिकातः ( वा. २ पृ. ६२-६३ ) प्रतीयते ।

हेमविजयगणिना वि० १६३२ वर्षे विरचितस्य (१)विजयप्रशस्तिमहाकाव्यस्य टीकाकारः १६८८ वि. वर्षे समुपस्थितो गुणविजयगणी प्रकृतगुणविजयगणितो भिन्नः । विजयप्रशस्तिटीकाकारस्य गुणविजयस्य गुरुः कमलविजयगणी, दमयन्तीचम्पूवृत्तिकारस्य गुणविजयस्य गुरुर्जयसोम इति कृत्वानयोर्भेदे हेतुः स्पष्ट एव । अयं गुणविनयः (विजयः) खरतगच्छीयमतावलम्बी सन् धर्मसागरोपाध्यायविनिर्मितं तपागच्छीयमण्डनरूपं "उत्सूत्रोद्घटनकुलकं" ग्रन्थं प्रत्याख्यातवान् । अयं सप्तदशशताब्दीमध्यकालीन इत्येतत्पुस्तकनिर्माणसमयपर्यालोचनया प्रतीयते । दमयन्तीचम्पूवृत्तेः सारस्वतीनामिकायाः पर्यवसाने ऐतिहासिको विषयो निर्दिष्ट इति तदुल्लेखमावश्यकं मन्ये ।

## टीकेतिवृत्तम् ।

"श्रीचण्डपालोऽत्र क्रियत्पदानां यद्यप्यनिन्द्यां विवृतिं चकार ।
तथापि तच्छेषपदार्थसार्थप्रकाशनात्तां विवृणोमि चम्पूम्,, ।। (प्रारम्भे) ।

पर्यवसाने तु 'इति वाचनाचार्यश्रीमच्छ्रीप्रमोदमाणिक्यगणितच्छिष्यपण्डितश्रीगुणविनयगणिविरचितायां श्रीत्रिविक्रमभट्टविरचितश्रीदमयन्तीकथाविवृतौ सप्तम उच्छ्वासः समाप्तः, इति ।

"श्रीमत्खरतरगच्छे स्वच्छेऽभूवन्नवाङ्गवृत्तिकराः ।
श्रीमदभयदेवाख्याः पुरा वराचार्यगुणमुख्याः ।। १ ।।
तेषां क्रमेण पट्टे विख्याता लक्षसंख्यगुणदक्षाः ।
रेजुर्जलधिगभीरा श्रीजिनमाणिक्यसूरिवराः ॥ २ ॥
तत्पट्टे विशदप्रभाकरकरस्फूर्जत्प्रतापोद्धुरा
वादप्राप्तजया धरापतिसदः पीठे सदा सुन्दराः ।।
तत्तत्कृत्यविधानतो भुवि चमत्कारं विशां चक्रिरे
चेतःसु प्रथमागमाधिगमतो लब्धप्रतिष्ठाश्रये ।। ३ ।।

---

( १ ) काशीधर्मशर्माभ्युदययन्त्रालयतो मुद्रितमिदं काव्यम् ।

युगप्रधानेषु महाप्रभावश्रियो निधानेषु विशुद्धबुद्धिषु ।।
विराजमानेषु जनेषु तेषु स्तुत्येषु सच्छ्रीजिनचन्द्रसूरिषु ।। ४ ।।
श्रीक्षेमशाखासु सुधातिशायिरसप्रवेशासमवाग्विलासाः ।
श्रीक्षेमराजा भुवि पारिजातफलोपमाः पाठकलक्षिलक्ष्माः ।। ५ ।।
जयन्तु तेषां च वरा विनेयाः सद्भागधेयाः स्वगुणैरमेयाः ।।
चत्वार आसन् विमलप्रबोधा विधेर्नु वेदा इव मूर्तिमन्तः ।। ६ ।।
शिवसुन्दरनामानो विलसत्संवेगकनकतिलकाह्वाः ।
पाठकपदप्रधानाः उभयेऽपि प्राप्तकीर्तिभराः ॥ ७ ।।
सदयोदयास्तृतीयाः सदयाः सततं दयातिलकगणयः ।
वाग्गुरवो वाग्गुरवस्तुर्याः शिष्याश्च विजयन्ते ।। ८ ।।
श्रीमत्प्रमोदमाणिक्यनामधेयाः सुसाधुवृत्तधराः ।
भाग्याभ्यधिकास्तेषां विद्यन्तेऽमी पुनः शिष्याः ।। ९ ।।
चत्वारोऽप्यम्बुधिवद्गम्भीराक्षोभ्यतादिगुणयुक्ताः ।
न च जडसंगतिभाजो भवन्ति येऽस्मिन्महापीठे ।। १० ।।
वाग्गुरुगुणरङ्गाख्या रङ्गद्गुरुभक्तिभाग्दयारङ्गाः ।
श्रीजयसोमाः सोमाननास्तथा क्षेमसोमाह्वाः ।। ११ ।।
तत्र श्रीजयसोमकल्पतरवोऽमेयप्रमाशेमुषी-
शाखालीढवरागमाम्बरतलाः सत्पात्रशोभावहाः ।।
कीर्तिप्राप्तफलाः कलोत्तरकलाः सन्तीह मत्पाठकाः
श्रीमन्तो गुरवोः स्वोदितरसैः संप्रीणितप्राणिनः ।। १२ ।।
तेषां शिष्यो मुख्यो गुणविनयाख्यो विमृश्य शास्त्राणि ।
सत्पाणिनीयहैमानेकार्थोणादिमुख्यानि ।। १३ ।।
श्रीचण्डपालरचितं दुर्गपदप्रकटनैकसितरक्ष्मम् ।
श्रीचम्पूटिप्पणकं पुनः सहार्दं समुपजीव्य ।। १४ ।।
श्रीमद्विक्रमवंशोद्भवसद्विक्रमराजसिंहनृपराज्ये ।
सत्कर्मचन्द्राभिधधीसखधुर्यर्धुर्ये ।। १५ ।।
श्रीमद्विक्रमभूपतेः स्वरसरस्वत्तर्कशक्रप्रमा-
ख्यातायां शरदि प्रमोदविसरभ्राजिष्णुपौराकुले ।
श्रीसेरुन्नकनाम्नि भद्रनगरेऽर्हच्चैत्यशोभाधरे
चक्रे श्रीदमयन्त्युदारचरिते टीकां महार्घां सुधीः ।। १६ ।।
अकबरनृपाधिनृपतौ विजयिनि शरभुवनसम्मिते वर्षे ।
श्रीमल्लाभपुरीयं प्रकाशितपरा पुरा सुधियाम् ।। १७ ।।

इति श्रीचम्पूवृत्तिः समाप्ता । ग्रन्थ सं० ११०० सारस्वतीनाम्नी वृत्तिरिय(१)म्" ।

विक्रमवंशीयराजसिंहाख्ये राजनि कर्मचन्द्राख्ये मन्त्रिणि मुगलवंशीयाकबरे चक्रवर्तिराजनि सति गुणविनयगणिनेयं टीका जैनमन्दिरशोभिते श्रीसेरुन्नकनामनगरे निर्मितेति पूर्वोक्तश्लोकेभ्यः प्रतीयते ।

---

( १ ) इण्डिया आफिस कैटोलाग् ७ भागे ४०५० सं० ।

## गुणविनयगुरुपरम्परा ।

अभयदेवगणी,
|
माणिक्यसूरिः,
|
जिनचन्द्रसूरिः,
|
क्षेमराजः,
|
शिवसुन्दरः, कनकतिलकः, दयातिलकः, वाग्गुरुः
|
प्रमोदमाणिक्यः
|
गुणरङ्गः, दयारङ्गः, जयसोमः, क्षेमसोमः,
|
गुणविनयगणी = ( टीकाकारः )

## गुणविनयगणिकृता(१) ग्रन्थाः—

१—खण्ड(२)प्रशस्तिवृत्तिः—( १६४१ रचनासंवत् ) ।
२—रघुवंशटीका विशेषार्थबोधिका–( १६४६ वि० सं० ) ( राजेन्द्रलालमित्रसूचीपत्र ३०६० सं० ) ।
३—दमयन्तीचम्पूवृत्तिः सारस्वतीनाम्नी—( १६४६ वि० सं० ) ।
४—वैराग्यशतकवृत्तिः–( १६४७ वि० ) ।
५—संबोधसप्ततिकावृत्तिः—( १६५१ सं० ) ।
६—कर्मचन्द्रमन्त्रिवंशप्रबन्धः ( १६५५ ) ( गुर्जराक्षरे ) ।
७—विचाररत्नसंग्रहल्लेखनम् ( १६५७ ) ।
८—लघुशान्तिटीका ( १६५९ सं० ) ।
९—अञ्जनासुन्दरीप्रबन्धः ( १६६२ सं० ) ( गु० ) ।
१०—इन्द्रियपराजयशतकवृत्तिः ( १६६४ ) ।
११—गणसुन्दरीचतुष्पादिका ( १६६५ ) ।
१२—अजितशान्तिवृत्तिः ( जिनवल्लभकृतग्रन्थटीका ) ।
१३—मितभाषिणीवृत्तिः ।
१४—लुम्पमततमोदिनकरचतुष्पादिका ( गु० ) ।

( १ ) एते ग्रन्थाः बडौदातः १९२३ ई० वर्षे प्रकाशिताज्जेसलमेरजैनभाण्डागारीयग्रन्थसूचीपत्रतः संगृहीताः ( २९ पृ० ) ।

( २ ) खण्डप्रशस्तिकाव्यकर्ता रघुनाथकविरिति बीकानेरसूचीपत्रसंख्यायां ५०० मितायां लिखितम् । तत्रैव च पुष्पिकायां 'इति श्रीहनुमत्कृतखण्डप्रशस्तिखण्डनकं संपूर्णम्" इत्यपि प्राप्यते । किन्तु वाराणसीतः प्रकाशिते खण्डप्रशस्तिकाव्ये कर्ता हनुमान् कविरेवेति ज्ञायते । द्रष्टव्यं महीशूरस्थपुस्तकालयमुद्रितग्रन्थसूचीपत्रे १९२२ ई० वर्षे प्रकाशिते ४७ पृष्ठम् ।

१५—सव्वत्थशब्दार्थसमुच्चयः ।
१६—गीतासारटीका ( स्कन्दपुराणान्तर्गतगीतासाराप्राभिधौङ्कारमाहात्म्यटीका ) ।
१७—उत्सूत्रोद्घटनकुलखण्डनम्(१) ।

# उपसंहारः ।

पुस्तकमिदमस्माकं प्रपितामहानां जयपुरराजगुरुकथाभट्टश्रीहरगोविन्दमहोदयानां पुस्तकालये वर्त्तमानं प्राचीनं ग्रन्थमवलम्ब्य प्रकाशितम् । एतस्मिन् ये दृष्टिपातमात्रविज्ञेया मुद्राकरदोषाश्च प्रस्फुरन्ति तान् विद्वांसः स्वयमेवानायासेन जानीयुरिति तानुपेक्ष्यान्ते संशोधनपत्रमपि नियोजितम् ।

तदेतत्सर्वं कार्यं मया स्वर्गीयजोधपुरनरेशश्रीउमेदसिंहजीमहोदयानां चौहानवंशोद्भूतायै श्रीमत्यै द्वितीयमहाराज्यै सादरमर्पितुकामेन तदर्थं च तत्सेवायामभ्यर्थितवता समर्पणादेशेन ताभिरनुगृहीतोऽयं जन इति ताभ्यो मदीयसंरक्षिकाभ्यः श्रीमतीभ्योऽनेके शुभाशीर्वादाः प्रदीयन्ते ।

जयपुरराजकीयशिक्षासचिवान् ( Member for Education, state council, Jaipur ) श्रीमज्जोबनेर ( यौवनपुर ) पुराधीशान् रावबहादुरठाकुरश्रीनरेन्द्रसिंहमहोदयानपि शुभाशीर्वादैः संयोजयामि । येषामनुकम्पयैव लब्धो मया वाराणस्यां शास्त्रालोचनस्यावकाशोऽयम् ।

काशिकगवर्नमैण्टसंस्कृतकालेजाध्यक्षाणां गुरुवरकविराजश्रीगोपीनाथशर्म एम० ए० महोदयानां कृपाकटाक्षलब्धमतिवैशारद्येन मया जयपुरराजकीयसंस्कृतपाठशालाध्यक्षेभ्यो म. म. श्रीगिरिधरशर्मचतुर्वेदिमहानुभावेभ्यः, खिस्ते इत्युपाह्वेभ्यः काशिकगवर्नमैण्टसंस्कृतपुस्तकालयोपाध्यक्षेभ्यः साहित्याचार्यश्रीनारायणशास्त्रिमहोदयेभ्यश्च मदीयानुग्राहकेभ्यः सादरं धन्यवादाः प्रदीयन्ते ।

तथा जोधपुरराजमातृश्रीचौहानजीसमाश्रितेभ्योऽग्रवालवंशावतंसेभ्यः श्रीरामगोपालकामदारमहोदयेभ्यः, काशीस्थबूंदीराजमन्दिरप्रबन्धकेभ्यो बाबूश्रीइन्द्रमल्लायसक्सेनाभ्यश्च सहाकेभ्यो धन्यवादार्पणमपि ममास्ति परमं कर्तव्यम् । एवं काशीस्थविद्याविलासयन्त्रालयसंचालकाभ्यां श्रेष्ठिप्रवराभ्यां जयकृष्णदासहरिदासगुप्तमहोदयाभ्यामपि साधुवादसमर्पणं कर्तव्यताकोटावावेवगाहते । याभ्यामेतादृशि कराले कलिकालेऽपि संस्कृतभारती निषेव्यते ।

यद्यपि मानवहृलभैर्दोषैश्चोद्विग्नः पुरुषो ग्रन्थलेखने समालोचने च निरुत्सहते । तथापि—

"सर्वथा व्यवहर्तव्यं कुतोऽह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः" ॥

इति कविवरभवभूतिसूक्तिप्रोत्साहितोऽयं जनोऽस्मिन् कर्मणि प्रवर्त्तते—

सरस्वतीभवनपुस्तकालयः<br>गवर्नमेण्टसंस्कृतकालेज<br>वाराणसी ।<br>शारदावाहनदिनम्<br>१९८९

विदुषां विधेयो<br>जयपुरराजगुरुकथाभट्टवंशावतंसः<br>**श्रीनन्दकिशोरशर्मा**<br>साहित्याचार्यः ।

---

(१) तपाधर्मसागरोपाध्यायकृतोत्सूत्रोद्घटनकुलकस्य खण्डनात्मकमिदम् । ग्रन्थमिमं गुणविनयः श्रीनव्यनगरे जिनसिंहसूरिप्रेरणया निर्मितवान् ।

# नलचम्पूस्थविषयप्रतिपादनम् ।

## प्रथम उच्छ्वासे ।

( १—३६ पृष्ठानि )

( १ ) पुरातनकविवर्णनम् ( १—६ ) ।
( २ ) कविवंशवर्णनम् ( ७—८ ) ।
( ३ ) आर्यावर्ते निषधदेशः इत्याख्यानम् ( ९—१५ ) ।
( ४ ) निषधभूपनलवर्णनम् ( १६—१९ ) ।
( ५ ) नलमन्त्रिश्रुतशीलवर्णनम् ( २० ) ।
( ६ ) नलोपभोगवर्णनप्रसङ्गे प्रावृड्वर्णनम् ( २१—२५ ) ।
( ७ ) मृगयावनपालकमुखेन सूकरकृतवनविनाशं श्रुत्वा वनगमनोद्यतो नलः ससैन्यो बाहुकसेनापतिनानीतमश्वमारूढवानिति कथनम् ( २६—२७ ) ।
( ८ ) सूकरमृगयावर्णनम् ( २८—२९ ) ।
( ९ ) तत्रैव वने दक्षिणदेशादागतपान्थस्य मुखेन नलनिकटे वार्त्तालापप्रसङ्गे दमयन्तीरूपवर्णनम्, दमयन्तीनिकटेऽपि कश्चित्पान्थस्तत्र नलस्य सौन्दर्यं वर्णयन्नासीदिति वचनानन्तरं पान्थस्य गमनम् ( ३०—३६ ) ।

---

## द्वितीय उच्छ्वासे ।

( ३७—६४ पृ. )

( १ ) किंनरमिथुनगानेनोत्कण्ठितस्य नलस्य वनगमनप्रसङ्गेन तत्सुषमावर्णनम्(३७—४२)
( २ ) वनविहारप्रसङ्गे नलस्य तत्रायातराजहंसग्रहणम् ( ४३—४५ ) ।
( ३ ) हंसकृतनलोपश्लोकनम्, तेन राज्ञ आश्चर्यम्, ततो हंसनिरोधेन कुपिताया हंस्या वक्रोक्तयः । ततो नलः श्लेषवाक्येन हंसीहंसयोः प्रणयकलहं चकारेति वर्णनम् ( ४६--५० ) ।
( ४ ) आकाशवाण्या हंसस्य दमयन्तीप्रलोभनाय दूतत्वप्रतिपादनम् ( ५१ ) ।
( ५ ) हंसं प्रति केयं दमयन्तीति नलस्य प्रश्नः, ततो हंसदत्तदमयन्तीपरिचयः, दक्षिणस्यां दिशि विदर्भदेशे कुण्डिनपुरवर्णनम् ( ५२—५६ ) ।
( ६ ) कुण्डिनाधिपस्य राज्ञो भीमस्य, तत्प्रधानमहिष्याः प्रियङ्गुमञ्जर्याश्च वर्णनम् ( ५७—५९ ) ।
( ७ ) सापत्यकपिकुटुम्बिनीदर्शनेनोत्कण्ठितयोस्तयोरपत्यार्थं महेश्वरप्रसादनम्, चन्द्रिकावर्णनं च ( ६०—६४ ) ।

---

## तृतीय उच्छ्वासे ।

( ६१—८८ पृ. )

( १ ) हरश्चन्द्रमण्डलादवतीर्य प्रियङ्गुमञ्जर्यै पारिजातमञ्जरीं दत्त्वा प्रातस्तव निकटे दमनकमुनिरेष्यति स तवानुग्रहं करिष्यतीति प्रोवाचेति रात्रौ प्रियङ्गुमञ्जर्याः स्वप्नविलोकनम्, प्रातः काले प्रियङ्गुमञ्जरीकृता सवितृस्तुतिः, राज्ञो भीमस्यापि स्वप्ने शङ्करदर्शनम्, पुरोहितेन तयोः स्वप्नयोः फलकथनम् ( ६१—६८ ) ।

( २ ) तव कन्यारत्नमपत्यं भविष्यतीति भीमाय राज्ञे दमनकमुनिवरकथनम् ( ६९—७२ ) ।

( ३ ) कन्यावरप्रदानेनाप्यन्तुष्टायाः प्रियङ्गुमञ्जर्या दमनकमुनिं प्रति वक्रोक्तयः, ततो दमनकमुनेर्महिषीं प्रति श्लेषेण प्रतिवचनम्, दमनकमुनिगमनं च ( ७३—७६ ) ।

( ४ ) राज्ञो भीमस्य स्नानाहारादिवर्णनम् ( ७६—८० ) ।

( ५ ) प्रियङ्गुमञ्जर्या गर्भधारणम्, ततः प्रसववेदनान्ते कन्यारत्नोत्पत्तिः, तस्याः कन्याया दमयन्तीति नामकरणम्, तच्छैशववर्णनं तद्विद्याकलाशास्त्रज्ञानशिक्षावर्णनं तत्तारुण्यवर्णनं च ( ८०—८८ ) ।

---

## चतुर्थ उच्छ्वासे ।

( ८९—११९ )

( १ ) हंसमुखाद् दमयन्तीसौन्दर्यश्रवणेन राज्ञो नलस्यौत्कण्ठ्यम् ( ८९—९० ) ।

( २ ) हंसस्य कुण्डिनपुरे गमनम्, ततो दमयन्तीनिकटे नलगुणवर्णनम्, गौरीमहोत्सवे यान्त्या दमयन्त्या पान्थमुखाच्छ्रुतस्य पुनर्नलस्य स्मरणम् ( ९१—९२ ) ।

( ३ ) हंसं प्रति नलपरिचयविषयको दमयन्तीप्रश्नः । निषधदेशे वीरसेनो राजा हरमपत्यार्थमाराधेति कथनम् । ततो वीरसेनधर्मपत्न्या रूपवत्या गर्भधारणम्, ततः पुत्रोत्पत्तिवर्णनम्, तस्य "नल" इत्याख्याकरणम् ( ९३—९७ ) ।

( ४ ) नलस्य विद्याकलाभ्यासः, तत्तारुण्यवर्णनम्, वीरसेनमन्त्रिणः सालङ्कायनस्य पुत्रः श्रुतशीलो नलस्य मित्रं मन्त्री चेति वचनम् ( ९८—९९ ) ।

( ५ ) एकदा नलः स्वपितुर्निकटे गतस्तन्मन्त्रिणं सालङ्कायनं न प्रणनामेति कुपितस्य सालङ्कायनस्य नलाय श्लेषगर्भो नीत्युपदेशः ( १००—१०९ ) ।

( ६ ) राज्ञो वीरसेनस्य सालङ्कायनीयनीत्युपदेशानुमोदनम्, नलस्य यौवराज्यमहोत्सवव्यतिकरः, वनितासहायस्य राज्ञो वीरसेनस्य वानप्रस्थाश्रमग्रहणं च ( ११०—११९ ) ।

---

## पञ्चम उच्छ्वासे ।

( ११६--१९७ पृ० )

( १ ) एवं हंसो नलगुणानुवादं कृत्वा पुनर्दमयन्तीं प्रति तदीयगुणाकृतमश्रावयत् । ततो दमयन्त्या निषधगमनोद्यतहंसद्वारेण नलाय हारलताप्रेषणम् ( ११६--११९ ) ।

( २ ) गते हंसे दमयन्त्या औत्सुक्यवर्णनम्, हंसस्य नलसमीपगमनम्, हारलतार्पणपर्यन्तं दमयन्तीवृत्तान्तकथनम्, नलाय हारलतार्पणम् , हारलतावर्णनम् , हंसस्य स्वदेशगमनं च ( १२०--१२६ ) ।

( ३ ) नलदमयन्त्योर्विप्रलम्भवर्णनम् , दमयन्तीस्वयंवरोपक्रमः, उदीच्यनरपतिनिमन्त्रणाय प्रस्थितं दूतं प्रति श्लिष्टा दमयन्त्याः सूक्तिः, उत्तरदिशात आगताद् दूतान्नलवृत्तान्तश्रवणं च ( १२७--१३२ ) ।

( ४ ) नलस्य ससैन्यस्य विदर्भदेशगमनवर्णनम्, नलस्य श्रुतशीलप्रदर्शितवनसुषमाविलोकनम् ( १३३--१४० ) ।

( ५ ) नर्मदातीरे सैन्यावासनिर्माणम् ( १४१ ), इन्द्रादिलोकपालागमनम् ( १४२--१४४ ) ।

( ६ ) इन्द्रादीनां दमयन्तीदौत्ये नलनियोजनम् , दमयन्तीमलभ्योत्सुकस्य नलस्य देवदौत्येन चिन्ता, श्रुतशीलस्य तच्चिन्तानिरसनं च ( १४५--१४७ ) ।

( ७ ) श्रुतशीलसहितस्य नलस्यैकान्ते मनोविनोदार्थं गमनम् , तत्र किरातकामिनीदर्शनं च ( १४८--१५२ ), प्रदेशान्तरदर्शनव्याजेन नलस्य किरातकामिनीभ्यः श्रुतशीलद्वारा पराङ्मुखीकरणम् , रेवानदीप्रदेशविलोकनं च ( १५३--१५४ ), नलस्य शिबिरागमनं सन्ध्यावन्दनं च ( १५५--१५७ ) ।

---

## षष्ठ उच्छ्वासे ।

( १५८--१९७ पृ. )

( १ ) प्रातः काले नलकृता नारायणस्तुतिः (१५८--१६१), विदर्भदेशवर्त्मनि पान्थसंम्मेलनम् , दमयन्तीदूतः पुष्कराक्षनामाहं किंनरमिथुनमिदमिदं च लेखपत्रं तया प्रहितमिति तत्पान्थवाक्यम् ( १६२--१६८ ) ।

( २ ) नलस्य दमयन्तीपत्रवाचनम् , पान्थं प्रति तत्कथाप्रश्नश्च, ततो मध्याह्ने सति तत्रैव पयोष्णीतीरे सेनानिवासः ( १६९--१७२ ) ।

( ३ ) पयोष्णीवेलातटस्थमुनिवर्णनम् , ( १७३--१७५ ) ।

( ४ ) दमयन्तीप्रहितकिंनरमिथुनेन सह परिचयः ( १७६--१८० ), किंनरमिथुनगीतम्, रात्रौ पुनः सुन्दरकविहङ्गवागुरिकाख्यकिंनरमिथुनस्य दमयन्तीवर्णनात्मकं गीतम् ( १८१--१८४ ) ।

( ५ ) पुष्कराक्षेण सह कुण्डिनं गच्छतो नलस्य वने गजदर्शनम् , गजवर्णनं च ( १८५--१८८ ), विन्ध्याचलवर्णनम् ( १८९--१९० ), कुण्डिनपुरीयप्रदेशस्थवस्तुवर्णनम् ( १९१--१९७ ) ।

---

## सप्तम उच्छ्वासे ।

(१९८--२३३ पृ.)


(१) नलसमीपे विदर्भेश्वरागमनम्, विनयप्रदर्शनम्, ततो विदर्भाधिपस्य स्वभवने गमनं च (१९८--२०२)।

(२) दमयन्तीप्रहितानां सप्राभृतानां कुब्जवामनकिरातकन्यकानां नलनिकटे आगमनम्, गृहीतकुशलवृत्तानां तासां दमयन्तीनिकटे प्रत्यावर्तनं च (२०३--२०५)।

(३) नलो दमयन्तीनिकटे पुष्कराक्षेण सह पर्वतकं प्रेषितवानिति प्रतिपादनम् (२०५)।

(४) नलस्य सेनायाश्च विविधान्नभोजनवर्णनम् (२०६--२०९)।

(५) कुण्डिनपुरसुषमां विलोकयतो नलस्य निकटे पर्वतकस्य प्रत्यागमनम्, पर्वतककृतं कन्यान्तःपुरवर्णनं दमयन्तीवर्णनं च (२१०--२१६)।

(६) दमयन्ती भवतो देवदौत्यं श्रुत्वा परं विषादमापद्यतेति पर्वतकवाक्यम् (२१७--२१९)।

(७) चन्द्रोदयवर्णनम् (२२०--२२२), पुरन्दरवरप्रदानाददृश्यमानरूपस्य नलस्य कन्यान्तःपुरे दमयन्तीविलोकनम् (२२३--२२४), कन्यान्तःपुरे तत्सखीभिः सह परिहासं कुर्वतो नलस्य कथमियममन्यार्थे प्रार्थ्येतेति नलचिन्ता (२२५--२२९)।

(८) इन्द्रादयो लोकपाला मन्मुखेन त्वां वृण्वन्तीति दमयन्तीं प्रति नलादेशः, दमयन्त्या "देवान् पतित्वे न स्वीकरिष्यामीति" प्रतिवचनम्, नलस्य स्वीयगृहागमनं ग्रन्थसमाप्तिश्च (२३०—२३२)।

(९) टिप्पणीनिर्मातुः परिचयः (२३३)।


---

# नलचम्पूस्थपात्रसूची ।

**पुरुषाः—**

अवसरपाठकद्वयम् = ( राज्ञो भीमस्य नलस्य च सेवकम् ) ।
इन्द्रः = ( दमयन्तीस्वयंवरे समायातः ) ।
कुबेरः = ( ,, ) ।
दण्डपाशिकः = (भीमस्य राज्ञः सेवकः) ।
दमनकमुनिः = ( अस्यैव प्रसादात् दमयन्ती जन्म लेभे ) ।
नलः = ( चरित्रनायकः ) ।
नारदः = ( ऋषिः ) ।
पर्वतकः = ( नलसेवकः ) ।
पान्थः = ( उत्तराशातः समागतः ) ।
पान्थः = ( दक्षिणाशातः समायातः ) ।
पुरुषः = ( दिक्पालानुचरः ) ।
पुरोधाः = ( राज्ञो भीमस्य ) ।
पुष्कराक्षः = ( दमयन्तीदूतः ) ।
प्रतीहारः = ( नलसेवकः ) ।
प्रस्तावपाठकः = ( नलानुयायी ) ।
बाहुकः = ( नलसेनापतिः ) ।
ब्रह्मर्षयः = ( नलाभिषेकार्थमागताः ) ।
भद्रभूतिः = ( नलदौवारिकः ) ।
भीमराजा = ( कुण्डिनपुराधीशो दमयन्तीपिता ) ।
मृगयावनपालकः = ( नलसेवकः ) ।
मुनयः = ( पयोष्णीतीरचारिणः ) ।
मौहूर्त्तिकः = ( राज्ञो वीरसेनस्य ) ।
यमः = ( दमयन्तीस्वयंवरायागतः ) ।
वरुणः = ( ,, ) ।
वीरसेनः = ( निषधाधिपो नलपिता ) ।
वैतालिकः = ( नलसेवकः ) ।
श्रुतशीलः = (सालङ्कायनपुत्रो नलमन्त्री) ।
सालङ्कायनः = ( वीरसेनमन्त्री ) ।
सुन्दरकः = ( दमयन्तीकिंनरः ) ।
सूपकाराः = ( दमयन्तीप्रहिताः ) ।
सूपकाराः = ( भीमस्य राज्ञः सेवकाः ) ।
सोमशर्मा = (स्वयंवरमन्त्रणायोत्तरदिग्गन्ता)
हंसः = ( नलस्य दमयन्तीप्रलोभको दूतः )

**स्त्रियः—**

कक्कोलिका = ( दमयन्तीचेटी ) ।
कलिका = ( ,, ) ।
किरातकामिन्यः = ( नर्मदातीरस्थाः ) ।
कुन्दा = ( दमयन्तीचेटी ) ।
गोपी = ( विदर्भातीरस्था ) ।
गौरी = ( दमयन्तीचेटी ) ।
चकोरी = ( ,, ) ।
चङ्गी = ( ,, ) ।
चन्दना = ( ,, ) ।
चन्द्रप्रभा = ( ,, ) ।
चन्द्रवदना = ( ,, ) ।
चन्द्री = ( ,, ) ।
चम्पा = ( ,, ) ।
दमयन्ती = ( चरित्रनायिका ) ।
नन्दिनी = ( दमयन्तीचेटी ) ।
परिहासशीला = ( ,, ) ।
प्रियंवदिका = ( ,, ) ।
प्रियङ्गुमञ्जरी = ( भीमपत्नी दमयन्तीमाता ) ।
मज्जनकामिन्यः = ( भीमस्य राज्ञः सेविकाः )
मालती = ( दमयन्तीचेटी ) ।
रूपवती = ( वीरसेनभूपपत्नी नलमाता )
लवङ्गिका = ( नलशरीररक्षिका ) ।
लवङ्गी = ( दमयन्तीचेटी ) ।
विहङ्गवागुरिका = (दमयन्तीकिंनरी) ।
सारसिका = ( नलवनपालिका ) ।
सुन्दरी = ( दमयन्तीचेटी ) ।
सूपकाराङ्गनाः = (भीमस्य राज्ञः सेविकाः) ।
हंसी = ( दमयन्तीचेटी ) ।
हंसी = ( नलदूतस्य हंसस्य पत्नी ) ।

**स्त्रीपुरुषोभयम्—**

किंनरमिथुनम् = ( दमयन्त्या नलस्य भीमस्य च राज्ञः सेवकम् ) ।

# अथ भौगोलिकपदसंग्रहः ।


**देशाः—**

| | |
|---|---|
| अङ्गः- | २०२ पृष्ठे । |
| अयोध्या- | २३ पृ० । |
| आर्यावर्त्तः- | ९ पृ० । |
| कङ्गः- | २०२ पृ० । |
| कर्णाटकः- | ९८ पृ० । |
| कलिङ्गः- | २०२ पृ० । |
| काञ्ची- | १७ पृ० । |
| कामरूपः- | १७ पृ० । |
| कुण्डिनपुरम्- | ९९ पृ० । |
| कुन्तलः- | १७ पृ० । |
| कुरुक्षेत्रम्- | १६७ पृ० । |
| गुर्जरः- | ३९ पृ० । |
| त्रिपुष्करः- | ६९ पृ० । |
| नासिक्यः- | १७ पृ० । |
| निषधः- | १३ पृ० । |
| पारसीकः- | ८१ पृ० । |
| प्रभासतीर्थम्- | ८३ पृ० । |
| भोजकटः- | ९९ पृ० । |
| मगधः- | २०२ पृ० । |
| मध्यदेशः- | १७ पृ० । |
| महाराष्ट्रः- | १११, १९० पृ० । |
| लङ्का- | ६ पृ० । |
| लाटः- | १७ पृ० । |
| वङ्गः- | २०२ पृ० । |
| विदर्भः-(बरार) | ९३ पृ० । |
| विन्ध्यस्थली- | १३४ पृ० । |
| विशोपकः- | १७ पृ० । |

**नद्यः—**

| | |
|---|---|
| कावेरी- | १९ पृ० । |
| गोदावरी- | ३२, १११ पृ० । |
| तापी (यमुना)- | १११, १६७ पृ० । |
| नर्मदा-(रेवा) | १११, १३७ पृ० । |
| पयोष्णी- | ९९, १७३ पृ० । |
| मन्दाकिनी (गङ्गा)- | १११ पृ० । |
| वरदा- | १९० पृ० । |
| विदर्भा- | १३१, १९१ पृ० । |

**पर्वताः—**

| | |
|---|---|
| मलयः- | ८२ पृ० । |
| मेरुः- | १९ पृ० । |
| लोकालोकः- | १८ पृ० । |
| विन्ध्याचलः- | १३४ पृ० । |
| हिमवान्- | ९ पृ० । |





सर्वविधपुस्तकप्राप्तिस्थानम्

जयकृष्णदास हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।



श्रीः ।

# नलचम्पूः ।

( दमयन्तीकथा । )

## विषमपदप्रकाशटीकया समेता ।

### प्रथम उच्छ्वासः ।

(१)जयति गिरिसुतायाः कामसंतापवाहिन्युरसि रसनिषेकश्चान्दनश्चन्द्रमौलिः।
तदनु च विजयन्ते कीर्तिभाजां कवीनामसकृदमृतबिन्दुस्यन्दिनो वाग्विलासाः१॥

---

सृष्टिप्रबन्धे चतुराननस्य भावानशेषान्विलसद्विशेषान् ।
विवृण्वती स्वेन वचश्चयेन स्ताद्भारती बोधविवृद्धये वः ॥
शक्तिस्त्रिविक्रमस्येव जीयाल्लोकातिलङ्घनी ।
दमयन्तीप्रबन्धेन सदा बलिमतोदिता ॥
त्रैविक्रमाणि विषमाणि पदानि यानि तेषां प्रकाशमभिनन्दति चण्डपालः ।
यं स्थायिभावघटनात्पटुदृष्टिभाजः संप्राप्य बिभ्रतितरां रसनिर्भरत्वम् ॥
भङ्गश्लेषनिबन्धाः स्युर्गिरः संदेहमन्दिरम् ।
सम्यक्तदर्थनिश्चित्यै निबन्धोऽयं विधीयते ॥
प्रथममुपमेयमस्मिन्नुपमानमतो विचार्यते सम्यक् ।
अविरोधविरोधावपि गम्यावेवं क्रमेणैव ॥
क्वचन विशेषेण मया यथोचितसमासकारकप्रभृति ।
सुगमत्वान्न यदुक्तं तन्मतिमद्भिः स्वयं ज्ञेयम् ॥

---

## — भावबोधिनी । —

वन्दामहे सकलदैवतपूर्वपूज्यं प्रत्यूहपर्वतविदारणवज्रदन्तम् ।
कात्यायनीनयननन्दनमिन्दुचूडं गण्डस्थलीगलदमन्दमदं गणेशम् ॥ १ ॥
प्रणम्य पितरौ तथा गुरुवरान् दयासागरान् कवीनपि पुरातनानमृतसोदरोक्तीन् पुनः ।
त्रिविक्रमविनिर्मितौ नलकथाप्रबन्धेऽधुना करोमि विषमस्थलीविशदटिप्पणीमादरात् ॥ २ ॥
चण्डपालेन विहिता टीका यद्यपि वर्तते ।
तथाऽपि भावबोधिन्याः सार्थक्यं भावबोधनात् ॥ ३ ॥

(१) सर्वविद्याधिपं शिवमेव वर्णयिष्यमाणकविवाग्विलासप्रयोजकं कलयन्नादौ तमेव

जयति मधुसहायः सर्वसंसारवल्लीजननजरठकन्दः कोऽपि कन्दर्पदेवः ।
तदनु पुनरपाङ्गोत्सङ्गसंचारितानां जयति तरुणयोषिल्लोचनानां विलासः ।२।

(१)अगाधान्तःपरिस्पन्दं विबुधानन्दमन्दिरम् ।
वन्दे रसान्तरप्रौढं स्रोतः सारस्वतं वहत् ॥ ३ ॥

सूक्ष्मार्थाः प्रस्फुरिष्यन्ते कुशाग्राग्र्यधियां स्वतः ।
तद्व्याख्योपेक्षिता प्रायः संक्षेपाय ततो मया ॥

सकलमङ्गलकारणं दुरितनिवारणमभिधेयोपयोगि चावश्यमेवशास्त्रादौ कविना किमपि प्रणेयं तदेतन्मनसि कृत्वाभीष्टदेवताप्रणतिपूर्वकमेव समारब्धव्यमिति पूर्वाचार्यप्रणीतसमाचारमर्यादानुल्लङ्घनः सूक्तजलनिधिरपि जडैरलब्धमध्यो विचित्रपदपङ्क्तिसरित्पाथोवीचिसंघट्टः श्रीत्रिविक्रमभट्टः प्रतिपादनीयसर्वरसकथोपक्रमे सदाशृङ्गारत्वादिन्द्रादीनेकान्तशान्तत्वाद्वीतरागप्रभृतीनपहाय सर्वरसात्मकं परमेश्वरं शंकरमेव प्रणुवन्नाह—जयतीत्यादि ॥ हैमवत्याः संबन्धिनि कामसंतापवाहिनि कंदर्पदेवपीडां दधान उरसि चान्दनो रसनिषेक इव संतापापहरणाद्रोहणद्रुमरसाभिषेक इव योऽसौ भगवांश्चन्द्रमौलिः सुधांशुशेखरः स जयति सर्वोत्कृष्टो भवति। 'सर्वोत्कृष्टश्च सर्वेषां नमस्यः स्यात्' इति नमस्कारः प्रतीयते । नमस्कारेण च प्रबन्धकर्तृव्याख्यातृश्रोतॄणामिष्टफलसंपत्तिः । रसा निषिच्यन्तेऽस्मिन्निति रसनिषेको रसाधार इत्यप्येकदेशेन प्रतिपत्तव्यम् । रसाश्च शृङ्गारादयः । तांश्च कवय एव व्यक्तीकर्तुं प्रभवन्ति । अतस्तदनु रसाधारस्य भगवतः पश्चाद्रसव्यक्तिनिमित्तानां कवीनां वाल्मीकिव्यासकालिदासप्रभृतीनां निरन्तररसाविष्कारिणो वाग्विलासा विजयन्ते ॥ अत्र च पूर्वार्धेन वक्ष्यमाणप्रबन्धार्थोऽपि सूच्यते । गिरिर्भीमनृपः । 'गिरिर्भीमनृपे सूर्ये स्वभावे पर्वते जले' इत्युक्तेः । तस्य सुताया दमयन्त्या दुर्वारस्मारविकारसंतप्त उरसि नलश्चन्दनरसनिषेको भविष्यति । स च चन्द्रवंश्यानां मौलिर्मुकुटायमान इति ॥ १ ॥

स किंसहायः किंमूलः किमुपकरणश्च कामो यो जगतः शिवतातिभ्यां शिवाभ्यामपि स्वीकृत इत्याह—जयतीति ॥ कोऽप्यद्भुतवैभवः कंदर्पदेवो जयति । किंभूतः । मधुसहायो वसन्तसखः । नहि सखायमन्तरेण कश्चिन्महाकार्यकरणाय प्रवर्तते । तथा सर्वस्याः संसारवल्ल्या उत्पादनाय कठिनकन्दः । कठिनकन्दाद्यविच्युता वीरुद्वृद्धिः । कंदर्पदेवादनन्तरं पुनःपुनर्नेत्रापाङ्गप्रदेशक्रोडे कामुकजनलक्ष्यीकरणाय प्रवर्तितानां नववयःसुन्दरीनेत्राणां कटाक्षादिविभ्रमो जयति ॥ २ ॥

अथ यदवाचि 'तदनु च विजयन्ते वाग्विलासाः' इति तद्गुणानेव श्लोकत्रयेणाह—अगाधेति ॥ सरस्वती भारती नदीविशेषश्च । तस्या इदं सारस्वतम् । स्रोतः प्रवाहं

---

स्तौति—*जयतीति* । पार्वत्याः कामोष्मपरितप्ते वक्षसि चन्दनरसनिषेक इव शीतलाङ्गश्चन्द्रमौलिर्गङ्गाधरः शिवो जयति । तदनु=तत्कृपाप्रसादप्राप्तेरनन्तरमित्यर्थः । प्रख्यातनाम्नां कवीनां शश्वत् अमृतबिन्दुमुचो वाचां विलासा अपि जयन्ति । अत्र चन्द्रमौले रसनिषेकात्मतावर्णनेन सकलरससामरस्यं तत्र सूचितम् ।

(१) सारस्वतं स्त्रोतो वन्दे इत्यन्वयः । सरस्वतीनद्याः प्रवाहं, पक्षे वाक्स्वरूपायाः सरस्वत्या नैरन्तर्यक्रमं च ।

(१)प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः॥ ४॥
किं कवेस्तेन काव्येन किं काण्डेन धनुष्मतः।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः॥ ५॥
(२)अप्रगल्भाः पदन्यासे जननीरागहेतवः।
सन्त्येके बहुलालापाः कवयो बालका इव॥ ६॥

वन्दे नमस्कुर्वे स्तुवे वा। नदीपक्षे प्रवाहस्य तद्धर्मत्वाच्च किंचिद्दुर्घटम्। परं भारतीपक्षेऽन्यधर्मस्यान्यत्रारोपलक्षणसमाधिना गिरां नैरन्तर्येऽपि स्रोतःशब्दः। यथा 'उन्मिमील कमलं सरसीनां कैरवं च निमिमील मुहूर्तात्' इत्यत्रोन्मीलननिमीलने नेत्रधर्मावपि कमलकुमुदयोरारोपिते। किं कुर्वत्। वहत्प्रवर्तमानम्। पक्षे प्रसरत्। तथा अगाधो महार्थतयालब्धमध्योऽन्तर्मध्ये प्रकरणान्मनसि परिस्पन्दश्चमत्कारी स्फूर्तिविशेषो यस्य। पक्षेऽगाधो गम्भीरोऽन्तर्मध्ये परि समन्तात्स्पन्दश्चलनमावर्तविशेषो यस्य तथा। विबुधानां देवानां पण्डितानां वा हर्षस्थानम्। भारतीविलासेन हि सुराणामपि प्रमोदः संपद्यते। पक्षे वीनां पक्षिणां मध्ये बुधा राजहंसास्तेषां हर्षस्थानम्। तथा रसानां शृङ्गारादीनामन्तरेण विशेषेण प्रौढं प्रगल्भम्। पक्षे रसाया भूमेरन्तरे मध्ये प्रवहति स्म। कर्तरि क्तः। सरस्वती किल म्लेच्छदेशे न्यग्भूय तदन्ते पुनरुद्भवतीति लोकश्रुतिः॥ ३॥

प्रसन्ना इति॥ कीदृश्यो वाचः। नानानेकधा प्रसन्नाः प्रसादगुणोपेताः। शब्दगुणः प्रसाद ओजोमिश्रितशैथिल्यात्मा। अर्थगुणस्तु प्रसादो वैमल्यं झटित्यवबोधगोचरत्वम्। तथाच काव्यप्रकाशकारः—'श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत्। साधारणः समग्राणां स प्रसादो गुणः स्मृतः'॥ इति। यद्वा प्रसन्नाः समासरहिताः। उक्तं च—'माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः। समासवन्ति भूयांसि न पदानि प्रयुञ्जते॥' इति। तथानेकधा कान्तिगुणेन हर्तुं मनो वशीकर्तुं शीलं यासाम्। शब्दगुणः कान्तिरौज्ज्वल्यम्। ग्राम्यादिभिरनभिप्रयुक्तत्वमिति यावत्। अर्थगुणस्तु कान्तिर्दीप्तरसत्वम्। तथा नाना शब्दगुणार्थगुणार्थालंकारशब्दालंकाररूपं चतुर्विधं श्लेषं विशेषेण चक्षते याः। शब्दगुणो मसृणत्वं श्लेषः। अर्थगुणस्तु श्लेषो घटना। शब्दकृतः शब्दालंकारः श्लेषः। अर्थकृतस्तु श्लेषोऽर्थालंकारः। स्त्रियस्तु प्रसन्नास्तोषान्विताः। तथा कान्त्या वपुषो गुणविशेषेण मनोज्ञाः। तथा नानानेकविधे स्पृष्टक-विद्धक-उद्घृष्ट-पीडन-लतावेष्टक-वृक्षाधिरूढ-तिलतण्डुल-क्षीरनीर-ऊरूपगूढ-जघनोपश्लेष-स्तनालिङ्गन-ललाटिका-रूपे द्वादशविधआलिङ्गने विचक्षणा दक्षाः॥ ४॥ ५॥

अथ कुकविनिन्दाव्याजेन विपरीतगिरामग्राह्यत्वमाह—अप्रगल्भा इति॥ एके कवयो बालका इव सन्ति। किंभूताः कवयः। पदानां सुप्तिङन्तरूपाणां न्यासे नैयत्यप्रयोगेऽप्रगल्भा अनिपुणाः। तथा जनानां विदुषां नीरागे रागाभावे हेतवः कारणम्। नहि

(१) अत्र वाचः स्त्रिय इव, स्त्रियो वाच इवेति परस्परमुपमानोपमेयभावोऽपि।
(२) एके कवयो बालका इवेत्यन्वयः।

अक्षमालापवृत्तिज्ञा कुशासनपरिग्रहा ।
ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला ॥ ७ ॥
(१)रोहणं सूक्तरत्नानां वृन्दं वन्दे विपश्चिताम् ।
यन्मध्यपतितो नीचः काचोऽप्युच्चैर्मणीयते ॥ ८ ॥
(२)अत्रिजातस्य या मूर्तिः शशिनः सज्जनस्य च ।
क सा वै रात्रिजातस्य तमसो दुर्जनस्य च ॥ ९ ॥
निश्चितं ससुरः कोऽपि न कुलीनः समेऽमतिः ।

तादृशं काव्यं श्रुत्वा रसिकानां कश्चिच्चमत्कारः संजायते । तथा बहुल आलापो येषाम् । एतेन निःसारवक्तृत्वोक्तिः । बालकास्तु पदन्यासे चरणक्षेपेऽनिपुणाः । तथा जनन्या मातृ रागहेतवोऽनुरागकारणम् । तथा बह्वीर्लाला निष्ठीवनजलानि पिबन्तीति बहुलालापाः । यद्वा बह्वयो लाला अप्स्वरूपा येषु ॥ 'ऋक्पूः–' इति सूत्रेण समासान्तः ॥ ६ ॥

कारणं विनापि केचित्परोत्कर्षमसहिष्णवः । ततस्तानेव क्षुद्रान्काव्यप्रवृत्तिभङ्गहेतूञ्छब्दमात्रेण गौरवयन्नाह—अक्षेति ॥ दुष्टानां कृत्याकृत्यभव्याभव्यविशेषविवेकविकलानां जनानामियं दौर्जनी संसत्सभा वन्दनीया नमस्कार्येत्युपहासवाक्यम् । श्लेषतस्तु वन्दे गुप्तौ करणीया वन्दनीया । केव । ब्रह्मणां विप्राणामियं ब्राह्मी द्विजसभेव । यथा द्विजसभा वन्द्यते तथा दुर्जनसंसदपि वन्द्या । किम्भूता दौर्जनी । अक्षमया रुषा संभाषणस्य वृत्तिं जानाति कोपोल्लापयुग्वाक्प्रसरा । तथा कुशासनस्य कुत्सितशिक्षणस्य स्वीकारो यस्याः । तथा समे साधावपि खला प्रतिपक्षभूता । द्विजसभा त्वक्षमालाया भ्रमणं जानाति या । तथा दर्भासनस्य स्वीकारो यस्याः । तथा मेखलया मौञ्ज्या सहिता ॥ ७ ॥

रोहणमिति ॥ सुभाषितान्येव रत्नानि तेषां प्रशस्तरत्नानां वा रोहणमुत्पत्तिस्थानं माणिक्यशैलो वा । 'कच बन्धे' कच्यन्तेऽर्था अनेनास्मिन्वा काचः प्रबन्धः सारमुद्रिकारश्च । विपश्चितो ह्येतादृशमपि प्रबन्धं व्याख्यानप्रागल्भ्यादनुगृह्योत्कर्षं लम्भयन्ति ॥ ८ ॥

आस्तां सज्जनदुर्जनयोः शीलेन साम्यम् । यावन्मूर्त्यापि महदन्तरमिति निरूपयन्नाह—अत्रीति ॥ अत्रिमुनिजातस्य शशाङ्कस्य न त्रिभिर्जातस्य सज्जनस्य च या मूर्तिः सर्वाभीष्टा सा वै स्फुटं रात्रिजातस्य तमसस्त्रिजातस्य दुर्जनस्य च क । यतो दुर्जनस्य वैरा वैरप्रधाना । सज्जनस्य त्ववैरा ॥ ९ ॥

निश्चितमिति ॥ सुष्ठु रसाः शृङ्गारादयो यत्र तथा बद्धं रचितं काव्यं ग्रन्थं यो नाभिनन्दति स निश्चितं ध्रुवं ससुरो मद्यपः कोऽपि । नच कुलीनः नाभिजातः । सर्वथा

(१) रोहणाद्रौ रत्नानि सम्भवन्तीति प्रसिद्धिः ।

(२) श्लेषेण सज्जनदुर्जनयोः साम्यमस्तु, स्वरूपेण तु महदन्तरमस्तीत्याह—*अत्रीति* । अत्रिमुनिसंभूतस्य चन्द्रस्य, एवं त्रिभिर्न जातस्य एकस्मादेवोत्पन्नस्य सज्जनस्य च या मूर्तिः सर्वप्रिया सा वै निश्चयेन रात्रिजातस्य तमसः त्रिभिर्जातस्य अनिश्चितजनकस्य दुर्जनस्य च क ? तत्राऽयं भेदः—दुर्जनस्य मूर्तिः वैरा=वैरप्रधाना ।। सज्जनस्य च अवैरा=मैत्र्यात्मिका ।

सर्वथासुरसंबद्धं काव्यं यो नाभिनन्दति ॥ १० ॥
(१)सदूषणापि निर्दोषा सखरापि सुकोमला ।
नमस्तस्मै कृता येन रम्या रामायणी कथा ॥ ११ ॥
(२)व्यासः क्षमाभृतां श्रेष्ठो वन्द्यः स हिमवानिव ।
सृष्टा गौरीदृशी येन भवे विस्तारिभारता ॥ १२ ॥
(३)कर्णान्तविभ्रमभ्रान्तकृष्णार्जुनविलोचना ।
करोति कस्य नाह्लादं कथा कान्तेव भारती ॥ १३ ॥

समे साधावमतिः । असुरैः संबद्धं मिलितं काव्यं भृगुं यो न नन्दति स छरो देवः कोऽपि । तथा न कौ भूम्यां लीन आश्लिष्टः स्वर्ग एव तस्यावस्थानात्। तथा मा लक्ष्मीः, इः कामः, ताभ्यां सहितः समेर्विष्णुस्तत्र सेवनाय मतिर्यस्य । विष्णुपक्षीय इति भावः ॥ १० ॥

संप्रति वाग्विलासाधारानुदारान्वाल्मीकिप्रभृतीन्कतिचित्कवीन्वर्णयन्नाह—सदूषणेति अपिर्विरोधे । स च दूषणखरयोर्दोषार्थकठिनार्थकत्वे भवेत् । परिहारस्तु दूषणखरौ राक्षसौ यत्र वर्णितौ । इहानुक्तोऽपि वाल्मीकिः प्रतीयते । 'प्रौढविशेषणयोगाद्विशेष्यप्रतिपत्तिः' इति वचनात् । किं चासौ भगवान्मर्त्यलोके काव्यसृष्टिप्रथमवेधा निरुपमरमणीयरामायणनिर्माणप्रवीणतयैव निर्दिश्यमानः प्रकृष्यते । नत्वितरसाधारणसंज्ञामात्रनिर्देशेन । अत एव कवितोत्कर्षचमत्कृतेन वाक्यसमाप्तिं प्रतीक्षितुमक्षमेण त्रिविक्रमेण वाक्यगर्भेऽपि तस्मै नम इति भक्तिप्रकर्षप्रकाशनमुक्तम् । अर्धयोर्व्यत्यासपाठे तु गर्भितदोषशङ्कैव न स्यात्॥११॥

व्यास इति ॥ स कृष्णद्वैपायनो वन्द्यः। किंभूतः । क्षान्तानां मध्येऽतिशयेन प्रशस्यः। तथा येनेदृशी सर्वत्र विख्याता विस्तरणशीलं भारतं यस्यां सा भवे संसारे गौर्वाक्सृष्टा । क इव ।हिमवानिव । किंभूतः सः। क्षमाभृतां भूभृतां श्रेष्ठः । तथा येन भवे शिवे रतानुरक्तैवंभूता गौरी सृष्टा । किंभूता । विस्तारिणी भा कान्तिर्यस्याः ॥ १२ ॥

कर्णेति ॥ कर्णस्य राधेयस्यान्ते विनाशे सति विभ्रमेण विस्मयेन वेगैरुडस्य भ्रमेण वाऽतिलाघवेन भ्रान्ता विचरितुं प्रवृत्ताः कृष्णपार्थधृतराष्ट्रा यस्याम्। केव । कान्तेव। किंभूता । श्रवणपर्यन्ते विलासेन भ्रान्ते स्फुरिते कृष्णार्जुने श्यामधवले विलोचने नेत्रे यस्याः१३

(१) विरोधाभासेन वाल्मीकिं स्तौति--*सदूषणेति* । दूषणं दोषः तेन सहिताऽपि निर्दोषेति विरोधः। पक्षे दूषणाख्येन रक्षसा सहितेति विरोधपरिहारः। एवमेव सखरेत्यत्राऽपि ।

(२) व्यासहिमवतोः साम्यम् । क्षमाभृतां=पर्वतानां पक्षे क्षमाशीलनाम् । व्यासपक्षे--येन व्यासेन भवे=संसारे विस्तारि भारतं यस्याः ईदृशी गौर्वाक् सृष्टा । हिमवत्पक्षे येन हिमवता । भवे=शिवविषये विस्तारिण्यां भार्यां कान्तौ रता, ईदृशी गौरी नाम कन्या सृष्टेत्यर्थः ।

(३) कान्तेव भारती कथेति कान्ताभारतकथयोः साम्यम् । तत्र कान्तापक्षे—कर्णान्तयोः श्रवणप्रान्तयोर्विभ्रमेण विलासेन भ्रान्ते चञ्चले कृष्णार्जुने नीलश्वेतच्छवी विलोचने यस्याः । भारतकथा पक्षे—कर्णस्य अन्तकाले निधनसमये यो विभ्रमः विशेषेण भ्रमः ब्राह्मणशापवशाद्विद्याविस्मरणम्, तत्र तद्दर्शनप्रसङ्गे भ्रान्ते भ्रमणशीले कृष्णार्जुनयोर्वासुदेवधनञ्जययोर्लोचने यस्यां सा ।

शश्वद्बाणद्वितीयेन नमदाकारधारिणा।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥ १४ ॥
इत्थं काव्यकथाकथानकरसैरेषां कवीनाममी
विद्वांसः परिपूर्णकर्णहृदयाः कुम्भाः पयोभिर्यथा।
वाचो वाच्यविवेकविक्लवधियामीदृग्विधा मादृशां
लप्स्यन्ते क्व किलावकाशमथवा सर्वंसहाः सूरयः ॥ १५ ॥
वाचः काठिन्यमायान्ति भङ्गश्लेषविशेषतः।
नोद्वेगस्तत्र कर्तव्यो यस्मान्नैको रसः कवेः ॥ १६ ॥
काव्यस्याम्रफलस्येव कोमलस्येतरस्य च।
(१)बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ १७ ॥

अस्ति समस्तमुनिमनुजवृन्दवृन्दारकवन्दनीयपादारविन्दस्य भगवतो विधेर्विश्वव्यापिव्यापारपारवश्यादवतीर्णस्य संसारचक्रे क्रतुक्रियाकाण्डशौण्डस्य शाण्डिल्यनाम्नो महर्षेर्वंशः ॥ क ॥

श्रूयन्ते च यत्र श्रवणोचिताश्चन्दनपल्लवा इव केचिदनूचानाः शुचयः सत्यवाचो विरञ्चिवर्चसोऽर्चनीयाचारा ब्रह्मविदो ब्राह्मणाः। पुण्यजनाश्च नच ये लङ्कापुरुषाः, ससूत्राश्च नच ये लम्पटाः, प्रसिद्धाश्च नच ये लम्पाकाः, कामवर्षाश्च नच ये लङ्घनाः सन्मार्गस्य, नववयसोऽपि नच ये लम्बालकाः,

शश्वदिति ॥ बाणः कविः शरश्च। गुणाढ्यकविर्बृहत्कथाकारो गुणेन ज्यया युक्तश्च। न मदाकारं स्तब्धत्वादिरूपं धरतीत्येवंशीलः कविः। बाणकर्षणाय नमदाकारं धरतीत्येवंशीलं धनुः। रञ्जितः प्रमोदं प्रापितः। अरमत्यर्थं जितो जनः प्रतिपक्षलोकश्च ॥ १४ ॥

इत्थं कविवर्णनं संक्षिपन्नाह—इत्थमिति ॥ तर्हि कथाग्रथनप्रयत्नेन किमित्याह—अथवेति ॥ १५ ॥

भङ्गश्लेषमुक्तिविशेषेण संवृण्वन्नाह—वाच इति ॥ यतो हेतोः कवेः काव्यकर्तुर्नैको रसो नैका रुचिः प्रसत्तिलक्षणा व्युत्पत्तिलक्षणाप्यस्ति ॥ १६ ॥

ननु प्रसत्तिमार्गेण कोमलमेव काव्यं निबद्ध्यताम्, किमितरेण व्युत्पत्तिमार्गेण भङ्गश्लेषकृतकाठिन्येनोद्वेगहेतुनेत्यत आह—काव्यस्येति ॥ कोमलस्य प्रसन्नस्येतरस्य व्युत्पन्नस्य काव्यस्य रचनाचारुत्वेन रसोऽपि शृङ्गारादिरसोऽप्यन्यादृशोऽन्यरूपो व्युत्पत्तिचर्यया सोत्कर्ष इव स्यात्। कस्येव। आम्रफलस्येव। यथाम्रफलस्याकारवैसादृश्यं बन्धस्य वृन्तस्य नीलपीतादिच्छायायाश्च विशेषेण यावद्रसः सस्वादोऽप्यन्यादृग्भवति। बध्यतेऽनेनेति कृत्वा बन्धो वृन्तं फलारम्भकरसकणिकारूपो वा। काव्यपक्षे बन्धो रचना॥१७॥क॥

श्रूयन्त इति ॥ यत्र महर्षेर्वंशे ईदृशा ब्राह्मणाः श्रूयन्त इत्यन्वयः। कीदृशाः। श्रवण आकर्णन उचिता योग्याः। पुण्यरूपत्वात्। चन्दनपल्लवास्तु श्रवणयोः कर्णयोरवतंसीकरणाय योग्याः। पुण्यजना यातुधाना लङ्कावासिनो नेति विरोधः। पुण्याः पवित्रा

(१) बन्धः=पदरचनाकौशलम्, वृन्तं वा, छाया=अर्थप्रतिष्ठाविशेषो, वर्णो वा।

महाभारतिकाश्च नच ये रङ्गोपजीविनः, सेविताप्सरसोऽपि नच ये रम्भयान्विताः ॥ ख ॥

किं बहुना ।

जानन्ति हि गुणान्वक्तुं तद्विधा एव तादृशाम् ।
वेत्ति विश्वंभरा भारं गिरीणां गरिमाश्रयम् ॥ १८ ॥

तेषां वंशे विशदयशसां श्रीधरस्यात्मजोऽभू-
द्देवादित्यः स्वमतिविकसद्वेदविद्याविवेकः ।
उत्कल्लोलां दिशि दिशि जनाः कीर्तिपीयूषसिन्धुं
यस्याद्यापि श्रवणपुटकैः कूणिताक्षाः पिबन्ति ॥ १९ ॥

तैस्तैरात्मगुणैर्येन त्रिलोक्यास्तिलकायितम् ।
तस्मादस्मि सुतो जातो जाड्यपात्रं त्रिविक्रमः ॥ २० ॥

सोऽहं हंसायितुं मोहाद्बकः पङ्गुर्यथेच्छति ।
मन्दधीस्तद्वदिच्छामि कविवृन्दारकायितुम् ॥ २१ ॥

भङ्गश्लेषकथाबन्धं दुष्करं कुर्वता मया ।
दुर्गस्तरीतुमारब्धो बाहुभ्यामम्भसां पतिः ॥ २२ ॥

उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ २३ ॥

---

जना लोका अलमत्यर्थं न कापुरुषा इति विरोधपरिहारेण ब्राह्मणाः प्रशस्यन्ते । एवमग्रेऽपि । तथा सूत्रेण तन्तुना सहिता अप्यत्यन्तं पटाभाववन्तः । सूत्रेणोपवीतेन वेदपाठेन वा युक्ता अपि न लम्पटा लालसाः । तथा प्रकर्षेण सिद्धा अग्निसंस्कारे निष्ठां प्राप्ता अपि पूपाद्यास्ते कथमलं न पच्यन्ते स्म । प्रसिद्धा विख्याता न लम्पाका लम्पटाः । तथा कामवर्षिणोऽपि नालं मेघाः । अभिलषितदातारोऽपि सन्मार्गस्य लङ्घना न । तथाल्पावस्था अपि नालं शिशवः । तरुणावस्था अपि न दीर्घकेशाः । अग्निहोत्रित्वात् । तथा महान्तो नटा अपि न नृत्यभूम्युपजीविनः । महान्तो भारताख्यायका अपि नात्यर्थं गोपान्नृपाज्जीवन्ति । 'राजान्नं तेज आदत्ते' इति दोषश्रवणात् । तथा भुक्तदेवाङ्गना अपि नं रम्भया युताः । सेवितानि जलप्रधानानि सरांसि यैस्तथाविधा अपि नच येऽरमत्यर्थं भयान्विताः ॥ ख ॥ १८ ॥

तेषामिति ॥ कूणिताक्षाः सुखात्किंचिन्निर्मीलितनेत्राः ॥ १९ ॥ २० ॥

सोऽहमिति ॥ मोहादज्ञानाद्गतिमानपि बकः स्वभावसुभगगतेर्हंसस्यापेक्षया पङ्गुः अथवा दैवात्कथंचिद्भग्नचरणत्वाद्बकः पङ्गुः ॥ २१ ॥

भङ्गेति ॥ यथा बाहुभ्यां दुस्तरः समुद्रस्तथा भङ्गश्लेपकथाबन्धोऽपि दुष्कर इत्यौपम्याद्वस्तुसंबन्धः । 'अभवन्वस्तुसंबन्ध उपमा परिकल्पकः' इति ॥ २२ ॥

उत्फुल्लेति ॥ दुष्टमुखैः क्रियमाणत्वादालापा अपि दुष्टा निन्दाकराः ॥ 'उल्लापाः' इति पाठे काकुभाषितानि ॥ दुर्मुखैः स्वैरं क्रियन्ते । गल्लशब्दो ग्राम्योऽप्यत्र दुर्मुखानाम-

(१)संगता सुरसार्थेन रम्या मेरुचिराश्रया ।
नन्दनोद्यानमालेव स्वस्थैरालोक्यतां कथा ॥ २४ ॥
उदात्तनायकोपेता गुणवद्वृत्तमुक्तका ।
चम्पूश्च हारयष्टिश्च केन न क्रियते हृदि ॥ २५ ॥

अस्ति समस्तविश्वंभराभोगभास्वल्ललामलीलायमानः, समानः सेव्यतया नाकलोकस्य, ग्राम्यकविकथाबन्ध इव नीरस(२)स्य मनोहरः, भीम इव भारतालंकारभूतः, कान्ताकुचमण्डलस्पर्श इवाग्रणीः सर्वविषया(३)णाम्, (४)अनधीतव्याकरण इवादृष्टप्रकृतिनिपातोपसर्गलोपवर्णविकारः, पशुपति-

कवीनां ग्राम्याणां निन्दाभिधाने प्रयुक्तः समुचित एव ॥ २३ ॥

संगतेति ॥ रुचिरो रम्य आश्रयो नलोपाख्यानलक्षणो यस्याः सेयं मम स्वस्थैरव्यग्रैरालोक्यतां विमृश्यताम् । स्वस्थे चित्ते बुद्धयः संचरन्ति । किंभूता । शोभनो रसः शृङ्गारादिर्यत्र तथोक्तेनार्थेन संगतोचिता । औचित्यं हि रसस्य परमरहस्यम् । उक्तं च—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धो हि रसस्योपनिषत्परा ॥' तथा रम्या भङ्गश्लेपोक्तिभिर्मनोहरा । पक्षे स्वः स्वर्गे तिष्ठन्तीति कृत्वा स्वस्थैः स्वर्गवासिभिः ॥ "खर्परे शरि वा विसर्गलोपः" ॥ किंभूता । सुराणां सार्थो वृन्दं तेन संगता कृतसङ्गा । तथा मेरुः सुरगिरिश्चिरमाश्रयो यस्याः ॥ २४ ॥

उदात्तेति ॥ उदात्तेन महात्मना नायकेन नलेनोपेता । तथौजःप्रसादादिगुणयुक्तं वृत्तं छन्दोबद्धं मुक्तकं गद्यात्मकं च यस्यां सा चम्पूर्गद्यमयी साङ्कोच्छ्वासा कथोदात्तेन महार्घेण नायकेन हारमध्यरत्नेनोपेता । तथा तन्तुमत्यो वृत्तमुक्ता वर्तुलमौक्तिकानि यस्यां सा मुक्ताहारलता च केन चित्ते वक्षसि च न क्रियते ॥ २५ ॥

अस्तीति ॥ 'आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥' इति मनूक्तलक्षण आर्यावर्तो नाम प्रसिद्धो देशोऽस्ति । किंभूतः । नीरेण धान्येन च मनोज्ञः । पक्षेऽरसिकस्य मनोज्ञः । तथा भरतवर्षस्य मण्डनभूतः । पक्षे भारतस्येतिहासस्य । तथा विषयो देशः । पक्षे इन्द्रियार्थः । तथा न दृष्टः प्रकृतीनां निपातः

(१) नन्दनोद्यानमालाकथयोः साम्यम् । नन्दनोद्यानमालापक्षे--सुराणां सार्थेन सहिता । कथापक्षे सुरसेनार्थेन सहिता मेरौ चिरमाश्रयो निवासो यस्याः । मे इति पृथक् पदम्--रुचिराश्रया इति वा । स्वस्थैः सावधानैः स्वर्गस्थैर्वा । चम्पूर्हारयष्टिश्च तुल्या । उदात्तेन धीरोदात्तगुणवता नायकेनोपेता, उज्ज्वलमध्यमणिसहिता वा । गुणवन्ति वृत्तानि छन्दांसि मुक्तकानि गद्यानि च यस्यां सा । गुणवत्यो वृत्ता मुक्ता एव मुक्तका यस्यां सा इति वा ।

(२) ग्राम्यकविकथाबन्धस्तु नीरसस्य पुरुषस्य मनोहरो भवति । देशस्तु नीरेण जलेन सस्येन धान्येन च मनोहरः ।

(३) विषयो देशः कामोपभोगश्च ।

(४) अदृष्टाः प्रकृतिनिपातोपसर्गलोपवर्णविकारा येन, पक्षे अदृष्टः प्रकृतीनां प्रजानां निपातः उपसर्गः लोपो वर्णानां ब्राह्मणादीनां मध्ये विकारश्च यस्मिन् सः ।

अटावन्ध इव विकसितकनककमलकुवलयोच्छलितरजः पुञ्जपिञ्जरितहंसावतंसया प्रचुरचलच्चकोरचक्रवाककारण्डवमण्डलीमण्डिततीरया भगीरथभूपालकीर्तिपताकया स्वर्गगमनसोपानवीथीयमानरिङ्गत्तरङ्गया गङ्गया पुण्यसलिलैः प्लावितश्चन्द्रभागालंकृतैकदेशश्च, सारः सकलसंसारचक्रस्य, शरण्यः पुण्यकारिणाम्, आरामो रामणीयककदलीवनस्य, धाम धर्मस्य, आस्पदं संपदाम्, आश्रयः श्रेयसाम्, आकरः साधुव्यवहाररत्नानाम्, आचार्यभवनमार्यमर्यादोपदेशानामार्यावर्तो नाम देशः ॥ क ॥

यस्मिन्ननवरतधर्मकर्मोपदेशशान्तसमस्तव्याधिव्यतिकराः पुरुषायुषजीविन्यः सकलसंसारसुखभाजः प्रजाः । तथाहि । कुष्ठयोगो गान्धिकापणेषु, स्फोटप्रवादो वैयाकरणेषु, संनिपातस्तालेषु, ग्रहसंक्रान्तिर्ज्योतिःशास्त्रेषु, भूतविकारवादः सांख्येषु, क्षयस्तिथिषु, गुल्मवृद्धिर्वनभूमिषु, गलग्रहो मत्स्येषु, गण्डकोत्थानं पर्वतवनभूमिषु, शूलश्च स्कन्धखण्डिकायतनेषु, दृश्यते न प्रजासु ॥ ख ॥

(१)यत्र चतुरगोपशोभिताः सङ्ग्रामा इव ग्रामाः, तुङ्गसकलभवनाः सर्वत्र

स्वपदात्पतनम्, उपसर्गो धनापहारादिरुपद्रवः, लोपो देवदायब्रह्मदायाद्यपालनम्, वर्णविकारश्चातुर्वर्ण्याव्यवस्था यस्मिन् । पक्षे प्रकृतयो धात्वादयः, निपाताश्चादयः, उपसर्गाः प्रादयः, लोपः प्रसक्तस्यादर्शनम्, वर्णविकारोऽक्षरविकृतिः । तथा चन्द्रभागया नद्या चन्द्रखण्डेन च भूषितैकदेशः ॥ क ॥

यस्मिन्निति ॥ कुष्ठमौषधविशेषो रोगविशेषश्च । स्फुट्यते व्यज्यतेऽर्थोऽनेनेति स्फोटो वैयाकरणप्रसिद्धं शब्दब्रह्म । स च वाक्यस्फोटः पदस्फोटश्चेति द्विधा नित्यश्च । तस्य प्रकर्षेण वादः कथनम् । स्फोटस्य पिटकस्य प्रवादश्च । संनिपात उभयहस्तयोजनम् । यदुक्तम्—'यस्यां दक्षिणहस्तेन तालं वामेन योजयेत् । उभयोर्हस्तयोः पातः संनिपातः स उच्यते ॥' वातपित्तश्लेष्मणामेकत्र योगो रोगविशेषश्च । ग्रहाणां सूर्यादीनां मेषादिराशौ संक्रान्तिः । ग्रहो बन्धनं तस्य संक्रान्तिश्च । भूतः प्रधानाख्यं तत्त्वं मूलप्रकृतिः । ततो महान् । महतस्तस्मादहंकारः । अहंकाराच्च पञ्च तन्मात्राणि (पृथिव्यादिपञ्चतन्मात्राणि) । एवमष्टौ । तत एकादशेन्द्रियाणि पञ्च भूतानि चेति षोडश विकाराः । एवं चतुर्विंशति तत्वानि । पञ्चविंशस्तु पुरुषः । तथाच—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥' इति सांख्याः । ततश्च तेष्वेव भूतविकाराणां वादः प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । पक्षे भूतस्य प्रेतस्य विकारः । क्षयः सूर्योदयकालावृत्तित्वं रोगविशेषश्च । गुल्मः स्तम्बो रुग्वा । गले ग्रहणं बडिशेन रोगविशेषश्च । गण्डकाः खड्गिपशवो ह्रस्वस्फोटका वा । शूल आयुधविशेषो रोगविशेषश्च ॥ ख ॥

यत्रेति ॥ यत्र देश एते पदार्थाः । तद्यथा । येषु परिपन्मण्डपेषु ग्रामवृद्धा उपविश-

(१) ग्रामपक्षे यत्र चतुरैर्गोपैः शोभिताः ग्रामाः । संग्रामपक्षे 'च' इति पृथक् पदम् यत्र च तुरगैरश्वैरुपशोभिताः सङ्ग्रामा इत्यर्थः ।

नगा इव नगरप्रदेशाः, सदाचरणमण्डनानि नूपुराणीव पुराणि, सदानभोगाः प्रभञ्जना इव जनाः, प्रियालपनसाराणि यौवनानीव वनानि, विटपिहिताश्चेटिका इव वाटिकाः, निर्वृतिस्थानानि सुकलत्राणीवेक्षुक्षेत्रसत्राणि, जलाविलक्षणाः पशुपुरुषा इवाप्रमाणास्तडागभागाः, कुपितकपिकुलाकुलिता लङ्केश्वरकिंकरा इव (१)भग्नकुम्भकर्णघनस्वापाः कूपाः, पीवरोधसः सरित इव गावः, (२)सतीव्रतापदोषाः सूर्यद्युतय इव कुलस्त्रियः ॥क॥

यत्र च मनोहारिसारसद्वन्द्वास्तत्पुरुषेण द्विगुना चाधिष्ठिताः कादम्ब-

न्ति ते चतुरास्तैस्तथा गोपैरुपशोभिताः । यद्वा चतुरैर्दक्षैर्गोपैः पाशुपाल्यजीविभिरुपशोभिताः । गोशब्दस्य पशुमात्रवचनत्वात् । सङ्ग्रामपक्षे 'च' इति छेदनीयम् । तुङ्गान्युच्चानि सकलानि सर्वाणि संपूर्णानि वा भवनानि गृहा यत्र । नगाश्च तुङ्गैः पुंनागैरुपलक्षितं कलभैरिभडिम्भैः सहितं वनं यत्र । पुंनागकरिपोतयुता इत्यर्थः । यद्विश्वप्रकाशः—'तुङ्गः पुंनागनागयोः । तुङ्गः स्यादुन्नतेऽन्यवत्' । पुराणि शोभनमाचरणमेव मण्डनं यत्र । नूपुराणि सर्वथा चरणभूषणानि । दानभोगाभ्यां सहिता जनाः । शश्वन्नभोगा वायवः । दयितानां सकामोल्लापेन साराणि यौवनानि । वनानि प्रियालं राजादनं पनसं चेयूति प्राप्नुवन्ति । विटपिभ्यस्तरुभ्यो हिता वाटिकाः । चेटिका दास्यस्तु विटैः पिहिता वेष्टिताः । इक्षुक्षेत्रे सत्राणि दानशालाः । निर्वृत्या वृतेरभावेन स्वच्छन्दं स्थीयते यत्र । निर्वृतेः सुखस्यास्पदानि कलत्राणि । तडागभागा जलाविला जलार्थिभिः सदा सेव्यतया जलपिच्छिलाः क्षणाः अवतारादितीरप्रदेशा यत्र । यद्वा जलैराविला नीरन्ध्राः पूर्णा क्षणाः खातकानि यत्र । अगाधाः । पशुपुरुषास्तु जडा विलक्षणा व्यपेतशास्त्राः । यद्वा अविभिर्मेण्ढैर्लक्ष्यन्ते । यद्वावीन्मेण्ढांल्लक्षयन्ति । पश्चात्कर्मधारयः । प्रत्यक्षादिप्रमाणरहिताश्च । कूपा भग्नकुम्भकर्णाः स्फुटितघटकण्ठाः । घनाः प्राचुराः स्वाः स्वकीयाः पातालमूलोत्था न तु प्रवाहादिपूरिता आपः पानीयानि येषु । यद्वा घनस्वा बहुद्रव्या आपो येषु । वापीकूपादौ हि जीर्णोद्धारार्थं निधिर्भवतीति ख्यातिः । किंकरास्तु भग्नः श्रीरामागमनकथनेन कुम्भकर्णस्य रक्षसो घनः प्रचुरः षण्मासावधिकः स्वापः शयनं यैः । गावः पीवरं च तदूधश्च पीवरोधस्तस्मात्पीवरोधसो हेतोः सरित इव । यद्वा पीवरमूध आपीनं येषाम् । अत्र 'गोशब्दो धेन्वर्थोऽपि स्त्रीनरलिङ्ग' इति व्याडिः । ततः पुंस्त्वादनङ् न । सरितस्तु पीवं स्थूलं रोधस्तटं यासाम् । कुलस्त्रियः सतीव्रतेनापगता नष्टा दोषाः कलङ्का यासाम् । सूर्यद्युतयस्तु तीव्रतापदोषेण सहिताः ॥ क ॥

यत्रेति ॥ किंभूताः केदाराः । मनोहारीणि सारसानां द्वन्द्वानि येषु । तथा तत्पुरुषेण तत्स्वामिना द्विगुना गोयुगयुक्तेनाधिष्ठिताः बहवोऽपि गावः सन्ति । द्विगुनेति

(१) कूपा लङ्केश्वरकिङ्कराश्च तुल्याः । कूपपक्षे कुम्भानां कर्णाः कुम्भकर्णाः भग्नाः कुम्भकर्णा येषु ते च ते घनाः सुष्ठुआपो येषु ते तथाविधाः । राक्षसपक्षे भग्नो नाशितः कुम्भकर्णस्य रावणभ्रातुःर्घनस्वापो गाढनिद्रा यैस्ते तथाविधा इत्यर्थः ।

(२) सूर्यद्युतिपक्षे तीव्रातपदोषसहिताः । कुलस्त्रीपक्षे सतीव्रताः अपदोषाश्चेत्यर्थः ।

रीगद्यबन्धा इव दृश्यमानबहुव्रीहयः केदाराः ॥ क ॥

किं बहुना।

नास्ति सा नगरी यत्र न वापी न पयोधरा।
दृश्यते न च यत्र स्त्री नवापीनपयोधरा ॥ २६ ॥

अपि च।

भवन्ति फाल्गुने वृक्षशाखा विपल्लवाः।
जायन्ते न तु लोकस्य कदापि च विपल्लवाः ॥ २७ ॥

यत्र सौराज्यरञ्जितमनसः सकलसमृद्धिवर्धितमहोत्सवपरम्परारम्भनिर्भराः, सततमकुलीनं कुलीनाः, प्राप्तविमानमप्राप्तविमानभङ्गाः, कतिपयवसुविराजितमनेकवसवः, समुपहसन्ति स्वर्गवासिनं जनं जनाः ॥ क ॥

कथं चासौ स्वर्गान्न विशिष्यते ॥ ख ॥

यत्र गृहे गृहे गौर्यः स्त्रियः, महेश्वरो लोकः, सश्रीका हरयः, पदे पदे

---

चोपलक्षणम्। अथवा चकारोऽप्यर्थे। द्विगुनापि तत्पुरुषेणाधिष्ठिताः। तथा दृश्यमाना बहवो व्रीहयो येष्विति भूमेः सस्यसंपदुक्ता। गद्यबन्धास्तु मनोहारिणः साराः श्रेष्ठाः। सद्वन्द्वाः द्वन्द्वसमाससहिताः। तथा तत्पुरुषेण द्विगुना च समासेनाधिष्ठिताः। तथा दृश्यमानबहुव्रीहिसमासाः। तथाच द्वन्द्वतत्पुरुषद्विगुबहुव्रीहिसमासबहुला इत्यर्थः ॥ क ॥

नास्ति सेति ॥ यत्र देशे सा कापि नगरी नास्ति। यस्यां न वापी निपानम्। न पयोधरा पयः प्रधाना भूमिः। नच तरुणी पीनस्तनी स्त्री दृश्यते। यदि पुनस्तत्त्रयमपि चतुर्थपादेन विशेषणीकर्तुमाग्रहस्तर्हि पयोभूम्योरेवं व्याख्यायते। 'णु स्तुतौ'। नवं स्तुतिमाप्नुतोऽभीक्ष्णमिति नवापिनी। तथाभूते इनपयसी स्वामिजले धरतीति तथोक्ता वापी। भूस्तु वपन्त्यभीक्ष्णमिति वापिनः कर्षकास्तेषामिना आजीवहेतुत्वात्स्वामिनः पयोधरा मेघा यस्यां तथाभूता। पश्चान्नञ्संबन्धः। अवृष्टिनिष्पाद्यसस्येति भावः। अयमर्थस्तेनार्हः। प्रशस्तस्वामिपयस्का वापी, अवृष्टिनिष्पादितसस्या भूमिः, तरुणी पीनस्तनी च कान्ता, यस्यां दृश्यते सैव नगरी यत्र देशेऽस्तीति, अथवा यत्र देशे सा नगरी नास्ति यस्यां नगर्यां वापी स्त्री च न दृश्यते। कीदृशी वापी। न न पयोधरा। अपि तु पयोधरा। नञ्द्वयस्य प्रकृतार्थसूचकत्वात्। स्त्री च किंभूता। नवा तरुणी। तथा पीनपयोधरा। सर्वास्वपि नगरीषु पयोधरा वाप्यस्तरुण्यः पीनस्तन्यश्च स्त्रियो दृश्यन्त इति भावः ॥ २६ ॥

भवन्तीति ॥ शाखा विगतपल्लवा यत्र भवन्ति। जनस्य विपदां लवा अपि न स्युः ॥ २७ ॥

यत्रेति ॥ यत्र जनाः स्वर्गिणमपि न्यक्कुर्वन्ति। कुलीना-अभिजाताः। विमाननं तिरस्कारः। वसु धनम्। पक्षे कुः पृथ्वी तस्यां लीनाः। विमानं देवयानम्। वसवोऽष्टौ ध्रुवादयः। देवन्यक्कारस्तुल्यार्थे व्याख्येयः ॥ क ॥

कथं चायं स्वर्गान्नाधिकः ॥ ख ॥

यत्रेति ॥ गौर्यो गौराङ्ग्यः शुद्धोभयान्वया वा स्त्रियः। महानीश्वरोऽतिसमृद्धः।

धनदाः सन्ति लोकपालाः । केवलं नं सुराधिपो राजा । नच विनायकः कश्चित् ।। ग ।।

(१)यत्र चलतासंवन्धः कलिकोपक्रमश्च पादपेषु दृश्यते न पुरुषेषु ।। घ ।।

यत्र चमरकवार्ता परमहिमोपघातश्च तुहिनाचलस्थलीषु श्रूयते न प्रजासु ।। ङ ।।

यश्च नीतिमत्पुरुषाधिष्ठितोऽप्यनीतिः,(२) सटोऽप्यवटसंकुलः, कारूपयुतोऽप्यगतरूपशोभः ।। च ।।

यत्र च गुरुव्यतिक्रमं नक्षत्रराशयः, मात्राकलहं लेखशालिकाः, मित्रोदयद्वेषमुलूकाः, अपत्यत्यागं कोकिलाः, बन्धुजीवविघातं ग्रीष्मदिवसाः, कुर्वन्ति न जनाः ।। क ॥

किं वहुना ।

देशः पुण्यतमोद्देशः कस्यासौ न प्रियो भवेत् ।
युक्तोऽनुक्रोशसंपन्नैर्यो जनैरिव योजनैः ॥ २८ ॥

सहश्रिया शोभया सश्रीकाः । हरयोऽश्वाः । धनप्रदा नृपाः । स्वर्गे त्वेकस्मिन्नेव गृहे गौरी उमा । एक एव महेश्वरः शिवः । सलक्ष्मीको विष्णुरेक एव । न बहवः । धनदः कुवेर एकस्मिन्नेव स्थान एक एव । केवलं परम् । अधिपिबतीत्यधिपः । सुराया मद्यस्याधिपः सुराधिपो न राजा । नच कोऽपि विरुद्धनायकः । सुरामधिपिबतीति वाक्ये लक्ष्यदूषणमप्रसङ्गात । सुराप्रपावत् । स्वर्गे तु सुराणामधिप इन्द्रः । विनायको गणेशः ॥ ग ॥

यत्रेति ।। लतासंबन्धो वल्लीयोगः । कलिकाया उपक्रमः । पक्षे 'चलतासंबन्धः' इति समुदितं पदम् । चलता लौल्यम् । कलिः कलहः । कोपः क्रुध् । तयोः क्रमः ॥ घ ॥

यत्रेति ॥ चमरका गोविशेषाः । परममुत्कृष्टं हिमं तुहिनम् । पक्षे मरको मरणबाहुल्यम् । परस्य महिमा माहात्म्यम् । तस्योपघातः ॥ ङ ॥

यश्चेति ॥ न विद्यत ईतिरुपद्रवोऽस्मिन्नित्यनीतिः । वटा न्यग्रोधा । अवटाः कूपादिगर्ताः । कारवः शिल्पिनः । तथा न गता न भ्रष्टा रूपशोभा यस्य । अगैर्नगैस्तरुभिश्चोपशोभा यस्येति वा । अपिर्विरोधे । स च तुल्यार्थव्याख्यया । कुत्सितमीषद्वा रूपंका रूपम् ॥ च ॥

यत्र चेति ।। इदमेते कुर्वन्ति न जनाः । गुरुर्बृहस्पतिः । मात्रा वर्णावयवः । मित्रः सूर्यः । बन्धुजीवं बन्धूकम् पक्षे सुगमम् । मात्रा जनन्या सह ॥ क ॥

देश इति ।। अनुक्रोशेन कृपया संपन्नैर्जनैर्युक्तोऽसौ देशः सर्वस्यापि प्रियः । पक्षेऽनुक्रोशे संपन्नान्यन्नजलतृणादिभिः समृद्धानि । अथवानुगताः परस्परसंबद्धाः क्रोशा अनुक्रोशास्तैः संपन्नानि ॥ २८ ॥

(१) पादपेषु लतासम्बन्धः, कलिकानामुपक्रमश्च । पुरुषेषु चलतायाश्चाञ्चल्यस्य न सम्बन्धः कलेः कोपस्य क्रमश्च न ।

(२) ईतिरहित इत्यर्थः । अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ।

तस्य विषयमध्ये निषधो नामास्ति जनपदः प्रथितः।
तत्र पुरी पुरुषोत्तमनिवासयोग्यास्ति निषधेति ॥ २९ ॥
जननीतिमुदितमनसा सततं सुस्वामिना कृतानन्दा।
(१)सा नगरी नगतनया गौरीव मनोहरा भाति ॥ ३० ॥

यस्यामभ्रंलिहेन्द्रनीलशालशिखरसहस्रनिभृतांशुजालबालशाद्वलाङ्कुराग्रग्रासलालसाः स्खलन्तः खे खेदयन्ति मध्येदिनं सादिनं रविरथतुरङ्गमाः ॥ क ॥

यस्यां च स्फटिकमणिशिलानिबद्धभवनप्राङ्गणगतासु संचरद्गृहिणीचरणालक्तकपदपङ्क्तिषु पतन्ति निर्मलसलिलाभ्यन्तरतरत्तरुणारुणकमलकाङ्क्षया मुग्धमधुपपटलानि ॥ ख ॥

यस्यां च विविधमणिनिर्मितवासभवनभव्यभित्तिषु स्वच्छासु स्वां छायामवलोकयन्त्यः कृतापरस्त्रीशङ्काः कथमपि प्रत्यानीयन्ते प्रियैः प्रियतमाः।

यस्यां च दिव्यदेवकुलालंकृताः स्वर्गाः इव मार्गाः, सततमपांसुवसनाः सागरा इव नागराः, समत्तवारणानि वनानीव भवनानि, (२)सुरसेनान्विताः स्वर्गभूपा इव कूपाः, अधिकंधरोद्देशमुद्भासयन्तो हारा इव विहाराः॥ग॥

---

तस्येति ॥ पुरुषोत्तमो विष्णुः पुंश्रेयांश्च ॥ २९ ॥

जनेति ॥ जनस्य नीत्या हृष्टमनसा सुप्रभुणा कृतहर्षा। तथा न भ्रष्टनया अपि तु सन्नीतिमती। सा पुरी रम्या भाति। यत एवानष्टनया अतएव जनो नीतिमान्। गौरी तु नगस्थहिमाद्रेस्तनया। तथा जननी मातेति हेतोर्हृष्टमनसा। अतएव शोभनेन हर्षोचिताकृतिसुन्दरेण स्वामिना स्कन्देन कृतानन्दा। तथा मनसि हरो यस्याः ॥ ३० ॥

यस्यामिति ॥ शालः प्राकारः। इन्द्रनीलमणिकिरणान्नीलतृणतुल्यांछिलिक्षवः सप्तसप्तिसप्तयः स्खलन्ति ॥ क ॥

यस्यां चेति ॥ स्फटिकस्य सलिलं पदपङ्क्तेश्च कमलमुपमानम् ॥ ख ॥

यस्यां चेति ॥ दिवि भवैरिव दिव्यै रम्यैर्देवकुलैर्देवगृहैः पक्षे दिव्यैः स्वर्गोद्भवैः कल्पद्रुमादिभिर्देवानां कुलैरन्वयैर्वालंकृताः। अपांसु रेणुरहितं वसनं वस्त्रं येषाम्। पक्षे अप्सु वसन्त्येष्विति सुवसनाः। 'अपाम्' इति कर्तरि षष्ठी। जलाधारा इत्यर्थः। मत्तवारणोऽपाश्रयो मत्तेभश्च। सुरसेन सुजलेन। स्वर्गभूपास्तु सुरसेनया त्रिदशसैन्येनान्विताः। अधिकमिति क्रियाविशेषणम्। धरोद्देशः पृथ्वीप्रदेशः। विहाराश्चैत्यानि। पक्षे कंधरोद्देश इत्यधिकंधरोद्देशम्। विभक्त्यर्थेऽव्ययीभावः ॥ ग ॥

---

(१) नगरी गौरीवेति साम्यम्। नगरीपक्षे जनानां नीत्या मुदितमनसा सुस्वामिना योग्यभूपालेन कृता नन्दा। नगतनया। अत्र निषेधार्थको न शब्दः। ततो न गतः=न विनष्टः नयोनीतिर्यस्यामित्यर्थः। मनोहरा=रमणीया, गौरीपक्षे जननीति मातेति कृत्वा मुदितमनसा सुस्वामिना स्कन्देन कृतानन्दा। नगस्य हिमवतस्तनया। मनसि हरो यस्याः सा गौरीवेत्यर्थः

(२) सुराणां सेनयाऽन्विताः स्वर्गभूपाः। सुरसेन=मधुररसेन अन्विताः कूपाः।

यस्यां च बहुलक्षणा सुधावन्तो दृश्यन्तेऽन्तः प्रचुराः प्रसादा बहिश्च वारणेन्द्राः । सुशोभितरङ्गाः समालोक्यन्तेऽन्तः संगीतशाला बहिश्च क्रीडाकमलदीर्घिकाः । बहुधान्यनिरुद्धाः कथमप्यभिगम्यन्तेऽन्तः पण्यस्त्रियो बहिश्च क्षेत्रभूमयः । नानाशुकविभूषणाः शोभन्तेऽन्तः सभा बहिश्च सहकारवनराजयः । ससौगन्धिकप्रसारा विराजन्तेऽन्तर्विपण्यो बहिश्च सलिलाशयाः ॥ क ॥

किं बहुना ।

भूमयो बहिरन्तश्च नानारामोपशोभिताः ।
कुर्वन्ति सर्वदा यत्र विचित्रवयसां मुदम् ॥ ३१ ॥

यस्यां च भक्तभाजो देवतायतनेषु देवताः संनिधाना दृश्यन्ते हट्टेषु वणिग्जनाः । (१)अक्षरसावधानाः कविगोष्ठीषु कवयो विलोक्यन्ते द्यूतस्थानेषु द्यूतकाराः । कान्तारागप्रियाः करिणो राजद्वारेषु संचरन्ति वेश्याङ्गणेषु भुजङ्गाः ॥ ख ॥

यस्यां च चतुरुदधिवेलाविराजितसकलधराचक्रचूडामणौ मणिकर्मनिर्मितरम्यहर्म्यतया सुरपतिपुरीपराभवकारिण्याम् । अव्ययभावो व्याकरणोपसर्गेषु न धनिनां धनेषु । दानविच्छित्तिरुन्मायत्करिकपोलमण्डलेषु न त्यागिगृहेषु । भोगभङ्गो भुजङ्गेषु न विलासिलोकेषु । स्नेहक्षयो रजनिविरामविरमत्प्रदीपपात्रेषु न प्रतिपन्नजनहृदयेषु । कूटप्रयोगो गीतता-

यस्यां चेति ॥ क्षणो भूमिका । सुधा लेपविशेषः । पक्षे बहूनि लक्षणानि येषाम् । तथा सुष्ठु धावन्तः । रङ्गो नर्तनस्थानम् । पक्षे सुशोभिनस्तरङ्गा येषु । बहुधेति भिन्नं पदम् । अन्यैर्विटैर्निरुद्धाः । पक्षे बहुभिर्धान्यैर्निरुद्धाः । आशुकविः शीघ्रकविः । पक्षे शुकाः पक्षिणः । सुगन्धीनि द्रव्याणि पण्यमेषां ते सौगन्धिका वणिजः कल्हाराणि वा । प्रसारो लब्धापणो विस्तरश्च ॥ क ॥

भूमय इति ॥ बाह्ये आरामैर्मध्ये रामाभिरुपशोभिताः । यस्यां रम्यवयसां यूनां विविधपक्षिणां च मुदं कुर्वन्ति । वपुष्मतां कालकृतावस्था पक्षी च वयः ॥ ३१ ॥

यस्यां चेति ॥ भक्तो भक्तिमान् । भक्तं चान्नम् । संनिधानं नैकट्यम् । सम्यङ्निधिश्च । अक्षरं वर्णः । पक्षे अक्षः पाशकः । अक्षरसे स्थितमवधानं येषाम् । कान्तारे वने अगः सल्लक्यादिवृक्षस्तत्प्रियाः । पक्षे कान्ता वधूः ॥ ख ॥

यस्यां चेति ॥ अव्ययभावोऽव्ययत्वम् । पक्षे व्ययो दानादिनोपयोगस्तदभावः । दानविच्छित्तिर्मदशोभा त्यागविच्छेदश्च । भोगः सर्पवपुर्विलासश्च । भङ्ग आमर्दनम् । कुण्डल्याश्चतुर्दश । एवमेकोनपञ्चाशत् । तेषां विशेषेषु कूटशब्दप्रयोगः । पक्षे कूटं कपटं प्रयोगो व्यापारः । वृत्तिः शास्त्रविवरणम् । आजीवनं च । स्थानकभेदः संमुखं पराङ्मुखं संपूर्णव-

(१) अक्षरेषु=अक्षरन्यासेषु सावधानाः कवयः । अक्षाणां पाशानां रसे अवधानं येषां ते तथाविधा द्यूतकाराः ।

नात्रशत्रेषु न व्यवहारेषु। वृत्तिकलहो वैयाकरणच्छात्रेषु न स्वामि भृत्येषु। स्थानकभेदश्छित्रकेषु न सत्पुरुषेषु ॥ क ॥

किं वहुना—

त्रिदिवपुरसमृद्धिस्पर्धया भान्ति यस्यां
सुरसदनशिखाग्रेष्वाग्रहग्रन्थिनद्धाः।
नभसि पवनवेल्लत्पल्लवैरुल्लसद्भिः
परममिह वहन्त्यो वैभवं वैजयन्त्यः ॥ ३२ ॥

अपि च।

चार्वी सदा सदाचारसज्जमज्जनसेविता।
नगरी न गरीयस्या संपदा सा विवर्जिता ॥ ३३ ॥

तस्यामासीन्निजभुजयुगलवलविदलितसकलवैरिवृन्दसुन्दरीनेत्रनीलोत्पलगलद्बहलवाष्पपूरप्लवमानप्रतापराजहंसः, सकलजलनिधिवेलावननिखातकीर्तिस्तम्भभूषितभुवनवलयः, विश्वंभराभोग इव बहुधारणक्षमः, प्रासाद इव नवसुधाहारी, रविरिवानेकधामाश्रयः। दनुजलोक इव सदानवः स्त्रीजनस्य, वसिष्ठ इव विश्वामित्रत्रासजननः, जनमेजय इव परीक्षितनयः, परशुराम इव परशुभासितः, राघव इवालघुकोदण्डभङ्गरञ्जितजनकः,

लीकरणमिति यावत्। व्याघातश्च। स्नेहस्तैलादिः प्रेमा वा। प्रतिपन्नानि परस्परप्रतीतानि च तानि जनहृदयानि च। गीतस्य ताना द्वये। एके कूटाख्याः पञ्चत्रिंशत्। अन्ये च शुद्धाख्यरूपं पार्श्वागतम्। ततो भागद्वयेनैकतः पततान्यत्र च चटता क्रमेण ऋजु ऋज्वागतद्वयर्धाक्षार्धऋजुसंज्ञानि चेति स्थितस्थानकानि पञ्च। गमनमालीढं त्वरितं त्रिभङ्गमित्याख्यानि च चत्वारि गच्छत्स्थानकानीति। एवं च नवानां स्थानकानां भेदश्छित्रेषु। पक्षे स्थानकस्य रक्षणीयनगरादेर्भेद उपजापो न सत्पुरुषेषु सत्त्वात् ॥ क ॥

त्रिदिवेति ॥ सुराणां सदनानि प्रासादा विमानानि च। आगृह्यन्त एभिरित्याग्रहा अङ्कुटकास्तेषु ये ग्रन्थयस्तैर्नद्धाः। वेल्लत्पल्लवैश्चलदञ्चलैः। उल्लसद्भी राजद्भिः। वैभवं माहात्म्यम्। सर्वोऽपि विजिगीषुर्बद्धपरिकरः पताकां दर्शयतीति भावः ॥ ३२ ॥

चार्वीति ॥ चार्वी मनोज्ञा। सततं साध्वाचारप्रह्वसाधुश्रिता सा नगरी पुरी गरीयस्या श्रिया न त्यक्ता ॥ ३३ ॥

तस्यामिति ॥ शत्रुकान्ताश्रुपूरे तरत्प्रताप एव राजहंसो यस्य। तथा जयस्तम्भैर्भूपितभूमण्डलः। तथा स्तम्भोपमदोर्दण्डे न्यस्ता शालभञ्जिकेव जयलक्ष्मीर्यस्य। स वीरसेनसूनुर्नल इति प्रसिद्धो नृप आसीत्। बहुधानेकशो रणे क्षमः। पक्षे बहूनां धारणे क्षमः। आभोगः पूर्णता। नवस्त्रीं देवद्विजसंबद्धां हर्तुमेवंशीलो न। पक्षे नवया सुधया लेपविशेषेण हारी रम्यः। अनेकधा सप्ताङ्गत्वाद्बहुधा माया लक्ष्म्या आश्रयः। पक्षेऽनेकस्य प्रचुरस्य धाम्न आश्रयः। सदा नित्यं नवो रम्यतयापूर्व एव। पक्षे दानवैः सह। विश्वेषाममित्राणां त्रासकृत्। पक्षे विश्वामित्रो मुनिः। परीक्षितो नयः षाड्गुण्यं येन। पक्षे परीक्षेर-

सुमेरुरिव जातरूपसंपत्तिः, तुहिनाचल इव पुण्यभागीरथीसहितः, चिन्तामणिः प्रणयिनाम्, अग्रणीः सांग्रामिकाणाम्, उपाध्यायोऽध्ययनविदाम्, आदर्शो दर्शनानाम् आचारः शौर्यशालिनाम् उपदेशकः शस्त्रशास्त्रस्य, परिवृढो दृढप्रहारिणाम्, अग्रगण्यः पुण्यकारिणाम्, अपश्चिमो विपश्चिताम्, अपाश्चात्यस्त्यागवताम्, अचरमश्चातुर्याचार्याणाम्, अपर्यन्तभूभाराधारस्तम्भभूतभुजकाण्डकीलितशालभञ्जिकायमानविजयश्रीः, श्रीवीरसेनसूनुः, समस्तजगत्प्रासादशिरःशेखरीभूतकान्तकीर्तिध्वजो, राजा, राज्यलक्ष्मीकरेणुकाचापलसंयमनशृङ्खलः, खलवृन्दकन्दलदावानलो नलो नाम ॥ क ॥

यस्येन्दुकुन्दकुमुदकान्तयः सकललोककर्णप्रियातिथयो गुणाः सततमेकब्रह्माण्डसंपुटसंकीर्णनिवासव्यसनविषादिनः पुनरनेकब्रह्माण्डकोटिघटनामभ्यर्थयमाना इव भगवतो विश्वसृजः कमलसंभवस्य कर्णलग्नाः स्वर्गलोकमधिवसन्ति स्म ॥ ख ॥

यस्मिंश्च राजनि जनितजनानन्दे नन्दयति मेदिनीम्, गीतेषु जातिसंकराः, तालेषु नानालयभङ्गाः, नृत्येषु विषमकरणप्रयोगाः, वाद्येषु दण्डकरप्रहाराः पुण्यकर्मारम्भेषु प्रबन्धाः, सारिद्यूतेषु पाशप्रयोगाः, पुष्पितकेतकीषु हस्तच्छेदाः, न्यग्रोधेषु पादकल्पनाः; कञ्चुकमण्डनेषु नेत्रविकर्तनानि, आसन्। न प्रजासु ॥ ग ॥

---

भिमन्युसुतस्य सुतः । परस्मिञ्छुभे आसितः । पक्षे परशुः कुठारः । अलघुको गौरवार्हः । तथा दण्डस्य वधपरिक्लेशार्थहरणलक्षणस्य भङ्गेन मुक्त्या रञ्जितलोकः । पक्षे बृहद्धनुर्भङ्गहर्षितजनकाख्यनृपः । जाता रूपसंपत्तिर्यस्य । पक्षे जातरूपं सुवर्णं संपत्तिर्यस्य ॥ पुण्यभजनशीलः । रथवान् । हितैः सह । पक्षे पुण्यगङ्गान्वितः । प्रणयिनामर्थिनां चिन्तितप्रदो मणिरिव । जगतः प्रासादः कीर्तेश्च ध्वज उपमानम् ॥ क ॥

यस्येति ॥ यस्य नलस्य प्राचुर्यादेकस्मिन्ब्रह्माण्डेऽमान्तोऽनेकब्रह्माण्डनिर्माणं कारयिष्यन्त इव स्वर्गिभिर्नित्यमेव श्लाघ्यमानत्वात्कर्णलग्नाः श्रुतौ विज्ञापनार्थं निकटीभूताः ॥ ख ॥

यस्मिंश्चेति ॥ गीतादिष्वेव जातिसंकरादीनि न प्रजास्विति परिसंख्ययावधारणम् । गीतेषु नन्दयन्तीप्रभृतयो जातयोऽष्टादश । तासु संकरो मिश्रप्रतीतिः । पक्षे जातयो विप्राद्याः । संकरोऽनुचितसंबन्धेन विप्लवः । तालश्चच्चत्पुटादिः । लया द्रुतमध्यविलम्बितलक्षणाः । पक्षे आलयो गृहम् । करणानि तलपुष्पपटादीन्यष्टोत्तरशतसंख्यानि । पक्षे विषमात्स्वार्थे कः । रणो युद्धम् । दण्डः कोणः । करः पाणिः । पक्षे दण्डो वधादिः । करो राज्ञे देयोंऽशः । प्रहारो घातनम् । प्रबन्धाः सातत्यानि प्रकृष्टबन्धाश्च । पाशो बन्धो बन्धनरज्जुश्च । सारयो हि दायैर्बध्यन्ते । अक्षार्थस्तु पाशक एव प्रतीतः । हस्तः केतकीगर्भः पाणिश्च । पादस्य मूलस्य रचना । न्यग्रोधपादपः पादानूचयति कल्पयति । पक्षे पादस्याङ्घ्रेः कल्पना कर्तनम् । नेत्रं वस्त्रविशेषो नयनं च । विशेषेणाङ्गप्रमाणेन कर्तनं विकर्तनं विखण्डनं च ॥ ग ॥

यश्च कोऽप्यन्यादृश एव लोकपालः। तथाहि। अपूर्वो विबुधपतिः, अदण्डकरो धर्मराजः, अजघन्यः प्रचेताः अनुत्तरो धनदः ॥ क ॥

येन प्रचण्डदोर्दण्डमण्डलीविश्रान्तविजयश्रिया श्रवणोत्पलदलायमानमानिनीमानलुण्टाकलोचनेन पृथ्वी प्रिया च कामरूपधारिणी सा तेन भुक्ता ॥ ख ॥

यस्याः सकलजनमनोहारिविशेषकम्, पृथुललाटमण्डलम्, अभिलषणीयकान्तयः कुन्तलाः, श्लाघनीयो नासिक्यभागः, बहुलवलीकः सरोमालिकालंकारश्च मध्यदेशः, प्रकटितकामकोटिविलासः काञ्चीप्रदेशः ॥ ग ॥

किं बहुना।

यस्याः कृष्णागुरुचन्दनामोदबहुलकुचाभोगभूषणा नृत्यतीवाङ्गरङ्गे रमणीयतया निरुपमा नवा यौवनश्रीः ॥ घ ॥

किं चान्यत्।

अन्य एव नवावतारः स कोऽपि पुरुषोत्तमो यो न मीनरूपदूषितः,

---

यश्चेति ॥ कोऽपि विस्मयहेतुः। लोकं जगत्पालयन्ति ये तेभ्योऽन्यादृशो विसदृश एव लोकं प्रजां पालयतीति कृत्वा लोकपालः। स्वोक्तमेव द्रढयति—तथाहीत्यादिना। यतो विबुधानां सुराणां पतिः सपूर्वः पूर्वदिग्युक्तत्वात्। नलस्त्वपूर्व उत्कृष्टो विबुधानां विदुषां पतिः। दण्डपाणिर्यमः। नलस्तु न दण्डो वधादिः, करो राज्ञे देयोंऽशो यस्मादित्यदण्डकरः। तथा धर्मप्रधानो राजा धर्मराजः। धर्मविजयत्वात्। प्रचेता वरुणः सह जघन्यया पश्चिमया वर्तते। नलस्त्वजघन्योऽकुत्सितः प्रकृष्टचेताश्च। यदुक्तम्—'जघन्यं चरमे शिश्ने जघन्यं गर्हितेऽन्यवत्'। धनदः कुबेरः सहोत्तरया दिशा वर्तते। नलस्तु न विद्यत उत्तर उत्कृष्टोऽस्मादित्यनुत्तरः। तथा धनं ददातीति धनदः ॥ क ॥

येनेति ॥ विजयता सुनेत्रेण येन भूः कान्ता च सातेन सुखेन निर्विष्टा भुक्ता। सातं सुखम्। यदमरसिंहः—'शर्मसातसुखानि च' इति। कामरूपो देशविशेषः। प्रिया तु काम्यत इति काममभिलषणीयं रूपम्, काममतिशयेन रूपं वा धरतीत्येवंशीला ॥ ख ॥

यस्या इति ॥ यस्या भुवः विशेषक-लाट-कुन्तल-नासिक्य-मध्यदेश-काञ्चीइत्येवंरूपा देशाः। लवली लताविशेषः। सरसां मालिका श्रेणि। कामकोटिनाम्नी देवी। प्रियापक्षे विशेषकं तिलकम्। ललाटमलकम्। कुन्तलाः केशाः। नासिकायां भवो नासिक्यः। मध्यदेश उदरम्। बहुला बह्व्यो बल्य उदररेखा यत्र तथा सह रोमपङ्क्तिमण्डनेन। प्रकटितानङ्गोत्कर्षविलासः काञ्चीप्रदेशः श्रोणी ॥ ग ॥

यस्या इति। अङ्गेऽङ्गाख्यदेश एव रङ्गे नर्तनस्थाने निरुपमवायौ सति वनश्रीर्नृत्यतीव। वाततरलनमेव नर्तनम्। कृष्णा पिप्पली। अगरुचन्दनौ वृक्षविशेषौ तेषामामोदः। बहूनां लकुचानामाभोगो विस्तारः। तौ भूषणं यस्याः। पक्षे चर्चावशात्कालागरुचन्दनयोरामोदेन व्याप्तस्तनविस्तारमण्डना। नवेति यौवनश्रीरिति च भिन्नम् ॥ घ ॥

किं चेति ॥ कोऽप्यपरिच्छेद्यमहिमा। तथा नवः पूर्वविलक्षणोऽवतारो जन्म यस्य

नाङ्गीकृतविश्वविश्वंभराभारोऽपि कूर्मीकृतात्मा, न वराहवपुषा क्लेशेन पृथ्वीं बभार, नच नरसिंहः समुत्सन्नहिरण्यकशिपुः, न बलिराजबन्धनविधौ वामनो दैन्यमकरोत्ः नापि रामो लङ्केश्वरश्रियमपाहरत्, नापि बुद्धः कल्किकुलावतारी ॥ क ॥

किं बहुना ।

(१)धन्यास्ते दिवसाः स येषु समभूद् भूपालचूडामणि-
लोकालोकगिरीन्द्रमुद्रितमहीविश्रान्तकीर्तिर्नलः ।
लोकास्तेऽपि चिरंतनाः सुकृतिनस्तद्वक्त्रपङ्केरुहे
यैर्विस्फारितनेत्रपत्त्रपुटकैर्लावण्यमास्वादितम् ॥ ३४ ॥

अपिच ।

(२)ये कुन्दद्युतयः समस्तभुवनैः कर्णावतंसीकृता
यैः सर्वत्र शलाकयेव लिखितैर्दिग्भित्तयश्चित्रिताः ।

स तथाभूतः । यदि वा 'णु स्तुतौ' इत्यस्य नवाः स्तुतयोऽवतार्यन्ते यस्मिन्निति स्तवास्पदम् । सर्वोर्वीपतिभ्योऽन्योऽसाधारण एव स नलो राजा । पुरुषेषूत्तमः । तथा अमो रोगोऽस्यास्तीत्यमी । नामी अनमी नीरोगः । यदि वा नमयति शत्रूनवश्यमिति कृत्वा नमी । प्रतापाक्रान्तारिचक्र इत्यर्थः । तथा न रूपे दूषितः । तथा स्वीकृतधराधुरोऽपि न कूर्मिभङ्गुरः । कुत्सितोर्मिः पीडा यस्य स कूर्मिः । अङ्गीकृतभारो हि पीडावान्भवति । यदुक्तम्—'ऊर्मिः पीडाजवोत्कण्ठाभङ्गप्राकाश्यवीचिषु' । तथा वरमाहवं पुष्णता क्लेशेन न धरामपि तु सुखेनेत्यर्थः । नरेषु सिंह शौर्यात् । नच समुत्पन्नं हिरण्यं धनं कशिपु भोजनाच्छादनादि यस्मात् । तथा बलिनां राज्ञां बन्धने विधाने वा मनोदैन्यं न चाकरोत् । रामः सुन्दरः । अलमत्यर्थं कस्य ब्रह्मण ईश्वरस्य शंभोश्च श्रियं नापि नच हृतवान् देवस्वापहारी नेत्यर्थः । ब्रह्मेशौ देवानामुपलक्षणम् । बुद्धो विद्वान्न पापिकुलोत्पन्नः । अन्य एव पुराणपुरुषाद्दशावताराद्विसदृश एव नवावतारो नवसंख्यावतारः । कोऽप्ययं पुरुषोत्तमो विष्णुरित्युक्तिलेशः । तत्पक्षे मीनकूर्मवराहनरसिंहवामनरामबुद्धकल्किनोऽवताराः । हिरण्यकशिपुबलिलङ्केश्वरास्तत्प्रतिपक्षाः । रामः परशुरामोऽपि । तदा । अलमिति भित्त्वा कु ईपदीश्वरः केश्वरः सहस्रार्जुनो जमदग्निहोमार्जुनीमात्रहरणात् । रामः कृष्णः तथा केन वायुनेष्टे समर्थो भवति पवनाशनत्वात् । यद्वा कस्य पानीयस्य यमुनाह्रदलक्षणस्येश्वरः स्वामी केश्वरः कालीयसर्पस्य श्रियमपजहार ॥ क ॥

(१) धन्याइति ॥ येषु दिवसेषु । लोकालोकगिरीन्द्राभ्यां = लोकालोकपर्वताभ्यां, मुद्रिता समाच्छन्ना या मही पृथ्वी, तस्यां विश्रान्ता कीर्तिर्यस्यासौ । भूपालचूडामणिः स नलो बभूव । ते दिवसा धन्याः । इतरे नेत्यर्थः । यैर्लोकैः । तद्वक्त्रपङ्केरुहे = नलमुखारविन्दे । विस्फारितनेत्रपुटकैर्लावण्यमास्वादितम् । दृष्टमितिभावः । चिरंतनाः सनातनाः । प्राचीना इति यावत् । ते लोकाअपि । सुकृतिनो नान्ये । शार्दूलविक्रीडितं छन्दः ॥ ३४ ॥

(२) य इति ये गुणाः सर्वत्र भुवनेषु दिक्षु विदिक्षु च समाच्छन्नाः । येषां च स्मरणेनापि वयमुत्पुलकाः । तेषां गुणानां समाश्रयो नल इति भावः ॥ ३५ ॥

यैर्वक्तुं हृदि कल्पितैरपि वयं हर्षेण रोमाञ्चिता-
स्तेषां पार्थिवपुंगवः स महतामेको गुणानां निधिः ॥ ३५ ॥

यस्य च युधिष्ठिरस्येव न क्वचिदपार्थो वचनक्रमः मरुमण्डलमिवापापंमानसम्, महानसमिव सूपकारसारं कर्म, कार्मुकमिव सत्कोटिगुणं दानम्, दानवकुलमिव दृष्टवृषपर्वोत्सवं राज्यम्, राजीवमिव भ्रमररहितं सर्वदा हृदयम् ॥ क ॥

यश्च परमहेलाभिरतोऽप्यपारदारिकः । शान्तनुतनयोऽपि न कुरूपयुक्तः ॥ ख ॥

किं बहुना ।

सदाहंसाकुलं बिभ्रन्मानसं प्रचलज्जलम् ।
भूभृन्नाथोऽपि नो याति यस्य साम्यं हिमाचलः ॥ ३६ ॥

अपिच ।

(१)नक्षत्रभूः क्षत्रकुलप्रसूतेर्युक्तो नभोगैःखलु भोगभाजः ।
सुजातरूपोऽपि न याति यस्य समानतां कांचन काञ्चनाद्रिः ॥ ३७ ॥

---

यस्य चेति ॥ अर्थादपेतोऽपार्थः । अन्यत्र पृथाया अपत्यत्वात् । अपापं निष्पापम् । पक्षेऽपेता आपो यस्मात् । सुष्ठु उपकारेण सारम् । पक्षे सूपकारैः सूदैः सारम् । सत्पात्रप्रतिपादनाद्दानं सच्छोभनम् । कोटिः संख्या । पक्षे कोटिरटनिः । गुणो ज्या । वृषो धर्मः । पर्व पौर्णमास्यादि उत्सवः पुत्रजन्मविवाहादिस्ते दृष्टा अनुष्ठिता यत्र । पक्षे वृषपर्वा दानवः । भ्रमः संशयः । पक्षे भ्रमरेभ्यो हितम् ॥ क ॥

यश्चेति ॥ हेला शृङ्गारचेष्टा । यद्वा पर उत्कृष्टो मह उत्सवो यस्यां तस्यामिलायां पृथिव्यां रतः । राजन्वती हि मही सदुत्सवा । विरोधे महेला स्त्री शान्तश्चासौ नुतनयश्च । शान्तो जितेन्द्रियः । तथा नुतः स्तुतो नयो नीतिर्यस्य । तथा न कुत्सितरूपयुक्तः । पक्षे शान्तनुपुत्रो गाङ्गेयः कुरूणां क्षत्रियाणामुपयोगी ॥ ख ॥

सदेति ।। भूभृतो गिरयो नृपाश्च । तन्नाथत्वं द्वयोरपि । सत्यप्येवं हिमाचलो यस्य साम्यं नायाति । यतः । सदाहं सखेदम् । साकुलं व्यग्रम् । प्रचलत्कम्पमानम् । जडं व्यामूढम् । मानसं चेतः । बिभर्ति । सिद्धान्ते तु मानसं सरः । सदेति भिन्नम् । प्रचलज्जलं यत्र । शेषं प्रतीतम् । आकुलशब्दो भावप्रधानो यथा "तिष्ठन्ति च निराकुलाः" ॥ ३६ ॥

नक्षत्रेति ।। यस्य नलस्य काञ्चनाद्रिर्मेरुः कांचन कांचिदपि समानतां नायाति । सुष्ठु जातरूपं सुवर्णं यत्र । नलपक्षे रूपं सौन्दर्यम् । अतो द्वयोरपि सुजातरूपत्वात्साम्ये निषेधः । यतो नायं क्षत्त्राद्भवति स्म । तथा भोगैर्न युक्तः । नलस्तु क्षत्त्रप्रसूतिभोगभाक् । सिद्धान्ते तु नक्षत्राणां भूः स्थानम् । तथा नभसि गच्छन्ति येतैर्नभोगैर्देवैर्युक्तः ३७

---

(१) उपजाति वृत्तम् ।

तस्य च महामहीपतेरस्ति स्म प्रशस्तिस्तम्भः सकलश्रुतिशास्त्रशासनाक्षरमालिकानाम्, न्यग्रोधपादपः पुण्यकर्मप्ररोहाणाम्, आकरः साधुव्यवहाररत्नानाम्, इन्दुः पार्थिवनीतिज्योत्स्नायाः, कन्दः सकलकलाङ्कुरकलापस्य, सागरः समस्तपुरुषगुणमणीनाम्, (१)आलानस्तम्भश्चपलराज्यलक्ष्मीकरेणुकायाः, सकलभुवनव्यापारपारावारनौकर्णधारः, सुधाम्भोनिधिडिण्डीरपिण्डपाण्डुरयशःकुशेशयखण्डमण्डितसकलसंसारसराः, सरागीकृतसमस्तपार्थिवानुजीवी, जीवितसमः, प्राणसमः, हृदयसमः, शरीरमात्रभिन्नो द्वितीय इवात्मा, कुलक्रमागतः, संक्रान्तिदर्पणः सुखदुःखयोः, स्वभावानुरक्तः, शुचिः, सत्यपूतवाक्, कृतज्ञः, ब्राह्मणः सालङ्कायनस्य सूनुः श्रुतशीलोनाम महामन्त्री ॥ क ॥

मित्रं च मन्त्री च सुहृत्प्रियश्च विद्यावयःशीलगुणैः समानः ।
बभूव भूपस्य स तस्य विप्रो विश्वंभराभारसहः सहायः ॥ ३८ ॥

अपिच ।

ब्रह्मण्योऽपि ब्रह्मवित्तापहारी स्त्रीयुक्तोऽपि प्रायशो विप्रयुक्तः ।
सद्वेषोऽपि द्वेषनिर्मुक्तचेताः को वा तादृग्दृश्यते श्रूयते वा ॥ ३९ ॥

अथ स पार्थिवस्तस्मिन्नमात्ये परिजनपरिवृढे प्रौढप्रमणि निगूढमन्त्रे मन्त्रिणि तृणीकृतस्त्रैणविषयरसे सौराज्यरागजनने जननीयमाने जनस्य, सर्वोपधा(२)शुद्धबुद्धौ निधाय राज्यप्राज्यचिन्ताभारमभिनवयौवनारम्भरमणीये रम्यरमणीजननयनहृदयप्रिये प्रियङ्गुभासि जित(३)मदनमहस्यपहसितसुरासुरसौभाग्ययशसि विस्मापितसमस्तजनमनसि लसल्लावण्यपुञ्जपराजित सकलसमुद्राम्भसि कान्तिकटाक्षितचन्द्रमसि वयसि वर्तमानो मा(४)नि-

तस्य चेति ॥ तस्य नरपतेः श्रुतशीलो नामामात्योऽस्ति स्म आसीत् । यशसां कुशेशयानि, संसारस्य सर उपमानम् ॥ क ॥

ब्रह्मण्य इति ॥ ब्रह्मणे हितो ब्रह्मण्यः । तथा ब्रह्म वेत्ति । तथा तापहारी । तथा विप्रैर्द्विजैर्युक्तः । तथा सन्शोभनो वेषो यस्य । विरोधांशः सुगम एव । ब्रह्मवित्तं ब्रह्मस्वम् । विप्रयुक्तो वियुक्तः ॥ ३९ ॥

अथेति ॥ अथानन्तरमेवं वर्णनीयेऽमात्ये राज्यभारं निवेश्यैवं वर्णनीये वयसि वर्तमानो

(१) 'आलानेति' ।—चपला या राज्यलक्ष्मीरेव करेणुका तस्याः । आलानस्तम्भोबन्धनस्तम्भः । चञ्चला हि राज्यलक्ष्मीर्नैकत्रावतिष्ठते । अतएव भारविः 'अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम्" इत्युक्तवान् ।

(२) 'सर्वोपधेति"—सर्वाभिरुपधाभिः कपटैः शुद्धा बुद्धिर्यस्य तस्मिन् ।

(३) जितेति—जितं मदनमहो येन तत् तस्मिन् ।

(४) मानितेति—मानितं समादृतं मानिनीजनानां मानिनीकामिनीनां यौवनमेव। सर्वस्वं येन । पार्थिवविशेषणमेतत् ।

तमामानिनीजनयौवनसर्वस्वः स्वयमनवरतं सकलसंसारसुखसंदोहमन्वभूत् ॥ क ॥

तथाहि ।

(१)कदाचिदनुत्पन्नविषमरणो गरुड इवाहितापकारी हरिवाहनविलासमकरोत् ॥ ख ॥

कदाचिच्चन्द्रमौलिरिव मदनवाणासनातिमुक्तशरसंछादितायां पर्वतभुवि विजहार ॥ ग ॥

कदाचिदच्युत इव शिशिरकमलाकरावगाहनोत्पन्नपुलककोरकिततनुरनन्तभोगभाक्सुखमन्वितिष्ठत् ॥ घ ॥

कदाचन्नलिनयोनिरिव राजसभावस्थितः प्रजाव्यापारमचिन्तयत् ॥ङ॥

कदाचिन्मयूर इव कान्तोन्नमत्पयोधरमण्डलिविलासेन हर्षमभजत् ॥ च ॥

कदाचिन्नक्षत्रराशिरिवाश्विन्या सेनया समन्वितो मृगानुसारी बहुशराजा सुखातिशयं सिषेवे ॥ क ॥

कदाचिदिति ॥ असंजातविषमयुद्धभीरहितानामपकारी । हरिरश्वस्तस्य वाहनं वाह्यालीप्रवहणम् । स एव विलासः । पक्षे विषान्मरणभयम् । अहिः सर्पः । हरेर्विष्णोर्वाहनविलासो यानलीला ॥ ख ॥

कदाचिदिति ॥ मदनो बाणोऽसनोऽतिमुक्तकः शरश्च मुञ्ज एभिर्वृक्षैः सम्यक्छादितायां पर्वतक्षोण्याम् । पक्षे मदनः कामस्तस्य बाणासनं धनुस्तत्प्रक्षिप्तैः शरैर्बाणैर्विधुरायां पर्वतभुवि । पर्वताद्भवति स्मेति पार्वत्याम् ॥ ग ॥

कदाचिदिति ॥ कमलानामाकरो वनम् । पक्षे कमलायाः श्रियाः करः पाणिः । अनन्ताभोगोऽनेकविलासः शेषाहिवपुश्च ॥ घ ॥

कदाचिदिति ।। राज्ञः सभा । पक्षे रजसा गुणेन निर्वृत्ते भावे स्थितः ॥ व्यापारो व्यवहारो निर्माणं च ॥ ङ ॥

कदाचिदिति ॥ कान्ताङ्गना काम्या च । पयोधरः स्तनो मेघश्च । विलास उपभोगः स्फुरणं च ॥ च ॥

कदाचिदिति ॥ अश्वाः सन्त्यस्यां तया सेनया युक्तः तथा मृगानुगामी बहुबालतृणपथेऽभ्राम्यत् । पक्षे अश्विनीमृगौ नक्षत्रे । इनेन रविणा सह सेनयेत्यश्विनीविशेषणम् । बहुश इति भिन्नम् । पवनमार्गो द्यौः । अत्र षकारात्प्राग्विसर्जनीय उपध्मानीयो वा । शष्पपदे तु षकार एव । तदेवंरूपभेदेऽपि श्रुतिसाम्यान्न दोष इति कविसमयः । तथाच चण्डदासकृते श्रीचण्डिकाचरिते महाकाव्ये—'पुष्पादपामिह सदाधिगमे समृद्धया पुष्पादपाः फलभराच्च विनम्रभावम् । पुष्पादपापि दधतो मुनिवत्सुजन्मापुष्पादपाति मधु साधु मधुव्रतौघाः' । अस्यार्थः—अपां जलानाम् । अधिगमे प्राप्तौ सत्याम् । पुष्पात्कुसुमात् । फलभरात्फलातिशयात् च या समृद्धिस्तया । पादपास्तरवो विनम्रभावमापुः । समृद्धौ

(१) कदाचिदिति—अत्र सर्वत्र शब्दमात्रसाम्याच्छाब्दी पूर्णोपमा ।

ऽपवनमार्गं बभ्राम ॥ क ॥

कदाचिदाञ्जनेय इवाक्षविनोदमन्वतिष्ठत् ॥ ख ॥

कदाचिद्वानरेश्वर इव सुग्रीवो वैदेहीति ब्रुवाणस्यालघुकाकुत्स्थस्यार्थिनः प्रार्थना क्रियतां सफलेति वानरपुंगवानादिदेश ॥ ग ॥

कदाचिन्मकरकेतन इव सुमनसो मार्गणान्विधाय स्वगुणं कर्णपूरीचकार ॥ घ ॥

कदाचिदम्भोनिधिरिवोच्चैःस्तननाभिरम्याः, कृतानिमेषनयनविभ्रमाः,

हि नम्रता स्यात् । जलाधिगमः पुष्पफलानां हेतुः । तानि च समृद्धेः । सा च नम्रातायाः इति । तथा पुष्पाणामक्षणं यत्र । तथाऽपापि पापरहितम् । शोभनं जन्म तथा सुनयो दधति । तद्वदेतेऽपि मधुव्रतौघाः सुजन्म धारयन्तः सन्तो मधु मकरन्दमपुः पिबन्ति स्म । पादैरङ्घ्रिभिः पादेषु मूलेषु वा पतन्त्यभीक्ष्णमित्यनेन मधुप्राचुर्योक्तिः । अत्रायुक्पादयोः षकार एव । युक्पादयोस्तु विसर्जनीयोपध्मानीयान्यतर एव न तु षकारः । परं श्रुतिसाम्यान्न दोषः । एवमेव विसर्जनीयजिह्वामूलीयषकारेष्वपि तथा 'ये सहजनिष्कलङ्काचारा अपि भान्ति निस्त्रिकूटगमात् । सुधियः काष्ठादशकंधराधिकं सपदि तेऽश्नुवते' । अस्यार्थः—सहजोऽकृत्रिमो निःकलङ्को निर्दोष आचारो येषां ते सुधियः काष्ठादशकं दिक्चक्रं धरैः पर्वतैरधिकमश्नुवते व्याप्नुवन्ति । स्त्रीणामभावो निस्त्रि । कूटं छद्म । तस्य गमो भ्रंशः इति समाहारद्वन्द्वः । एतेन जितेन्द्रियत्वोक्तिः । अपिर्विरोधे । येषां किल सहजस्वर्णायां लङ्कायां चारो गतिः । ते कथं त्रिकूटाचलगमनाभावेन भान्ति । दशकंधरो रावणः । काष्ठा दिशः । अत्र स्वर्णार्थनिष्कशब्दे षकार एव निष्कलङ्कशब्दे जिह्वामूलीयविसर्गौ इति बोध्यम् ॥ क ॥

कदाचिदिति ॥ अक्षैः पाशकैः विनोदं क्रीडाम् । पक्षे अक्षस्य रावणेः । विनोदं वधम् ॥ ख ॥

कदाचिदिति ॥ शोभना ग्रीवा यस्य । वै स्फुटार्थे । मह्यं देहीति ब्रुवाणस्य । तथा आ समन्ताल्लघ्व्यां काकौ भिन्नकण्ठध्वनौ तिष्ठतीत्यलघुकाकुत्स्थस्तस्य याचन्यावशात्स्वरभेदवतोऽर्थिनो याचकस्य प्रार्थना सफला क्रियतामित्यमुना प्रकारेण नरपुंगवान्नरश्रेष्ठानादिष्टवान् । वा समुच्चये । पक्षे वैदेही सीतेति प्रलपतोऽलघोर्गुरो रामस्य काकुत्स्थस्य सप्रयोजनस्य प्रार्थना सफला क्रियतामिति वानरपुंगवान्कपीशः सुग्रीवो नियुक्तवान् ॥ ग ॥

कदाचिदिति ॥ मार्गणान्याचकान् । इष्टार्थसंप्रदानेन सौमनस्ययुक्तान्विधाय स्वस्य गुणं त्यागाख्यं जगतोऽपि कर्णौ पूर्येते अनेनेति कर्णपूरः । च्वौ कर्णपूरीचकार । पक्षे सुमनसः पुष्पाणि । मार्गणा बाणाः । गुणो ज्या । कर्णपूरः कर्णान्तकर्षणम् ॥ घ ॥

कदाचिदिति ॥ उच्चैः स्तनाभ्यां नाभ्या च रम्या । तथा निर्निमेषनेत्रलीलाः सकामाः । वेलायां वारके विलसन्ति भोगायोपतिष्ठन्त इत्येवंशीला वारस्त्रीः । सिषेवे । अम्भोनिधिस्तु वेला अम्भोवृद्धीः । कीदृशीस्ताः । उच्चैःस्तननेन शब्देनाभिरम्याः । तथा कृतमनिमेषाणां मत्स्यानां नयनं प्रापणं यैस्तथोक्ता विविधाभ्रमा आवर्ता यासु ।

सकंदर्पाः, सिषेवे वेलाविलासिनीः ॥ क ॥

कदाचिद्दशरथ इवायोध्यायां पुरि स्थितः सुमित्त्रोपेतो रममाणरामभरतप्रेक्षणेन क्षणमाह्लादमन्वभूत् ॥ ख ॥

एवमस्य सकलजीवलोकसुखसंतानमनुभवतो यान्ति दिनानि ॥ ग ॥

अथ कदाचिदुन्नमत्पयोधरान्तरपतद्धारावलीविराजिताः, कमलदलकान्तनयनाः, सुरचापचक्रवक्रभ्रुवः, विद्युन्मणिमेखलालंकारधारिण्यः, शिञ्जानामुक्तकलहंसकाः, प्रौढकरेणुसंचारहारिण्यः, कम्रकंधराः, तिरस्कृतशशाङ्ककान्तिकलापोच्चमुखमण्डलाः सकलजगज्जेगीयमानगुणमिममनुपमरूपलावण्यराशिराजितं राजानमवलोकयितुमिवावतरन्ति स्म वर्षाः ॥घ॥

यत्र च।

आकर्ण्य स्मरयौवराज्यपटहं जीमूतनूत्नध्वनिं
नृत्यत्केकिकुटुम्बकस्य दधतं मन्द्रां मृदङ्गक्रियाम्।

---

तथा कं जलं तस्य दर्पेण मोक्षेण सह। दर्पमोचनार्थत्वात्। तथा विलसन्त्यभीक्ष्णम् ॥ क ॥

कदाचिदिति ॥ न योद्धुं शक्याऽयोध्या संज्ञा च। तस्यां पुरि। सुमित्रैरुपेतः सुमित्रया कलत्रेण। विलसन्त्यो रामा विलासिन्यो यत्र तेन भरतसंगीतेन विक्रीडद्रामभरतयोरवलोकनेन चाह्लादं नलो दशरथश्च भेजे ॥ ख ॥ ग ॥

अथेति ॥ अनन्तरं कस्मिन्नपि समये नृपमवेक्षितुं वर्षा अवातरन्। वर्षाशब्दगतस्त्रीत्वेन वर्षाणां साक्षात्स्त्रीत्वमध्यवसितम्। ततश्च पयोधरा मेघाः स्तनाश्च। पतद्धारावली पतन्ती धाराश्रेणी चलन्ती हारावली च। यद्वा पयोधरयोः स्तनयोरन्तर्मध्येऽपतन्तोऽतिसंहतत्वादप्रविशन्तो हारा यासाम्। तथा वलीभिरुदरे लेखाभिर्विराजिताः। कमलदलानां कान्तमिष्टं नयनमतिवाहनं यासाम्। वर्षाणां ह्यतिवाहने कमलानामुल्लासः। पक्षे कमलदलवत्कान्तनेत्राः। इन्द्रधनुश्चक्रमेव वक्रे भ्रुवौ यासाम्। पक्षे सुरचापचक्रवद्वक्रभ्रुवः। विद्युदेव मणिमेखला तां तथालमत्यर्थं कस्य जलस्यारं वेगं धारयन्ति। यद्वा कारस्य राज्ञे देयांशस्य धारिण्यः। वर्षा हि सस्यादिसाधकत्वात्करस्यापि साधनम्। पक्षे विद्योतमानमणिकाञ्चीभूषणधारिण्यः। शिञ्जाना गर्जन्त्यस्तथा मुक्ता मानसं प्रति प्रस्थापिता हंसका याभिः। यद्वा मुक्तहंसानि कानि जलानि यासु। तत्समये हंसानां मानसे गमनात्। पक्षे शिञ्जाने शब्दायमाने आमुक्ते बद्धे हंसके चरणाभरणे यासाम्। प्रकर्षेणोढं कं जलं तेन रजः संचाररोधिकाः। पक्षे प्रगल्भगजगमनमनोज्ञाः। कं जलं धरन्तीति कंधरा मेघास्ते कम्रा रम्या यासु। पक्षे कंधरा ग्रीवा ॥ छादितशशाङ्ककान्तयः। तथा काय पानीयाय लापाः कलापाः। कुटुम्बिनीजनगीयमानरासकाः। तैरुच्चमुखा मेघालोकनायोन्मुखा मण्डला देशा यासु। पश्चात्कर्मधारयः। पक्षे निर्जितेन्दुदीप्त्यतिशयमुच्चमुत्कृष्टमुन्नतकपोलं वा मुखबिम्बं यासाम् ॥ घ ॥

आकर्ण्येति ॥ युवा चासौ राजा चेति युवराजस्तस्य भावो यौवराज्यम्। कामस्य तरुणराजत्वपटहोपमं नृत्यत्केकिनां च मृदङ्गावधि दधानं घनगर्जितं श्रुत्वा मुदेव विकस-

उन्मीलन्नवनीलकन्दलदलव्याजेन रोमाञ्चिता
हर्षेणेव समुच्छ्रिता वसुमती दध्रे शिलीन्ध्रध्वजान् ॥ ४० ॥

अपिच ।

पर्णैः कर्णपुटायितैर्नवरसप्राग्भारविस्फारितैः
शृण्वन्तो मधुरं द्युमण्डलमिलन्मेघावलीगर्जितम् ।
शाखाग्रग्रथमानसौरभभरभ्रान्तालिपालिध्वजा-
स्तोषेणेव वहन्ति पुष्पपुलकं धाराकदम्बद्रुमाः ॥ ४१ ॥

अथ क्रमेण

नीरं नीरजनिर्मुक्तं नीरजस्कं भुवस्तलम् ॥
जातं जातिलतापुष्पगन्धान्धमधुपं वनम् ॥ ४२ ॥

अपिच ।

धुतकदम्बकदम्बकनिष्पतन्नवपरागपरागममन्थराः ।
हृततुषारतुषा रतिरागिणां प्रियतमा मरुतो मरुतो ववुः ॥ ४३ ॥

ततश्च । तिरस्कृततरणित्विषि, विगल(१)द्वारिविप्रुषि, शान्तवातरूतृषि,

त्कन्दलच्छलेन पुलकिता भूरभूत । शिलीन्ध्रध्वजानधारयत् ॥ ४० ॥

पर्णैरिति ॥ वसन्ते पुष्प्यन्ति ते धूलीकदम्बा वर्षासु च धाराकदम्बाः ॥ शाखाग्रे मिलन्तः सौरभभराद्भ्रान्ता उपर्युपर्यटन्तश्च तेऽलयश्च त एव पालिध्वजाः प्रसिद्धचिन्हानि येषां ते धाराकदम्बद्रुमाः पुष्पमेव पुलकं मदेन वहन्ति ॥ हर्षहेतुर्गर्जनश्रवणमेव । रसो जलं रागश्च । अन्योऽपि द्युमण्डलान्मिलन्त्या योषितः शब्दं श्रुत्वैवंविधो भवति 'ग्रन्थ बन्धन' इति यौजादिकाद्विकल्पिते णिचि ग्रथितुं शीलमेषामिति चानशि ग्रथमानाः । यत्कविरहस्ये 'गाथां ग्रन्थयति ग्रथत्यविरतं श्लोकांश्च लोकोत्तरान्गद्यं ग्राथयति स्फुटार्थललितं यो नाटकं ग्रन्थति । ग्रन्थाति श्रुतिशास्त्रयोर्विवरणं ग्रन्थाननेकांश्च यः स्वच्छं यस्य मनः स्वभावसरलं न ग्रन्थते कुत्रचित्' इति । अस्मादात्मनेपदमपि । तथा च । 'वहति जलमियं पिनष्टि गन्धानियमियमुद्ग्रथते स्रजो विचित्राः । मुसलमिदमियं च पातकाले मुहुरनुयाति कलेन हुङ्कृतेन' इति ॥ ४१ ॥

नीरमिति ॥ नीरं जलमम्भोजमुक्तं भूतलं निःपांसु वनं च जातीपुष्पसौरभान्धभृङ्गं जातम् ॥ ४२ ॥

धुतेति ॥ कम्पितकदम्बद्रुमसमूहान्निःसरन्त्योऽसौ नवः परागस्तत्संगमेन मन्थरा मन्दाः ॥ तथा ऊढसीकरकणाः ॥ तथा रतिरागोऽस्ति येषां तेषामतिदयिता मरुतो वाता मरोः पर्वताद्वान्ति स्म ॥ परागमेति परापूर्वः पर उत्कृष्ट आगमो वा ॥ ४३ ॥

ततश्चेति ॥ तिरस्कृता रवित्विषो येन । इन्द्रगोपा वर्षासु जाताः क्षुद्रजन्तवः॥

(१) विगलदिति—विगलन्ति पतन्ति, वारीणां जलानां विप्रूषि बिन्दवो यत्र सः । अत्र सप्तम्यन्तपदानि 'जीमूतसमये' इत्यस्य विशेषणानि ।

निर्वाणवारणवपुषि, मानिनीमानग्रहग्रन्थिमुषि, जनितजवासकशुषि, विधववधूविद्विषि, वर्धितमण्डूकहृषि, मुद्रितचन्द्रमसि, विद्राणपङ्कजसरसि, स्वाधीनप्रियप्रेयसि, प्रोषितकलहंसवयसि, नष्टनक्षत्रमण्डलमहसि, मेचकितनभसि, निष्पतन्नीपरजसि, स्फुटकुटजरजःपुञ्जपिञ्जरिताष्टदिग्भासि, भा(१)सुरसुरचापचक्रभृति, मयूरमदकृति, महिषशोषहृति, विस्तरत्सरिति, विद्योतमानविद्युति, वहन्मन्दमेघंकरमरुति, हृष्यत्कृषाणयोषिति, पुष्यत्केतकीगन्धपानमत्तमधुकृति, प्रो(२)द्भूतभूरुहि, दरिद्रनिद्रा(३)द्रुहि, सगर्वगोदुहि, कदम्बस्तम्बालम्बिमधुलिहि, मुदि(४)तमदनाट्टहासायमानघननादमुचि, पच्यमानजम्बूफलश्यामलितवनान्तरुचि, रचितपान्थसार्थशुचि, श्रूयमाणमदमधुरमयूरवाचि, विनि(५)द्रकोशातकीशालिनि, यूथि(६)काजालिनि, नवमालिकामालिनि, कन्दलभाजि, पच्य(७)मानजम्बूतरुवनराजिभ्राजि, भिक्षाक्षणक्षपितपरिव्राजि, शान्तसारङ्गरुजि, नीडनिर्माणाकुलबालभुजि, सान्द्रेन्द्रगोपयुजि, श्च्योतत्त(८)मालधारागृहसदृशि, श्यामायमानदशदिशि, दिवापि श्रूयमाणरजनिशङ्काकुलचक्रवाकचक्रक्रुशि, श (९)कटसंचाररुधि, पल्लवितवीरुधि, विश्रान्तजिष्णुक्ष्मापालयुधि, क्षीणोक्षक्षुधि, क्षीर(१०)समुद्रनिद्राणबाणबाहुच्छिदि, सिन्धुरोधोभिदि, दवदहननुदि, विरहिमनस्तुदि, जनितजनमुदि, तापिच्छच्छायानुच्छेदिनि, छन्नकुटीमध्यबध्यमानवाजिनि, विकसितबकुलवनविराजिनि, सीरसीमन्तितग्रामसीमनि, विजयमानमनोजन्मनि, जाते जगज्जीविनि, जीमूतसमये कदाचिदम्भसि दिवसे

श्च्योतत्क्षरत्तमालानां संबन्धि यद्धारागृहं तस्य सदृशि ॥ क्षीरोदधौ निद्रायमाणो वाणा-

(१) भासुरेति—बिभर्तीति भृत्। भासुरसुरचापचक्रस्य भृत्। तस्मिन्।

(२) प्रोद्भूतेति—प्रोद्भूता उत्पन्ना भूरुहो वृक्षा यस्मिंस्तत् तत्र।

(३) "दरिद्रेति" दरिद्राणां गृहाभावात् निद्राद्रोहो युज्यत एव।

(४) 'मुदितेति"—मुदितो हर्षितो यो मदनः कामः। तस्याट्टहासायमाना ये घनास्तेषां नादं गर्जितं मुञ्चतीति तथोक्ते।

(५) "विनिद्रेति"—विनिद्रा विकसिता या कोशातकी फलविशेषः। तया शालते शोभते इति विनिद्रकोशातकीशाली तस्मिन्।

(६) यूथिकेति—यूथिकाजालमस्यास्तीति तत्र।

(७) "पच्यमानेति"—पच्यमाना जम्बूतरवो येषु। एतादृशा या वनराजयो वनमालाः। बहुव्रीहिगर्भबहुव्रीहिः। ताभिर्भ्राजतेऽसौ तस्मिन्।

(८) श्च्योतदिति—श्च्योतन्त्यस्तमालधारा येषु तादृशा ये गृहास्तेषां सदृक् = समानः। तस्मिन्।

(९) शकटेति—'शकटानां यानानां संचारं गमनं रुणद्धीति तत्र।

(१०) क्षीरेति—क्षीरसमुद्रे क्षीरसागरे निद्राणो बाणबाहुं बाणासुरभुजं छिनत्तीति बाणबाहुच्छित् यत्र तत्र।

मृगयावनपालकः प्रविश्य राजानं विज्ञापयामास ॥ क ॥

'देव,

किं स्या(१)दञ्जनपर्वतः स्फटिकयोर्द्वन्द्वं दधद्दीर्घयो-
रम्भोमेदुरमेघ एष किमुत श्लिष्यद्बलाकाद्वयः।
शून्यः किं नु करेण कुञ्जर इति भ्रान्तिं समुत्पादय-
न्दंष्ट्राद्वन्द्वकरालकालवदनः कोलः कुतोऽप्यागतः ॥ ४४ ॥

ततश्चासौ

भिन्दन्कन्दकसेरुकन्दलभृतः स्निग्धप्रदेशान्भुवो
भञ्जन्नञ्जनशैलशृङ्गसदृशः फुल्लल्लतामण्डपान्।
मन्दं मन्दरलीलयाब्धिसदृशं मथ्नंश्च लीलासरः
क्रोडः क्रीडति भाययन्निव भवत्क्रोडावने रक्षकान्' ॥ ४५ ॥

राजा तु तदाकर्ण्य चिन्तितवान्--

'अच्छाच्छैः शुकपिच्छगुच्छहरितैश्छन्ना वनान्तास्तृणैः
सेव्याः संप्रति सान्द्रचन्द्रकिकुलैरुत्ताण्डवैर्मण्डिताः।
येषु क्षीरविपाण्डु पल्वलपयः कल्लोलयन्तो मना
ग्वाता वान्ति विनिद्रकेतकवनस्कन्धे लुठन्तः शनैः ॥ ४६ ॥

माद्यन्ति च तेषु संप्रति प्रोथिनः। तद्युज्यते विहर्तुम्' इत्यवधारयन्नाहूय बाहुकनामानं सेनापतिमादिदेश ॥ ख ॥

'भद्र द्रुतमनुष्ठीयताम्, समादिश्यन्तां कृतवैरिवि(२)पत्तयः पत्तयः, पर्याण्यन्तां मनस्तुरगास्तुरगाः, सज्जीक्रियन्तां नि(३)जवेगनिर्जितमात-

च्छरबाहुच्छिद्विष्णुर्यत्र ॥ सीमन्त इव सीमन्तः। ततः करोतिण्यन्तात् क्ते तारकादित्वा-दितचि वा रूपम् ॥ तस्मिन्नित्थंभूते मेघसमय आखेटकारण्यपालको नृपं व्यज्ञापयत् ॥क॥

किं स्यादिति ॥ दीर्घस्फटिकद्वयोपेतोऽञ्जनगिरिः, बलाकाद्वयान्वितः सजलो जलदः, शुण्डाशून्यो हस्ती, किमिति भ्रान्तिं जनयन्नेव कुतोऽपि कोलः सूकर आगात् ॥ ४४ ॥

भिन्दन्निति ॥ मन्दरलीलया करणभूतया भाययन् ॥ अत्र करणाद्भयेनात्वमात्मने-पदं पुगागमश्च न भवति ॥ ४५ ॥

अच्छाच्छैरिति ॥ चन्द्रकिणो मयूराः। पल्वलमखातं सरः ॥ ४६ ॥

माद्यन्तीति ॥ प्रोथिनः सूकराः ॥ क ॥

भद्रेति ॥ पर्याणं करोत्यश्वानाम्। 'तत्करोति तदाचष्टे' इति णिचि पर्याणयत्य-श्वान्। पश्चात्संबन्धनिवृत्तौ व्याकरणं सूत्रयतीति त्रिलोकीं तिलकयतीतिवत्कर्मत्वम्।

(१) किं स्यादिति"--अत्र दंष्ट्राद्वन्द्वस्य स्फटिकद्वन्द्वं बलाकाद्वन्द्वं चोपमानम्।
(२) कृतेति--कृता वैरिणां विपत्तयो यैस्ते।
(३) निजवेगेति--निजवेगेन निर्जितो मातरिश्वा पवनो यैस्ते। मातर्यन्तरिक्षे श्वयति गच्छतीति मातरिश्वा। आखेटसमये राज्ञा सह श्वानोऽपि नीयन्त इति समयः।

रिश्वानः श्वानः, समारोप्यन्तामपनीताहितायूंषि धनूंषि, गृह्यन्तां निर्मथित-प्रोथियूथपाशाः पाशाः' इति ॥ क ॥

अथ मौलिमिलन्मुकुलितकरकमलयुगलेन सेनापोतना 'यदाज्ञापयति देवः' इत्यभिधाय त्वरया तथा कृते सति ॥ ख ॥

स्वयमपि

निर्मांसं मुखमण्डले परिमितं मध्ये लघु कर्णयोः
स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे।
पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥ ४७ ॥

आरुह्य च क्रमेण कार्दमि(१)ककर्पटावनद्धमूर्धजैर्दण्डखण्डपाणिभिः क्रूरकर्मोचिताकारैर्वागुरावाहिभिरनन्तैः कृतान्तदूतैरिव पाशहस्तैः पापर्द्धिकैरनुगम्यमानः, दूरादुन्नमितकन्धरैस्तथोर्ध्वकर्णसंपुटैरकाण्डोड्डीनप्राणैरिव वनप्राणिभिराकर्ण्यमानहर्षितहयहेषारवः, पवनकम्पिततरुशाखाग्रपल्लवव्याजेन दूरादेवोत्क्षिप्तहस्ताभिरुड्डीयमानशकुनिकुलकोलाहलच्छलेन भयान्निवार्यमाण इव वनदेवताभिः, अभिमुखागतैरुन्मिषत्तरुपुष्पप्रकरमकरन्दबिन्दुवर्षवाहिभिर्वनविनाशशङ्कितैरर्घ्यमिवोपपादयद्भिरुपरुध्यमान इव वनमारुतैः' उन्निद्रसान्द्रकुसुमकेसराङ्कुरजालजटिलाभिर्भयादुद्गतरोमाञ्चप्रपञ्चाभिरिवोद्भ्रान्तभृङ्गरवगद्गदरुदितेन निषिध्यमान इव वनवीरुद्भिः, उद्भिन्नभास्वदमन्दकन्दलावलोकनेनानन्द्यमानः श्वानुगतोऽप्यश्वानुगतः सगजमप्यगजं तद्वनमाससाद ॥ ग ॥

ततश्च केचिदुद्यत्परश्वधा गणपतयः, केऽपि दृष्टसिंहिकासुतविक्रमाः शशधराः, केऽपि पाशपाणयो जम्बुकदिक्पालाः, केऽपि हरिमार्गानुसारिणो बलभद्राः, केऽपि चक्रपाणयो मधुसूदनाः, केऽपि शिवागमावर्तिनो रौद्राः,

मन इव तुराः शीघ्रा गच्छन्तीति। निर्मथिताः प्रोथियूथपानां वराहयूथपानामाशा इच्छा यैः ॥ क ४७ ॥

आरुह्य चेति ॥ कर्दमेन नीलीलोहमलादिना रक्तं कार्दमिकम्। अभिरश्वैश्वानुगतो राजा। गजोपेतम्। अगः पर्वतत्समीपोद्देशोऽप्यगस्तत्र जातमगजं तद्वनमाप ॥ ग ॥

ततश्चेति ॥ उद्यन्तः पलायमानाः परे उत्कृष्टाः श्वानस्तान्दधति। तथा गणस्य सेनायाः पतयः हेरम्बाश्च उद्गृह्यमाणपरशवः। सिंहिकासुतः केसरिकिशोरो राहुश्च। शशं धरतीति शशधरः पत्तिश्चन्द्रश्च। पाशः पाणौ यस्य स पाशपाणिर्वरुणश्च। जम्बुकः

(१) कार्दमिकेति—अत्र मृगयानुरूपवेषवर्णनम्। कृतान्तदूतैरिवेत्यत्रेवशब्दस्य संभावनापरत्वादुत्प्रेक्षा। आकर्ण्यमानो हर्षितहयस्य हेषारवो यस्य सः। अश्वशब्दार्थकं हेषापदम्। अत्र *हेषारवे* चूतवृक्षवदपौनुरुक्त्यम्।

मृगयावनपालकः प्रविश्य राजानं विज्ञापयामास ॥ क ॥

'देव,

किं स्या(१)दञ्जनपर्वतः स्फटिकयोर्द्वन्द्वं दधद्दीर्घयो-
रम्भोमेदुरमेघ एष किमुत श्लिष्यद्बलाकाद्वयः।
शून्यः किं नु करेण कुञ्जर इति भ्रान्तिं समुत्पादय-
न्दंष्ट्राद्वन्द्वकरालकालवदनः कोलः कुतोऽप्यागतः ॥ ४४ ॥

ततश्चासौ

भिन्दन्कन्दकसेरुकन्दलभृतः स्निग्धप्रदेशान्भुवो
भञ्जन्नञ्जनशैलशृङ्गसदृशः फुल्लल्लतामण्डपान्।
मन्दं मन्दरलीलयाब्धिसदृशं मथ्नंश्च लीलासरः
क्रोडः क्रीडति भाययन्निव भवत्क्रीडावने रक्षकान्' ॥ ४५ ॥

राजा तु तदाकर्ण्य चिन्तितवान्—

'अच्छाच्छैः शुकपिच्छगुच्छहरितैश्छन्ना वनान्तास्तृणैः
सेव्याः संप्रति सान्द्रचन्द्रकिकुलैरुत्ताण्डवैर्मण्डिताः।
येषु क्षीरविपाण्डु पल्वलपयः कल्लोलयन्तो मना
ग्वाता वान्ति विनिद्रकेतकवनस्कन्धे लुठन्तः शनैः ॥ ४६ ॥

माद्यन्ति च तेषु संप्रति प्रोथिनः। तद्युज्यते विहर्तुम्' इत्यवधारयन्नाहूय बाहुकनामानं सेनापतिमादिदेश ॥ ख ॥

'भद्र द्रुतमनुष्ठीयताम्, समादिश्यन्तां कृतवैरिवि(२)पत्तयः पत्तयः, पर्याणयन्तां मनस्तुरगास्तुरगाः, सज्जीक्रियन्तां नि(३)जवेगनिर्जितमात-

---

छरबाहुच्छिद्विष्णुर्यत्र ॥ सीमन्त इव सीमन्तः। ततः करोतिण्यन्तात् क्ते तारकादित्वादितचि वा रूपम् ॥ तस्मिन्नित्थंभूते मेघसमय आखेटकारण्यपालको नृपं व्यज्ञापयत् ॥क॥

किं स्यादिति ॥ दीर्घस्फटिकद्वयोपेतोऽञ्जनगिरिः, बलाकाद्वयान्वितः सजलो जलदः, शुण्डाशून्यो हस्ती, किमिति भ्रान्तिं जनयन्नेव कुतोऽपि कोलः सूकर आगात्॥४४॥

भिन्दन्निति ॥ मन्दरलीलया करणभूतया भाययन् ॥ अत्र करणाद्भयेनात्वमात्मनेपदं पुगागमश्च न भवति ॥ ४५ ॥

अच्छाच्छैरिति ॥ चन्द्रकिणो मयूराः। पल्वलमखातं सरः ॥ ४६ ॥

माद्यन्तीति ॥ प्रोथिनः सूकराः ॥ क ॥

भद्रेति ॥ पर्याणं करोत्यश्वानाम्। 'तत्करोति तदाचष्टे' इति णिचि पर्याणयत्यश्वान्। पश्चात्संबन्धनिवृत्तौ व्याकरणं सूत्रयतीति त्रिलोकीं तिलकयतीतिवत्कर्मत्वम्।

---

(१) किं स्यादिति"—अत्र दंष्ट्राद्वन्द्वस्य स्फटिकद्वन्द्वं बलाकाद्वन्द्वं चोपमानम्।
(२) कृतेति—कृता वैरिणां विपत्तयो यैस्ते।
(३) निजवेगेति—निजवेगेन निर्जितो मातरिश्वा पवनो यैस्ते। मातर्यन्तरिक्षे श्वयति गच्छतीति मातरिश्वा। आखेटसमये राज्ञा सह श्वानोऽपि नीयन्त इति समयः।

रिश्वानः श्वानः, समारोप्यन्तामपनीताहितायूंषि धनूंषि, गृह्यन्तां निर्मथित-प्रोथियूथपाशाः पाशाः' इति ॥ क ॥

अथ मौलिमिलन्मुकुलितकरकमलयुगलेन सेनापोतना 'यदाज्ञापयति देवः' इत्यभिधाय त्वरया तथा कृते सति ॥ ख ॥

स्वयमपि

निर्मांसं मुखमण्डले परिमितं मध्ये लघु कर्णयोः
स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे।
पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥ ४७ ॥

आरुह्य च क्रमेण कार्दमि(१)ककर्पटावनद्धमूर्धजैर्दण्डखण्डपाणिभिः क्रूरकर्मोचिताकारैर्वागुरावाहिभिरनन्तैः कृतान्तदूतैरिव पाशहस्तैः पापर्द्धिकैरनुगम्यमानः, दूरादुन्नमितकन्धरैस्तथोर्ध्वकर्णसंपुटैरकाण्डोड्डीनप्राणैरिव वनप्राणिभिराकर्ण्यमानहर्षितहयहेषारवः, पवनकम्पिततरुशाखाग्रपल्लवव्याजेन दूरादेवोत्क्षिप्तहस्ताभिरुड्डीयमानशकुनिकुलकोलाहलच्छलेन भयान्निवार्यमाण इव वनदेवताभिः, अभिमुखागतैरुन्मिषत्तरुपुष्पप्रकरमकरन्दबिन्दुवर्षवाहिभिर्वनविनाशशङ्कितैरर्घ्यमिवोपपादयद्भिरुपरुध्यमान इव वनमारुतैः' उन्निद्रसान्द्रकुसुमकेसराङ्कुरजालजटिलाभिर्भयादुद्गतरोमाञ्चप्रपञ्चाभिरिवोद्भ्रान्तभृङ्गरवगद्गदरुदितेन निषिध्यमान इव वनवीरुद्भिः, उद्भिन्नभास्वदमन्दकन्दलावलोकनेनानन्द्यमानः श्वानुगतोऽप्यश्वानुगतः सगजमप्यगजं तद्वनमाससाद ॥ ग ॥

ततश्च केचिदुद्यतपरश्वधा गणपतयः, केऽपि दृष्टसिंहिकासुतविक्रमाः शशधराः, केऽपि पाशपाणयो जम्बुकदिक्पालाः, केऽपि हरिमार्गानुसारिणो बलभद्राः, केऽपि चक्रपाणयो मधुसूदनाः, केऽपि शिवागमावर्तिनो रौद्राः,

मन इव तुराः शीघ्रा गच्छन्तीति। निर्मथिताः प्रोथियूथपानां वराहयूथपानामाशा इच्छा यैः ॥ क ४७ ॥

आरुह्य चेति ॥ कर्दमेन नीलीलोहमलादिना रक्तं कार्दमिकम्। अभिरश्वैश्वानुगतो राजा। गजोपेतम्। अगः पर्वतस्तत्समीपोद्देशोऽप्यगस्तत्र जातमगजं तद्वनमाप ॥ ग ॥

ततश्चेति ॥ उद्यन्तः पलायमानाः परे उत्कृष्टाः श्वानस्तान्दधति। तथा गणस्य सेनायाः पतयः हेरम्बाश्च उद्गृह्यमाणपरशवः। सिंहिकासुतः केसरिकिशोरो राहुश्च। शशं धरतीति शशधरः पत्तिश्चन्द्रश्च। पाशः पाणौ यस्य स पाशपाणिर्वरुणश्च। जम्बुकः

(१) कार्दमिकेति—अत्र मृगयानुरूपवेषवर्णनम्। कृतान्तदूतैरिवेत्यत्रेवशब्दस्य संभावनापरत्वादुत्प्रेक्षा। आकर्ण्यमानो हर्षितहयस्य हेषारवो यस्य सः। अश्वशब्दार्थकं हेषापदम्। अत्र *हेषारवे* चूतवृक्षवदपौनुरुक्त्यम्।

केऽप्याहिताग्नयो विप्रलोकाः, केऽपि खण्डिताञ्जनाधरप्रवालाः प्रभञ्जनाः, केऽप्युत्खातदन्तिदन्तमुष्टयो निस्त्रिंशाः, तस्य पृथ्वीपतेराकुलितश्वापदाः पदातयो वनं रुरुधुः ॥ क ॥

ततश्च तैः क्रियन्ते विकलभा वननिकुञ्जाः कुञ्जराश्च, भ्रियन्तेऽनेकधारयातिपातिनः खड्गाः खड्गिनश्च, कृष्यन्ते कूजन्तः कोदण्डदण्डा गण्डकाश्च, विक्षिप्यन्ते परितः शराः शरभाश्च, भज्यन्ते तरवस्तरक्षवश्च ॥ ख ॥

क्षणेन च पतन्ति पीवरा वराहाः, सीदन्ति दन्तिनः, विरसं रसन्ति सातङ्का रङ्कवः, प्रकाशैलं शैलं भयादारोहन्ति रोहिताः, शरसंघातघूर्णिता यान्ति महीं महिषाः, दुर्गसंश्रयं श्रयन्ते तरलितनेत्राश्चित्रकाः, त्वरिततरं तरन्तीवोत्पतन्तो नभसि निजजवनिर्जिततुरंगाः कुरङ्गाः ॥ ग ॥

तत्र च व्यतिकरे

(१)जाताकस्मिकविस्मयैः किमिदमित्याकर्ण्यमानः सुरैः
संत्रासोज्झितकर्णतालचलनान्दिग्दन्तिनः कम्पयन् ।
जन्तूनां जनितज्वरः स मृगयाकोलाहलः कोऽप्यभू-
द्येनेदं स्फुटतीव निर्भरभृतं ब्रह्माण्डभाण्डोदरम् ॥ ४८ ॥

---

शृगालो वरुणश्च । यद्विश्वप्रकाशः—'जम्बुकः फेरवे नीचे प्रतीचीदिक्पतावपि' । हरिं सिंहं मार्गं मृगसमूहं चानुसरन्ति । बलेन भद्रा शक्ताः । पक्षे हरेर्विष्णोर्मार्गोऽथवा बलभद्रो बलदेवः । चक्रं पाणौ यस्य स चक्रपाणिर्विष्णुश्च । मधु क्षौद्रं दैत्यश्च । सूदनं क्षरणं मारणं च । शिवा शृगाली तस्या गमो गतिः पक्षे शिवस्यागमाः शास्त्राणि । शैवाश्च । गृहीतहविर्भुजो वीच्शकुन्तान्प्रलोकयन्तः पापर्द्धिका हि कपोतादिपातनाय तरूणामधस्तात्तापनीसंज्ञकामग्नीष्टिकां; कुर्वन्ति । पक्षे साग्निहोत्रा विप्रलोकाः । खण्डिता अञ्जनस्य पञ्चिकपक्षिणोऽधरप्रवालाः पुच्छानि यैः । यद्वाऽञ्जनस्य शाखिनोऽधःपल्लवाः । वातास्तु खण्डितोऽञ्जनाख्यायाः प्रियाया ओष्ठपल्लवो यैः । उत्खाता दन्तिदन्ता यैस्तथोक्ता मुष्टयः संग्रहा येषाम् । पक्ष उत्क्षिप्तदन्तिदन्तप्रधानो मुष्टिः त्सरुर्येषु । निस्त्रिंशाः क्रूरकर्माणः खड्गाश्च । ईदृशास्तस्य पत्तयो वनं वेष्टयामासुः ॥ क ॥

ततश्चेति ॥ विगताः कलभा येभ्यस्ते व्यपेतकरिपोताः । कुञ्जरास्तु विकलकान्तयो भयादिति शेषः । खड्गा द्विधारत्वादनेकया धारया पतन्त्यभीक्ष्णम् । गण्डकास्तु रयेनातिपतन्ति । य उच्छिन्नश्ङ्गाः प्रौढास्ते खड्गिनः । अतएव रयाभिपातिनः । त एव बालकाः गण्डकाः । अत एव कूजन्तः । तरक्षवश्चित्रकाद्याः ॥ ख ॥

क्षणेन चेति ॥ सातङ्काः सभयाः । रङ्कवो मृगाः । प्रकाशाः स्पष्टा एला लता

---

(१) जातेति—जात आकस्मिको विस्मयो येषां ते तैः सुरैरिदं किमिति हेतोराकर्ण्यमानः श्रूयमाणः । संत्रासेन भयेन, उज्झितानि परित्यक्तानि कर्णतालचलनानि यैस्ते तान् । दिग्दन्तिनो दिग्गजान् । कम्पयन् । जन्तूनां जनितज्वरः । स कोऽप्यपूर्वः । मृगयाकलकलः । अभूत् । येन निर्भरभृतं व्याप्तम् । इदं ब्रह्माण्डभाण्डोदरं स्फुटतीव । स्फुटतिस्तौदादिः ॥४८॥

(१)राजाप्येकशरप्रहारपातितमत्तमातङ्गः सर्वतो विहारिहरिहरिणशशक-शम्बरवराहहननहेलया विचरन्नितस्ततस्तरुणतरतमालमञ्जरीजालनीलोद्धुषितस्कन्धकेसरमूर्ध्वस्तब्धकर्णसंपुटमश्वचक्राय क्रुध्यन्तमाघूर्णितघोणमनवरतकृतघनघोरघर्घररवमुत्क्षिप्तपुच्छगुच्छमभिमुखमेकस्मिन्नतिसान्द्रभद्रमुस्तास्तम्बभाजि पङ्किलपल्वलप्रदेशे तं शूरशूकरमपरमिव दवदहनदग्धाद्रिमद्राक्षीत् ॥ क ॥

दृष्ट्वा च रचितशरसन्धानलाघवो राघव इव राक्षसेश्वरस्य तस्योपरि परिणद्धविविधपत्त्रैः पतत्त्रिभिरभ्यवर्षत् ॥ ख ॥

तत्र च व्यतिकरे

किम(२)श्वः पार्श्वेषु प्लवनचतुरः किं नु नृपतिः
शरान्मुञ्चन्नुच्चैश्चलतरकराकृष्टधनुषा ।
किमालोलः कोलः परिहृतशरः शौर्यरसिको
न जानीमस्तेषां क इह परमो वर्ण्यत इति ॥ ४९ ॥

अपिच—

अज(३)नि जनितपृथ्वीमण्डलोत्पादकम्पं
किमपि चलितशैलं द्वन्द्वयुद्धं तयोस्तत् ।
स्खलिततुरगवेगो विस्मयेनैष यस्मि-
न्दिनपतिरपि शौर्याश्चर्यसाक्षी बभूव ॥ ५० ॥

अ(४)थ कथमपि नाथं प्रोथियूथस्य जित्वा
ज्वरित इव विशालं सालसः सालमूले ।
सुखमभजत राजा राजमानः श्रमाम्भः-
कणकलितकपोलालोललीलालकेन ॥ ५१ ॥

---

यत्र शैले । रोहितः श्वापदः । चित्रकोऽपि तद्विशेषः ॥ क ॥ ४८ ॥

अजनीति ॥ स्वभावतोऽपि मध्यंदिने स्खलिताश्ववेगो रविस्तत्र कवेरूहः ॥ ५० ॥

अथेति ॥ ज्वरित इव सालस इत्यनेन श्रमातिशयोक्तिः । अन्योऽपि ज्वरितो मूलादीनि सेवमानः स्वेदबिन्दुलक्ष्यमाणज्वरापगमो राजते ॥ ५१ ॥

---

(१) राजेति–राजा नलः पङ्किलपल्वलप्रदेशेऽपरं दवनहनदग्धाद्रिमिव तं शूरशूकरमद्राक्षीदित्यन्वयः। आघूर्णिता घोणा नासा यस्य तम् । अतिसान्द्रा घना ये भद्रमुस्तास्तम्बा मुस्ताफलगुच्छाः । तान् । भजतीति तत्र ।

(२) किमिति—शिखरिणीवृत्तम् । प्लवनचतुरः किमश्वो, वा त्वरया शरान्मुञ्चन् नृपतिस्तरलः । यद्वा निवारितशरः कोलो लोल इति नास्माकं निश्चयः ।

(३) अजनीति—उत्पादितभूमण्डलकम्पनं उच्चालितपर्वतं तयोर्द्वन्द्वयुद्धं जातम् । यद्युद्धं विलोकयितुं निरुद्धतुरगवेगः सूर्योऽपि समुत्सुको बभूव ।। ५० ।।

(४) अथेति—तं शूकरनाथं जित्वा नलः सालवृक्षमूले श्रमापनोदार्थमवतस्थे । श्रमाम्भःकणैः श्रमजनितस्वेदजललवैः कलितौ यौ कपोलौ तयोर्लोला लीलालका यस्य ।

तत्र च स्थितं श्रममुकुलितनयनारविन्दम् , आन्दोलयन्तः कुसुमिततरून् , तरलयन्तः शिखिशिखण्डमण्डलानि, ताण्डवयन्तस्तनुलतापल्लवनिवहान्, वहन्तो वहन्निर्झरजलशिशिरशीकरनिकरान्, करालयन्तः कुटजकुड्मलानि, मकरन्दविन्दुमुचो मन्दमानन्दयामासुः (१)कम्पितनीपवनाः पवनाः ॥ क ॥

अन(२)न्तरमनवरतकरालकाककौलेयककुलकवलनाकुलितकोलकरिकुरङ्गकण्ठीरवकिशोरदृषत्पृष्ठधाविते परितः परिजने, जनितविविधमृगवधूवध्याधीन्व्याधान्निवारयितुमिवान्तरान्तरा प्रसारितकरे मध्यस्थतां गतवति गभस्तिमालिनि, सहसंवर्धितमृगविनाशशोकभरादिव वनवीरुधां पतत्सु पुष्पलोचनेभ्यो वाष्पेष्विव मध्याह्नोष्णविलीनमकरन्दविन्दुषु, श्रूयमाणेषु वनदेवतानां वनविमर्दोपालम्भेष्विव तरुखण्डोड्डीनविविधविहङ्गविरुतेषु, विघट्टितार्भककुरङ्गकुटुम्बिनीकरुणकूजितव्याजेनान्यायमिव पूत्कुर्वतीषु वनराजिषु, इतस्ततः संचरच्चटुलतरतुरङ्गखुरशिखरशिखोत्खातधरणिमण्डलाद्वनविनाशवार्तां गगनचरेभ्यः कथयितुमिवोत्पतितेऽम्बरतलमकृतपरित्राणे च मूर्छित इव पुनः पुनः पतति भुवि भवनपारावतपतत्रिपत्रधूसरे धूलिपटले, सकम्पकपिकलापोल्ललनलुलिततरुतरुणमञ्जरीपुञ्जनिकुञ्जादुड्डेजिते मञ्जु गुञ्जति वनान्तरमपरमुच्चलिते चञ्चलचञ्चरीकचक्रवाले, चङ्क्रमणक्रमेण च संपन्ने सैन्यस्य श्रमावसरे तस्यैव सरससरलशालद्रुमस्याधस्तान्निषण्णे श्रमभाजि राजनि ॥ ख ॥

अकस्मात्कुतोऽपि

व(३)ल्लीवल्कपिनद्धधूसरशिराः स्कन्धे दधद्दण्डकं

---

तत्र चेति ॥ श्रममुकुलितनेत्रकमलं नृपं कम्पितनीपकाननाः पवनाः हर्षयांचक्रुः । कुटजकलिकानां करालनं विकासनम् ॥ क ॥

अनन्तरमिति ॥ कौलेयकः श्वा । कोलः सूकरः । पूत्करणमार्तव्याहरणम् ॥ ख ॥

वल्लीति ॥ क्वथितवती सटिते कौपीनवाससो यस्य । 'परिकुथत' इति पाठे कुथो

---

(१) कम्पितेति—कम्पितानि नीपवनानि कदम्बकाननानि यैस्ते पवनाः ।

(२) अनन्तरमिति—एतादृशि राजनि सति कुतोऽप्यध्वग आयात इति श्लोकेनान्वयः । अनवरतं करालानि यानि काककौलेयककुलानि । तेषां कवलनाय भक्षणाय । आकुलितानां कोलककुरङ्गकण्ठीरवकिशोरदृषदां पृष्ठे पश्चाद्भागे धाविते । विघट्टिता वियोजिता अर्भका यासां ताः । याः कुरङ्गकुटुम्बिन्यः कुरङ्ग्यः । तासां यत् करुणकूजितं तस्य व्याजेन । संचरन्तो ये चटुलतरास्तुरङ्गास्तेषां खुरशिखरशिखा खुरशिखराग्रभागाः । ताभिरुत्खातं यद् धरणिमण्डलं तस्मात् । सकम्पा ये कपयः । तेषां कलापानां समूहानामुल्ललनेनोत्प्लवनेन लुलिताः खण्डितास्तरुतरुणमञ्जरीपुञ्जा यस्मिन् । तादृशो यो निकुञ्जो लतामण्डपः । तस्मात् ।

(३) वल्लीति—तमध्वगमेव वर्णयति—वल्लीवल्कलाबद्धोत्तमाङ्गो दण्डधारी, मृन्मणिसहितः कौपीनभृत् , चरणन्यस्तजीर्णवासाः, भिक्षापात्रं वहन् समागत इति ॥ ५२ ॥

ग्रीवालम्बितमृन्मणिः परिकुथत्कौपीनवासाः कृशः।
एकः कोऽपि पटच्चरं चरणयोर्बद्ध्वाऽध्वगः श्रान्तवा-
नायातः क्रमुकत्वचा विरचितां भिक्षापुटीमुद्वहन् ॥ ५२ ॥

आगत्य च राजानमवलोक्य सविस्मयमेष चिन्तयांचकार ॥ क ॥

'अ(१)ब्जश्रीसुभगं युगं नयनयोर्मौलिर्महोष्णीषवा-
नूर्णारोमसखं मुखं च शशिनः पूर्णस्य धत्ते श्रियम्।
पद्मं पाणितले गले च सदृशं शङ्खस्य रेखात्रयं
तेजोऽप्यस्य यथा तथा सजलधेः कोऽप्येष भर्ता भुवः ॥ ५३ ॥

तदेवंविधाः खलु महनीया महानुभावा भवन्ति' इत्येवमवधार्य समुपसृत्य 'स्वस्ति स्वकान्तिनिर्जितमकरध्वजाय तुभ्यम्' इत्यवादीत् ॥ ख ॥

राजापि सविस्मयमना मनागुन्नमितमस्तकः स्वागतप्रश्नेनाभिनन्द्य 'तीर्थयात्रिक, कुतः प्रष्ठव्योऽसि। क्व च कियच्चाद्यापि गन्तव्यम्। उपविश। विश्रम्य कथय काञ्चिदपूर्वां किंवदन्तीम्। अनेकदेशदृश्वानः किलाश्चर्यदर्शिनो भवन्तीति। न चाकस्मिकं दर्शनमपूर्वः परिचयः स्वल्पा प्रीतिरित्येकमप्याशङ्कनीयम्। अपूर्वदर्शनेऽपि न जात्या मणयः स्वच्छतामपह्नुवते। तदेहि। मुहूर्तमेकत्र गोष्ठीसुखमनुभवावः' इत्येनमवादीत् ॥ ग ॥

असावपि 'अपूर्वकौतुककथाकर्णनरसिक, श्रूयतां यद्येवम्' इत्यभिधाय सुखोपविष्टस्यास्य समीपे स्वयमुपविश्य कथयितुमारभत ॥ घ ॥

'अस्ति (२)स्वर्गसमः समस्तजगतां सेव्यस्त्वसंख्याग्रणी-
र्देशो दक्षिणदिङ्मुखस्य तिलकः स्त्रीपुंसरत्नाकरः।

वर्णकम्बलः। रथ्यानिपतितजरत्पटखण्डैर्निर्मितत्वात्। पटच्चरो जीर्णवस्त्रखण्डम्। क्रमुकत्वचा पूगद्रुमवल्केन ॥ ९२ ॥

अब्जेति ॥ सजलधेरिति भुवो विशेषणम्। उष्णीषमुत्तमाङ्गे लक्षणविशेषः। तथोर्णा भ्रूमध्ये शुभरोमावर्तः। यद्विश्वः—'उष्णीषं तु शिरोवेष्टे किरीटे लक्षणान्तरे'। तथा। 'ऊर्णा मेषादिलोम्नि स्यादन्तरावर्तके भ्रुवोः' ॥ ९३ ॥

राजापीति ॥ किम्वदन्तीं वार्ताम्। जात्या मणयो विशिष्टजातीयरत्नानि। ॥ ग ॥ घ ॥

अस्तीति ॥ स्त्री च पुमांश्च स्त्रीपुंसौ। 'अचतुर—' इत्यादिना निपात्यते ॥ ९४ ॥

(१) अब्जेति—अध्वगश्चिन्तयते—यदयं समुद्रमेखलाया भुवो भर्ता सम्राट्। तथाच दृश्यन्ते सम्राजां लक्षणानि। नयनकान्तिः कमलकमनीया। सोष्णीषमुत्तमाङ्गम्। मुखाभा च पूर्णचन्द्रं तिरस्कुरुते। हस्तावपि पद्मचिन्हाङ्कितौ। भ्रूमध्ये चोर्णा, कम्बुसदृशी ग्रीवेति।।९३।

(२) अस्तीति—दक्षिणस्यां दिशि स्वर्गसमो दानशूरैर्जनैरशून्यो विदर्भाख्यो देशोऽस्ति। यं द्रष्टुं सर्वेऽपि सोत्सुका जायन्ते ।। ९४ ।।

यस्मिंस्त्यागमहोत्सवव्यसनिभिर्धन्यैरशून्या जनै-
रुद्देशाः स्पृहणीयभावभरिताः कं नोत्सुकं कुर्वते ॥ ५४ ॥

कथं चासौ न प्रशस्यते ॥ क ॥

यत्र (१)त्रिपुरपुरन्ध्रिरोध्रतिलकहारिणा हरिविरञ्चिचूडामणिमरीचिचक्रचकोरचुम्बितचरणनखचन्द्ररुचिनिचयेन भगवता सेव्यते सेव्यतयाऽपहसितकैलासश्रीः श्रीशैलः शूलपाणिना ॥ ख ॥

यत्र च (२)विकचविविधवनविहारसुरभिसमीरणान्दोलितकदलीदलव्यजनवीज्यमाननिधुवनविनोदखेदविद्राणनिद्रालुद्रविडमिथुनसनाथपरिसराः सरसघननिचुलतलचलच्चकोरचक्रवाककुलकपिञ्जलमयूरहारिण्यो नाकलोककमनीयतां कलयन्ति कलमकेदारसाराः सरससहकारकारस्कराः कावेरीतीरभूमयः ॥ ग ॥

किं बहुना—

(३)अस्तु स्वस्ति समस्तरत्ननिधये श्रीदक्षिणस्यै दिशे
स्वर्गस्पर्धिसमृद्धये हृदयहृद्गोदावरीरोधसे ।
यत्र त्रस्तकुरङ्गकार्भकदृशः संभोगलीलाभुवः
सौख्यस्यायतनं भवन्ति रसिकाः कंदर्पशस्त्रं स्त्रियः ॥ ५५ ॥

तत्र (४)प्रणतसुरासुरशिरःशोणमरीचिचयबहलकुङ्कुमानुलेपपल्लवितपादारविन्दद्वयस्य क्रौञ्चभिदो भगवतः सुगन्धिगन्धमादनाधिवासिनः स्कन्ददेवस्य दर्शनार्थमितो गतवानस्मि ॥ घ ॥

तस्माच्च निवर्तमानेन क्वचिदेकस्मिन्नध्वरोधिनि न्यग्रोधपादपतले दीर्घाध्वश्रान्तेन विश्राम्यता मया श्रूयतां यदाश्चर्यमालोकितम् ॥ ङ ॥

यत्रेति ॥ त्रिशूलपाणिना त्रिपुरान्तकेन । तत्रस्थेन हि त्रिपुरासुरो हतः ॥ ख ॥

(१) यत्रेति—दर्शनार्थमागतो यो हरिर्विष्णुर्विरञ्चिर्ब्रह्मा, तयोर्याश्चूडामणिमरीचयः । तासां चक्रमेव चकोरः । तेन चुम्बितश्चरणनखचन्द्ररुचिनिचयो यस्य तेन । चकोरस्य चन्द्रचन्द्रिकाचर्वणापरत्वादिति भावः ।

(२) विकचेति—विकचानि यानि विविधवनानि तेषु विहारैः क्रीडनैः सुरभिः सुगन्धी यः समीरणः । तेन । आन्दोलितानि कदलीदलान्येव व्यजनानि । तैः । वीज्यमानानि, निधुवनविनोदखेदविद्रावणार्थं सुरतश्रमापनयनार्थं निद्रालूनि द्रविडमिथुनानि तैः सनाथा युक्ताः परिसराः प्रान्ता यासु ताः । सरसा घना ये निचुलास्तेषां तलं तत्र ये चलन्तश्चकोराश्चक्रवाककुलानि, कपिञ्जलाः, मयूरा, हारीतास्तै हारिण्यो मनोहराः ।

(३) अस्त्वित—दमयन्त्यामभिलापोत्पादार्थं तत्रत्याः स्त्रीः स्तौति—गोदावरीयुक्तायै स्वर्गस्पर्धिन्यै समस्तरत्नाधारायै दक्षिणस्यै दिशे स्वस्ति । अस्तु । यत्र । चञ्चलकुरङ्गशावनयनाः कन्दर्पशाखं स्त्रियः सौख्यायतनं जायन्त इति ।। ५५ ।।

(४) प्रणतेति—प्रणता नम्रा ये सुरासुरास्तेषां शिरःसु ये शोणमरीचिचया रक्तकिरणसंघाः, एव बहलकुङ्कुमास्तेषामनुलेपेन पल्लवितं पादारविन्दद्वयं यस्य तस्य ।

अतिललितपदविन्याससारसाधुसिन्धुरवधूस्कन्धमधिरूढा, प्रौढसखीसहायप्राया, प्रान्तपतच्चारुचामरमरुन्नर्तितालकवल्लरी, कर्णकुवलयालंकारधारिणी, रुचिररुचिमच्चरणनुपूरा, पुरः(१)सरसरागगान्धर्विककण्ठकन्दरविनिःसरत्सरसगीतप्रेङ्खोलनप्रयोगेषु दत्तावधाना, नेत्रे मनाङ्मीलयन्ती, भ्रियमाणमायूरातपत्रमण्डला, मण्डलितमदनचापचक्रवक्रभ्रूः, भूपालपुत्रिका कापि कापि कुतोऽप्युच्चलिता तदेव न्यग्रोधपादपच्छायामण्डपमशिश्रियत् ॥क॥

तां चालोक्य चिन्तितवानस्मि विस्मितमनाः ॥ ख ॥

(२)किं लक्ष्मीः स्वयमागता मुररिपोर्देवस्य वक्षस्थला-
त्कोपात्पत्युरुतावतारमकारोद्देवी भवानी भुवि ।
श्यामाम्भोजसदृक्षपक्ष्मलचलन्नेत्रामिमां पश्यतो
धातस्तात करोषि किं न वदने चक्षुःसहस्रं मम ॥ ५६ ॥

अपिच—

(३)इन्दोः सौन्दर्यमास्यं कलयति कमलस्पर्धिनी नेत्रपत्रे
कालिन्द्याः कुन्तलाली तुलयति विभवं भव्यभङ्गैस्तरङ्गैः ।
तस्याः किं श्लाघ्यतेऽन्यत्सुभगगुणनिधेः काप्यपूर्वैव यस्याः
पुष्पेषोर्वैजयन्ती जयति युवजनोन्मादिनी यौवनश्रीः ॥ ५७ ॥

अपिच—

आका(४)रः स मनोहरः स महिमा तद्वैभवं तद्वयः
सा कान्तिः स च विश्वविस्मयकरः सौभाग्यभाग्योदयः ।

---

आकार इति ॥ उरगप्रभोर्वासुकेर्यथा जिह्वासहस्रद्वयं वर्तते तथा यस्यैतावत्यो जिह्वा भवेयुः स एव वर्णयितुं क्षमो भवेत् । यदा 'जिह्वासहस्रं मुखे' इति पाठः । तदा

---

(१) पुरः सरेति—पुरः सरन्तीति पुरःसरा याः सरागयुक्ता गान्धर्विकास्तासां कण्ठा एव कन्दराः । ताभ्यो विनिःसरन्ति यानि गीतानि गानानि तेषां प्रेङ्खोलनप्रयोगेषु दत्तावधाना । भूपकन्याविशेषणम् ।

(२) किमिति—दमयन्तीं विलोक्याध्वगविवेकः प्रववृते—मुररिपोर्देवस्य विष्णोर्वक्षस्थलाल्लक्ष्मीरेवेयं स्वयमागता, किमिति विकल्पे । उत । पत्युः शिवस्य कोपात् हेतोर्भवानी देवी पार्वती । भुवि । अवतारमकरोत् किम् । हे धातः । तात ? श्यामाम्भोजसदृक्षे पक्ष्मले पक्ष्मयुक्ते चलती चले नेत्रे यस्यास्ताम् । इमाम् । पश्यतो मम । वदने । चक्षुःसहस्रं किं न करोषि । अपि तु कर्तव्यमित्याशयः ।। ५६ ।।

(३) इन्दोरिति—तदेव सौन्दर्यमुपवर्णयति—इन्दुसुन्दरमाननम् । कमलस्पर्धिनी नेत्रे । कालिन्दीप्रवाहतुलिता कुन्तलाली । निखिलसुन्दरगुणास्पदायाः कामवैजयन्त्यास्तस्या यौवनश्रीरपूर्वैव । वर्णनातीतं हि तत्सौन्दर्यमिति भावः ।। ५७ ।।

(४) आकार इति—शेषाहेरिव यस्य जनस्य जिह्वासहस्रद्वयं भवेत्स एव तस्याः सौन्दर्यं वर्णयितुं क्षमः यतः स मनोहर आकारः । स महिमा । तद्वैभवम् । तद्वयः । सा कान्तिः । सर्वाश्चर्यकृत् स सौभाग्यभाग्योदयः । अत्र तच्छब्देनानुभवविषया अर्थाः प्रतीयन्ते । अतः पदप्रकाश्यालक्ष्यक्रमव्यङ्ग्यम् ।

एकैकस्य विशेषवर्णनविधौ तस्याः स एव क्षमो
यस्यास्मिन्तुरगप्रभोरिव भवेज्जिह्वासहस्रद्वयम् ॥ ५८ ॥

सापि यथा त्वमिदानीं मामिह पृच्छसि तथार्धपथमिलितं कंचिदुदीचीनमध्वगं दक्षिणस्यां दिशि प्रस्थितमादरेण पृच्छन्ती मुहूर्तमिव तत्रैव विश्रमितुमारभत ॥ क ॥

श्रुतश्चायं मयापि तेन तस्याः पुरः कस्यचिदुदीच्यनरपतेः श्लाघ्यमानकथावशेषालापः ॥ ख ॥

तस्मिन्स्मितमुखे यूनि यूपदीर्घभुजद्वये ।
ते धन्या न्यपतन्येषां कंदर्पसदृशे दृशः॥ ५९ ॥

किं बहुना—

सा (१)त्वं मन्मथमञ्जरी स च युवा भृङ्गस्तवैवोचितः
श्लाघ्यं तद्भवतोः किमन्यदपरं किं त्वेतदाशास्महे ।
भाग्यैर्योग्यसमागमेन युवयोर्मानुष्यमाणिक्ययोः
श्रेयानस्तु विधेर्विचित्ररचनासंकल्पशिल्पश्रमः ॥ ६० ॥

तत्र जाने स कः सुकृती तेन तस्याः श्रवणादेवोल्लसद्बहुलपुलकाङ्कुरोत्तम्भितांशुकायाः पुरो विस्तरेणैवं वर्णितः ॥ ग ॥

न च मयापि विस्मयविस्मृतविवेकेन केयं कस्येयं कुत्र कुतो वा प्रस्थितेति प्रश्नाग्रहः कृतः । केवलमदृष्टपूर्वरूपोत्पन्नाकस्मिककौतुकातिरेकास्तमितसमस्तान्यव्यापारेणैकाग्रतया ग्रहनिरुद्धनेवान्धेनेव मूकेनेव मूर्छितेनेव विषविघूर्णितेनेव स्तोभस्तम्भितेनेव गतायामपि तस्यां तेनाध्वनीनेन सह तत्रैव न्यग्रोधतरुतले सुचिरमासितमासीत् ॥ घ ॥

तदायुष्मन्नेष कथितः स्ववृत्तान्तः ॥ ङ ॥

तस्यां दिशि तया सकलजगज्ज्योत्स्नया, अस्मिन्नपि देशे निःशेषजननयनकुमुदेन्दुना त्वया दृष्टेन, दृष्टं यद्द्रष्टव्यम् । अभूच्च मे श्लाघ्यं जन्म । जाते कृतार्थे चक्षुषी । संपन्नः सफलः परिभ्रमणप्रयासः ॥ च ॥

तदिदानीं किमन्यत् ॥ छ ॥

---

सहस्रशब्दोऽनन्तबहुत्ववचनः ॥ ५८ ॥

सा त्वमिति ॥ अत्राप्रत्यक्षमपि बुद्धिकल्पितं प्रत्यक्षमिव मन्यमानो भवतोरित्याह । भवती च भवांश्च भवन्तौ । 'पुमान्स्त्रिया' इत्येकशेषः ॥ मानुषत्वे भूषणभूतत्वात्तयोर्माणिक्यत्वम् ॥ ६० ॥

नेति ॥ स्तोभश्चेष्टाविघातः ॥ छ ॥

---

(१) सा त्वमिति—मानुष्यमाणिक्ययोर्युवयो योग्यसमागमेन विधेः शिल्पश्रमः सफलो भवतु । विचित्रा या रचना तस्याः संकल्पो यत्र तादृशः शिल्पश्रमो यस्य तस्य ।

अनुमन्यस्व स्वविषयगमनाय माम्' इत्यभिधाय व्यरंसीत् ॥ क ॥

राजाप्येतदाकर्ण्य चिन्तितवान् ॥ ख ॥

(१)श्रीमाणिक्यमहाकरः स विषयः पान्थोऽप्ययं तथ्यवा-
ग्व्यापारोऽपि विधेर्विचित्ररचनस्तत्किं न संभाव्यते ।
किं त्वाश्चर्यमदृष्टरूपविभवाप्याकर्ण्यमाना सती
कान्तेत्युन्नतचेतसोऽपि कुरुते नाम्नैव निम्नं मनः ॥ ६१ ॥

तथाहि—

नो नेत्राञ्जलिना निपीतमसकृत्तस्याः स्वरूपामृतं
नो नामान्वयपल्लवोऽपि च मया कर्णावतंसीकृतः ।
चित्रं चुम्बति चुम्बकाश्मकमयो यद्वद्बलाद्दूरत-
स्तद्वत्तर्जितधैर्यमेतदपि मे तस्यां मनो धावति ॥ ६२ ॥

सोऽयं दुर्लभेष्वनुरागः पुंसाम्, अज्वर(२)मस्वास्थ्यम्, अदौर्गत्यं दौःस्थ्यम्, अविषास्वादनमाघूर्णनम्, असाध्वसं कम्पनम्, अनात्मविक्रयं पारवश्यम्, अजरं जाड्यम्, अनिन्धनं ज्वलनम्, अलग्नग्रहमुन्मादनम्, अवात्याघातमुद्भ्रमणम्, अमौनं मौक्यम्, अहीनश्रुति बाधिर्यम्, अनष्टदृष्टिकमन्धत्वम्, अस्खलितमनोरथं मनःस्तम्भनम्, अमन्त्र आवेशः ॥ ग ॥

सर्वथा नमः सुस्थितजनदुर्जनाय मनोजन्मने, यस्यायमेवंविधो व्यापारः' इत्यवधारयन्नवतार्य सर्वाङ्गेभ्यो भूषणानि तस्मै सदयमदात् ॥ घ ॥

तैस्तैरालापैः स्थित्वा च कंचित्समयमिममथ यथाप्रस्थितं पान्थं कथमपि प्रेषयामास ॥ ङ ॥

स्वयमपि तत्कालान्तरालमिलितैर्नक्षत्रैरिव सार्द्रमृगशिरोहस्तैः सश्रवण-

---

श्रीति ॥ निम्नमभिलापदीनत्वाल्लाघवास्पदम् ॥ ६१ ॥

नो नेत्रेति ॥ यद्वद्यथा चुम्बकसंज्ञमश्मकम् । पाषाणं कर्म ॥ अयो लोहं कर्तृ ॥ चुम्बति । तथा मेऽपि मनस्तस्यां धावति ॥ ६२ ॥

सोऽयमिति ॥ आवेशो व्यन्तरादेर्मनसि प्रवेशः ॥ ग ॥

स्वयमपीति ॥ राजा निजहर्म्यमगात् । तत्कालं तत्क्षणात् । अन्तरालेऽध्वमध्ये । राजा चन्द्रोऽपि । तदा तस्मिञ्ज्योतिःप्रसिद्धे काले कलासमूहे अष्टशतीलक्षणे यदन्तरालं तत्र । मिलितैः परिजनैरनुगम्यमानः । कीदृशैः । सार्द्राणि साश्रत्वाच्च्योतन्ति हरिण-

---

(१) श्रीमाणिक्येति—श्रीमाणिक्यखनिः स देशः । पथिकोऽयं सत्यवाक् । विधेर्विचित्ररचनो व्यापारः। एतत्सर्वं तथ्यम् । किन्तु—अदृष्टरूपविभवा । आकर्ण्यमानैव सती । उन्नतमनसोऽपि धीरमनसोऽपि मम मानसं नाम्नैव निम्नं कुरुते । इत्येतदाश्चर्यम् । उन्नतमानसमपि निम्नमिति विरोधः । अत्र कविना भावी योग्यसमागमः सूचितः । यथोक्तं "भावस्थिराणि जननान्तरसौहृदानि" इति कालिदासेन ॥६१॥

(२) अज्वरमिति—अत्र सर्वत्र विभावनालङ्कारः । कारणं विनापि कार्योत्पत्तिकथनात् । तथा हि अस्वास्थ्ये निमित्तं ज्वरः । तस्याभावेऽप्यस्वास्थ्यमिति शरीरम् ।

चित्रकृत्तिकोपस्करवाहिभिः पापर्द्धिकपरिजनैरनुगम्यमानो राजा निजावासमयासीत् ॥ क ॥

ततः प्रभृति च

(१)हृद्योद्यानमरुत्तरङ्गितसरित्तीरे तरूणामध-
स्तल्पेऽनल्पसरोजिनीनवदलप्रायेऽपि खिन्नात्मनः ।
धीरस्यापि मनाङ्मनस्तृणकुटीकोणान्तराले बला-
ल्लग्नोऽस्येति विभाव्यते परवशैरङ्गैरनङ्गानलः ॥ ६३ ॥

एवमस्य

(२)पुनरपि तदभिज्ञान्पृच्छतः पान्थसार्थान्प्रतिपथमथ यूनो यान्ति तस्य क्रमेण।
हरचरणसरोजद्वन्द्वमुद्राङ्कमौलेर्मदनमदनिवासा वासराः प्रावृषेण्याः ॥ ६४ ॥

इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरणसरोजाङ्कायां प्रथम उच्छ्वासः समाप्तः

शिरांसि येषु तथाविधा हस्ता येषां तैः । सश्रवणां सकर्णाम् । चित्रस्य चित्रकायस्य कृत्तिकां त्वचम् । उपस्करं मृगयोपयोगि वहन्ति तैः । आर्द्रशब्दो भाववचनः । पक्षे सह आर्द्रया नक्षत्रेण, सार्धं मृगशिरो हस्तश्च नक्षत्रं येषु । श्रवणचित्रे नक्षत्रे । अनयोः समाहारद्वन्द्वः । तेन सह । ताश्च ताः कृत्तिकाश्च तासामुपस्करं समवायं वहन्ति ॥ च ॥

हृद्यति ॥ हृदयस्य बन्धनं हृद्यम् ॥ ६३ ॥

तमसो यत्र विनाशः पथिकोच्छ्वासः पदार्थनिर्भासः ।
उदयं प्रतिपाद्यासौ भुवनमुदे जयति चण्डरुचिः ॥
इति विषमपदप्रकाशमेतं दमयन्त्यास्तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥

इति चण्डपालविरचिते दमयन्तीकथाविवरणे प्रथम उच्छ्वासः समाप्तः ॥

(१) हृद्येति–हृद्योद्याने मनोहरोपवने, मरुता वायुना तरङ्गिता संजाततरङ्गा या सरित् तस्यास्तीरे । तरूणामधः । अनल्पा याः सरोजिन्यस्तासां नवदलानि तत्प्राये तत्प्रचुरे । तल्पेऽपि शयनेऽपि खिन्नात्मनो विरहाग्निपीडयाशान्तस्य । धीरस्याप्यस्य नलस्य । मनो मानसमेव तृणकुटी तस्याः कोणान्तराले कोणमध्ये । परवशैरङ्गैरनङ्गानलः कामवह्निः बलाल्लग्न इति विभाव्यते । कविनात्र विप्रलम्भशृङ्गारो वर्णितः । उचितं च प्रथमं विप्रलम्भवर्णनम् । यथोच्यते—'न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान् रागः प्रवर्धते ।। ६३ ।।

(२) पुनरपीति–पुनरपि प्रतिपथं प्रतिवर्त्म । तदभिज्ञान् = दमयन्तीवृत्तान्तज्ञान् । पान्थसार्थान् पथिकवर्गान् । पृच्छतस्तस्य यूनो मदनमदनिवासाः प्रावृषि भवा प्रावृषेण्याः वासरा दिवसाः । क्रमेण यान्ति । न तु 'अविदितगतयामा रात्रिरेव व्यरंसीत्' इत्यनुसारेणाक्रमेणेति भावः । कीदृशस्य तस्य यूनः । हरचरणसरोजद्वन्द्वमुद्राया अङ्कश्चिह्नं यत्र तादृशो मौलिर्यस्य तस्य । अत्र चम्प्वां प्रत्युच्छ्वासान्तिमपद्यं हरचरणसरोजपदाङ्कितमिति चम्पूरेषा हरचरणसरोजाङ्किता निगद्यते । यथा च वाग्भटः—"गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पू"रिति लक्षितवान् ।। ६४ ।।

## अथ द्वितीय उच्छ्वासः ।

**अथ कदाचिदवगलद्बहलपरिमलमिलदलिकुलाकुलितकुटजकदम्बकुसुमकर्णपूरशून्यकाननासु, विश्राम्यन्मदमुखरमयूररसनावलीकलक्वणितासु, विरलतरतडिल्लताललितलावण्यासु, विगतहंसद्विजराजिषु, पतत्पयोधरासु, क्षीणशुक्रासु, वृद्धास्विव गतप्रायासु वर्षासु, रतिमकुर्वाणो मदकलकलहंसहासहारिण्यामुत्सुकस्तरुण्यामिवागतायां, शरदि, द्विरदमदगन्धसम्बन्धानुधाविते कुसुमितसप्तच्छदच्छायासु विस्फूर्जति रोषोद्घुषितकेसरकरालकण्ठे कण्ठीरवकदम्बके, गृहदीर्घिकामृणालिकाकाण्डखण्डनविरामरमणीयमुन्नदत्सु शरत्समयप्रवेशमङ्गलमृदङ्गेष्विव हंसमण्डलेषु, स्मरशरनिकरनिर्मथितपान्थसार्थप्रहाररुधिरनिष्यन्दबिन्दुसंदोह इव वनस्थलीषून्मिषति बन्धुरबन्धूककुसुमप्रकरे, प्रसरन्तीषु शरज्जलदमीप्रवेशानन्दवन्दनमालासु निःशङ्कशुककुलावलीषु, श्रूयमाणासु स्मरराजराज्यविजयघोषणासु पक्वकलमगन्ध-**

अथेति ॥ अनन्तरमितीति सति स राजा निकटकानने विचरन्किंनरमिथुनेन गीयमानं रागविशेषेणोच्चार्यमाणमिदमिति वक्ष्यमाणमनश्लीलमग्राम्यं श्लोकत्रितयमाकर्णितवान् । किंविशिष्टः । कलहंसा एव हासस्तेन रम्यायां तरुण्यामभिनवप्रवृत्तायाम् । अथ च शरदेव तरुणी युवतिः । तस्यामागतायां रागात्स्वयं प्राप्तायाम् । उत्छक उत्क इत्युक्त्यन्तरम् । तदा मदेन क्षीबतया तरुणिमोद्रेकेण वा कलकलो यस्याः । तथा शुभ्रत्वाद्धंसोपमौ हासहारौ स्तोऽस्यामिति कर्मधारयान्मत्वर्थीयः । न कर्मधारयादिति तु प्रायिकम् । किं विदधानः कुर्वाणः । काम् । रतिं चित्तासक्तिम् । कासु । वर्षासु । किंभूतासु । गतप्रायासु स्वल्पशेषासु । तथा कुसुमान्येव कर्णपूरा उत्तंसास्तैः शून्यानि काननानि वनानि यासु । तथा मदेन मुखराणां मयूराणां या रसनावली जिह्वाश्रेणिस्तस्याः कलक्वणितम् । तद्विश्राम्यद्विरमद्यासु । वर्षोदये हि केकायन्ते न प्रान्ते । मदाभावात् । तथा स्तोकविद्युदुद्योतासु । व्यपेतहंसपक्षिपङ्क्तिषु अब्दयद्वनासु । क्षीणशुक्राख्यग्रहासु । कास्विव । वृद्धास्विव । तदा । रतिः संभोगः । गतं प्रकृष्टमयमिष्टफलं दैवं यासाम् । तथा कुसुमैः पुष्पदामभिः कर्णपूरैश्च शून्यं कं शिर आननं च यासाम् । तथा रसनायाः काञ्च्याः क्वणितस्य मुखरमयूररवो ललितस्य मधुराङ्गविन्यासस्य लावण्यस्य च लोचनलेह्यकमनीयगुणस्य विरलतडिदुपमानम् । तथा व्यपेतहंसशुभ्रदन्तराजिषु पतत्कुचासु । तथा क्षीणं गर्भसंभवाभावाद्विनष्टं शुक्रं पुंवीर्यं यासु । न पुनर्निवृत्तवीर्यास्विति व्याख्येयम् । पुंसां वीर्यं स्त्रीणां रज इति प्रसिद्धेः । अतएव न विद्यते बलं वीर्यं यासामित्यबलाः । रसनाशब्दः काञ्चीपक्षे न परं तालव्यः । दन्त्योऽप्यस्ति । तथा च विश्वप्रकाशः—'रसना काञ्चिजिह्वयोः' इति । द्विरदमदगन्धस्य सम्बन्धो द्विरदमदगन्धोऽयमिति प्रत्यभिज्ञा तयानुधाविते । सन्धानपाठे तु सन्धानं सन्धिर्मैत्री सादृश्यमिति यावत् । शरदि सप्तच्छदाः पुष्प्यन्ति । ते च—मदगन्धयस्ततो गजभ्रान्त्या सरोषं विस्फूर्जति सिंहवृन्दे । मृणालिकाकाण्डस्य खण्डनाय योऽसौ विरामो-

शालिपालिकाबालिकाहर्षगीतिषु, शरच्छ्रीकटाक्षेषून्मीलत्सु नीलनीरजेषु, क्रणति वर्षावधूप्रस्थानपटहे षट्चरणचक्रवाले, प्रभात इव घनतिमिरविरामरमणीये जाते जलनिधिशयनशायिशार्ङ्गिनिद्राद्रुहि विनिद्रसान्द्रसरससरोजराजिराजितसरसि शरत्समये' स महीपतिः समासन्नवनविहारिकिंनरमिथुनेन गीयमनमिदमनश्लीलं श्लोकत्रयमशृणोत् ॥ क ॥

धन्याः शरदि सेवन्ते प्रोल्लसच्चित्रशालिकान् ॥
प्रासादान्स्त्रीसखाः पौराः केदारांश्च कृषीवलाः ॥ १ ॥
नमिताः फलभारेण न मिता शालिमञ्जरीः ॥
केदारेषु हि पश्यन्तः के दारेषु विनिःस्पृहाः ॥ २ ॥
प्रावृषं शरदं चापि बहुधाकाशहारिणीम् ॥
विलोक्य नोत्सुकः कः स्यान्नरो नीरजसंगताम् ॥ ३ ॥

(१)अनेन मृदुमूर्छनातरङ्गरङ्गिताक्षरेण श्रवणपथप्रथमप्रियातिथिना श्लोकत्रयेण विषविषमविषयवैरस्यव्रतव्रततिकठिनकुठारेण, दारपरिग्रहपराङ्मुखोऽपि शृङ्गारशृङ्गिशृङ्गमुत्तुङ्गमारोप्यमाणस्तदेवोद्यानममन्दमन्दारमकरन्दा-

ऽर्थान्नादस्यैव। तेन रम्यं यथा भवति स्थित्वा स्थित्वा मृणालं चर्वन्ति तत्कषायसंशुद्धकण्ठाश्च नादं कुर्वन्तीत्यर्थः। हंसमण्डलानि शरत्प्रवेशमङ्गलमृदङ्गाः। बन्धूककुसुमस्यातिलौहित्याद्विरहिजनरुधिरत्वम्। शुकावलिस्तोरणम्। कलमस्य श्वेतशालेः, गन्धशालेश्च रक्षिकागीतयः कंदर्पराजजयघोषणाः। विकसन्नीलोत्पलानि शरल्लक्ष्मीकटाक्षाः। भृङ्गगणश्च यान्त्या वर्षावध्वाः प्रयाणपणवः। घनो मेघो घनं च सान्द्रम्। शयनस्थानम्। निद्राद्रोहो विनिद्रसान्द्रसरोजराजितसरस्त्वं च शरत्प्रभातयोः समानम्। क ॥

धन्या इति ॥ प्रोल्लसन्त्यश्चित्रशालिका आलेख्यभूमिका येषु। पक्षे चित्रा बहुविधाः शालयः। स्त्रीसखा इत्युभयत्र योज्यम् ॥ १ ॥

कुतः स्त्रीसखा इत्याह—नमिता इति ॥ हि यस्मात्कारणात्। दारेषु के निःस्पृहाः स्युः। किं कुर्वन्तः। फलभारेण नमिता वक्रिता न मिताः स्तोकाः केदारेषु क्षेत्रेषु शालिमञ्जरीः पश्यन्तः। तद्दर्शनं ह्युद्दीपनविभावः ॥ २ ॥

प्रावृषमिति ॥ रमणीयत्वात्। बहुधा पुनः पुनर्विलोक्य प्रावृषमाकाशस्य व्योम्नस्तिरोधायिनीं नीरजसं निःपांशुं गतामतिक्रान्तां शरदं च काशपुष्परम्याम्। तथा नीरजैः पद्मैः संगतामन्विताम् ॥ ३ ॥

अनेन श्लोकत्रयेण प्रियाग्रहविमुखोऽप्युच्चैः शृङ्गारगिरिशिखरं नीयमानस्तदेव वनं

(१) अनेनेति—'धन्याः' इत्यादिश्लोकत्रयेण दारपरिग्रहपराङ्मुखोऽपि शृङ्गारपरमावस्थां नीयमानो नलो रम्यमारामं गन्तुमारभतेत्यन्वयः। विषविषमो गरलवद् दुरुदर्को यो विषयस्तस्मिन् यद् वैरस्यव्रतं विरसतानिश्चयः, तदेव व्रततिर्वल्ली तदर्थं कठिनकुठारेण तद्भिनाशकेनेतिभावः। अमन्दो यो मन्दाराणां मकरन्दः पुष्परसः, तस्यामोदेन गन्धेन मत्ता ये मधुकराः षट्पदाः, तेषां मधुरझङ्कारै रमणीयझङ्काररवैः। रमणीयम्। उद्यानविशेषणमेतत्।

मोदमत्तमधुकरमधुरझंकाररमणीयमुपसर्तुमारभत ।। क ।।

प्रथमसंमुखप्रेङ्खितेन चलच्चन्दनामोदनन्दिनान्दोलनवेगवित्रस्तकुसुमितरुशिखरसुप्तसुरतश्रमखिन्नकिंनरीनिबिडतरपरिरभ्यमाणकिंनरनमस्कृतेन क्रीडाकमलदीर्घिकातरङ्गोत्सङ्गरङ्गत्तरुणतामरसरसविसरोद्गारहारिणा यौवनमदनिरुद्धनैषधीधम्मिल्लवल्लरीचलनविलासलासकेन वनमारुतेनोत्पुलकिततनुः स्तोकमन्तरमतिक्रम्य 'देव, भवद्वैरिवधूवदने वने च नारंगतरूपशोभे भान्ति गण्डशैलस्थलालङ्कारधारिण्यो लोध्रलताः, नागरुचिताश्चन्दनपत्रभङ्गाः, नालिकेरचितस्तिलकः, नवा दृष्टिपथमवतरति घनाञ्जनयष्टिका, नाभिरम्या नीलतमालका, नाधीरकृतस्ताम्बूलीरागः, पल्लवितमेतद्दृश्यतेऽशोकजालम्। इतश्च काञ्चनगिरिरिव सुरचितः क्रीडापर्वतः। इतश्च गूर्जरकूर्चमिवाखण्डितप्रवालं बालशालवनम्। इतश्च भवद्वैरिनगरमिवानेकविधवकुलसंकुलं कूपकुलम्। इतश्च धूर्जटिजटाजूट इव पुंनागवेष्टितो वापीपरिसरः। इतश्च कुरुसेनेव कृताश्वत्थामहिता च क्रीडासरित्पुलिनपालिः।' इति भङ्गश्लेषोक्तिकुशलया वनपालिकया निवेद्यमानानि वनविनोदस्थानान्यवलोकयांचकार ॥ ख ॥

गन्तुमारेभे ॥ क ॥

तत ईदृग्विधेन वायुना रोमाञ्चिततनुः देवेत्याद्यामन्त्र्य तवारिस्त्रीमुखे वने चेदमिति भङ्गश्लेषोक्तिदक्षया वनरक्षिकया कथ्यमानानि वनकौतुकस्थानानि नलो व्यलोकयत्। आन्दोलनवेगेत्यादावान्दोलनं तरोरेव पवनकृतम्। त्वदरिस्त्रीमुखे अरमत्यर्थं गतसौन्दर्ये कपोलफलकालङ्कारिण्यो लोध्रस्य विलेपनाख्यस्य लता मण्डनवल्लर्यो न भान्ति। अगरुद्रवेण चिताश्चन्दनद्रव्यस्य पत्रभङ्गाः पत्रवल्लयः। अलिकं ललाटं तिलकं पुण्ड्रम्। वा समुच्चये। घनं सान्द्रमञ्जनं तस्य यष्टिः शलाका। अभिरम्या संस्कृता। प्रकर्षेण नीलाः कुटिलकेशाः अधरोऽस्यास्तीत्यधरी ओष्ठवान्। ताम्बूलराग ओष्ठसंबद्धः कृत इति भावः। सर्वत्र नञ्संबन्धः। अवतरतीति तु संनिहितमेव योज्यं न प्रत्येकम्। पल्लवितशब्दो लक्षणया प्रवृद्धार्थः। शोकात्प्रलापमनोदौस्थ्याज्जातं शोकजम्। अलमनर्थः। वने च नारङ्गतरुभिः कृतशोभे सहजच्युतस्थूलपाषाणस्थलीभूषणा लोध्रस्य तरुविशेषस्य लताः शाखा भान्ति। नागेभ्यो रुचिताश्चन्दनतरोः पत्त्राणां भङ्गा विशेषाः। तिलको वृक्षो नालिकेरैस्तरुभिर्व्याप्तः। नवा नवीना। अञ्जनस्य शाखिनो यष्टिः प्रकाण्डः। तमालका इति ह्रस्वे कः। अतएव नाभिरम्या नाभिदघ्ना इति भावः। नाधरीकृतो न हीनीकृतः। ताम्बूली वल्ली। रागः सक्तिः। किसलयितमशोकानां जालं खण्डः। इतश्च सुष्ठु रचितः सुरैश्चितो व्याप्तश्च। प्रवालाः पल्लवाः। पक्षे अखण्डिताः अत एव प्रवृद्धा बालाः केशा यत्र। अनेकविधैर्वकुलैः संकुलम्। पक्षे अनेका विधवा मृतभर्तृका येषु कुलेषु तैः कुलैर्गोत्रैः संकुलम्। पुंनागमगः। अन्यत्र पुमान्नागो वासुकिः। कृता उत्पादिता अश्वत्थाः पिप्पला यस्याम्। तया महिता चार्वी। पक्षे कृतमश्वत्थाम्ने द्रोणसुताय हितं यया ॥ ख ॥

(१)चलच्चकोरचक्रवाकचक्रचञ्चुचञ्चलचञ्चरीकचरणचूर्णितचम्पकाङ्कुरमरिचमञ्जरीदलदन्तुरेण वनमार्गेण स्तोकमन्तरमतिक्रान्तस्तया पुनरेवं बभाषे ।। क ।।

'देव, पुरन्दरानन्दिनन्दनोद्यानस्पर्धिनोऽस्य वनस्य किं किं वर्ण्यते ।।ख।।

यत्र । त्रिजटाश्रयमनेकजटाः, स्फुरदेकपुष्पकमनेकपुष्पाः, समुद्वेजितराममानन्दितरामाः, समुपहसन्ति लङ्केश्वरं तरवः ।। ग ।।

यस्मिंश्च मत्तमयूरहारिणि भद्रभुजङ्गप्रयाते विचित्रक्रौञ्चपदे छन्दःशास्त्र इव वैतालीयं मालिनी शिखरिणी पुष्पिताग्रा च दृश्यते विविधा जातिः ।। घ ।।

यस्मिंश्च । एकभीमार्जुनविनिर्जितानाक्रान्तानेकभीमार्जुनाः, कोपितैकनकुलानाह्लदितानेकनकुला, सहदेवेनैकेन स्पर्धमानाननेकैः सहदेवैः संगताः । न बहु मन्यन्ते कुरुवीरान्वीरुधः ॥ ङ ॥

किं चान्यदवलोकयतु देवः ।

(२)पटलमलिकुलानामुन्नमन्मेघनीलं भ्रमदुपरि तरूणां पुष्पितानां विलोक्य।

---

चलदिति ॥ सञ्चारयोग्येन मार्गेण कियदपि व्यवधानमतिक्रान्तः पुनरपि तयैष बभाषे ॥ क ॥

देवेति ॥ देव, नन्दनस्पर्धिनोऽस्य किं वर्ण्यते ॥ ख ॥

यत्रेति ।। रावणं तरवो हसन्ति । त्रिजटा रावणस्वसा । जटा मूलानि पुष्पकं विमानं कुसुमं च । रामो दाशरथिः । रामाः स्त्रियः । अनेकजटा इत्येकशब्देन संख्योपलक्ष्यते । ततोऽनेकशब्दोऽसंख्यातवचनः ॥ ग ॥

यस्मिंश्चेति ।। वै स्फुटमियं ताली तालद्रुमः । इयं जातिर्मालती दृश्यते । द्वे अपि कीदृश्यौ । माला अस्यामस्ति । तथा शिखरयुक्ता कुसुमिताग्रभागा च । किम्विशिष्टे वने मत्तैर्मयूरै रम्ये । तथा भद्रं मनोज्ञं भुजङ्गानामहीनां विटानां च प्रयातं यत्र । क्रौञ्चः पक्षी । पक्षे मत्तमयूरं भुजङ्गप्रयातं क्रौञ्चपदा वैतालीयं मालिनी शिखरिणी पुष्पिताग्रा च छन्दोनामानि । जातिश्च उक्तादिरुत्कृत्यन्ता ॥ घ ॥

यस्मिंश्चेति ।। वने वीरुधो लताः कुरुवीरान्न गौरवयन्ति । आक्रान्ता अनेके बहवो भीमा अम्लवेतसा अर्जुनाश्च याभिः । यद्विश्वप्रकाशः—'भीमोऽम्लवेतसे शंभौ घोरे वापि वृकोदरे' । नकुला जीवाः । सहदेवास्तरवः । कुरुवीरपक्षे भीमार्जुननकुलसहदेवाः पाण्डवाः ॥ ङ ॥

---

(१) चलदिति—चलतां चञ्चलानां चकोराणां चक्रवाकाणां च चक्राणि समूहास्तेषां चञ्चवस्तुण्डानि ताभिः; चञ्चलचञ्चरीकाणां चटुलभ्रमराणां चरणैः पादैश्च चूर्णिताः खण्डिताः, ये ।चम्पकाङ्कुराः, मरीचमञ्जरीदलानि च मरीचमञ्जर्याः पत्राणि च तैर्दन्तुरेण निम्नोन्नतेन ।

(२) पटलेति—पुष्पितानां तरूणामुपरि भ्रमत्, उन्नमन्त उद्गच्छन्तो ये मेघा जलधरा

मृदुमदकलकेकानिर्भरो नृत्यसक्तस्तरलयति कलापं मन्दमन्दं मयूरः ॥ ४ ॥
अपिच ।

(१)भ्राम्यद्विरेफाणि विकासभाञ्जि संयोज्य पुष्पाणि शिलीमुखेषु ।
इह स्थितः सर्वजगज्जयाय धनुःश्रमं पुष्पशरः करोति ॥ ५ ॥

इतश्च ।

(२)हरिति हरिणयूथं यूथिकाजालमूले कुसुमजमधुविन्दुस्यन्दसंदोहभाजि ।
मधुरमधुकरालीगीतदत्तावधानं लिखितमिव न दूर्वापल्लवानुल्लुनाति ॥६॥

इतोऽपि

सोऽयं क्रीडाचलो भव्य लोभव्यसनवर्जित ।
यस्मिन्नासन्नसारङ्गा सारं गायति किंनरी ॥ ७ ॥
राजते राजतेनायं सानुना सानुनायकः ।
यस्मिन्निशम्य गायन्तं किंनरं किं न रंस्यते ॥ ८ ॥

---

भ्राम्येति ॥ शिलीमुखाः शराः । इहेत्युद्यानस्योद्दीपनविभावातिशयोक्त्या कामस्य स्थितिरुच्यते । एतावता सुरभिकुसुमसंपदुक्ता ॥ ५ ॥

हरितीति ॥ हरिति शाद्वले यूथिकासमूहस्याधःप्रदेशे मधुविन्दुसंदोहसंबन्धात्स्पृहणीयेऽपि गीतिरसिकतया मृगाणां दूर्वाङ्कुराग्रहणमुक्तम् ॥ ६ ॥

सोऽयमिति ॥ हे भव्य, हे लोभेन व्यसनैश्च विवर्जित, सोऽयं क्रीडागिरिः । यस्मिन्गिरावासन्नमृगा किंनरी सारमुत्कृष्टं गायति । गीतप्रकर्षात्कृष्टत्वात्सारङ्गाणामासन्नता ॥ ७ ॥

राजत इति ॥ अयं सानुनायको गिरी रजतनिर्मितेन सानुना तटेन राजते । यस्मिन्गायन्तं किंनरं निशम्य श्रुत्वा न किं रंस्यते । रंस्यत एव ॥ ८ ॥

---

स्तद्वन्नीलं नीलवर्णम् । अलिकुलानां द्विरेफाणां पटलं समुदायं विलोक्य मृदुर्मदेन कला मनोहरा या केका वाणी तया निर्भरः संपृक्तः । नृत्ये नर्त्तने सक्तो युक्तः । मयूरो बर्ही कलापं बर्हं मन्दमन्दं यथा तथा तरलयति चालयति । अयं भावः—मेघश्यामं भ्रमरपटलं विलोक्य मयूरो वर्षाप्रारम्भभ्रान्त्या नृत्यति बर्हंमुन्नमयति चेति ॥ ४ ॥

(१) भ्राम्यदिति—पुष्पशरः कुसुमायुधो मदनः । इह स्थितः सन् = अस्मिन्नुद्याने वर्त्तमानः सन् । भ्राम्यन्तः = इतस्ततो गमनशीला द्विरेफा भ्रमरा येषु तानि । विकासं भजन्तीति तथोक्तानि कुसुमानि शिलीमुखेषु बाणेषु संयोज्य, नियोज्य, सकलभुवनविजयार्थं धनुःश्रमं कुरुते । अत्रारामे कामोद्दीपनानि नानाविधानि प्रसूनानि वर्त्तन्त इति भावः ॥ ५ ॥

(२) हरितीति—कुसुमजं पुष्पजन्यं यन्मधु कुसुमरसः, तस्य बिन्दवस्तेषां स्यन्दस्य प्रस्रवणस्य, सन्दोहं निवहं भजतीति तथोक्ते । हरिद्वर्णे यूथिकाजालमूले । मधुरा या मधुकराली भ्रमरावलिः । तासां गीतेषु दत्तमवधानं येन तत् । हरिणयूथं हरिणसंघः । चित्रार्पितमिव । दूर्वापल्लवान् । नोल्लुनाति = नोच्छिनत्ति । हरितघासचर्वणार्थं समागतमपि हरिणयूथं मधुकरगीताकृष्टमानसं सत् स्वव्यापारं विस्मरतीति सारः ॥ ६ ॥

इतश्चास्य

(१)जनयति जलबुद्धिं बाललीलामृगाणा-
मयमिह पटुकान्तिः स्फाटिको भित्तिभागः ।
इह हरितमणीनामुल्लसन्तो मयूखाः
सरसनवतृणालीलोभमुत्पादयन्ति ॥ ९ ॥

इयं च

गौरवं गौरवंशस्य पर्वतः पर्वतस्थले ।
भ्रमरी भ्रमरीणस्य कुरुतेऽकुरुतेन ते ॥ १० ॥

अपिच ।

(२)इह कवलितकन्दं कन्दरे कन्दलिन्यां भुवि विरचितकेलि क्रीडति क्रोडयूथम्
इह सरसिजगर्भभ्रान्तभृङ्गं कुरङ्गाः सरसि सरलयन्तः कंधरां कं धयन्ति ११

(३)इह पुनरनिशं निशम्य भिन्नद्रुममुकुलानि कुलानि षट्पदानाम् ।
श्रुतिसुखकरणं रणन्ति वीणां तदनुगुणां गुणयन्ति किंनरेन्द्राः ॥ १२ ॥
इतश्च क्रीडाचलस्थलकमलदीर्घिकातीरतरुतलमनुसरत देवः ॥ क ॥

यत्र च

(४)वहति नवविकासोल्लासिकिंजल्कलुभ्यन्मधुकरकृतगीता नर्त्तयन्नञ्जराजीः।

---

गौरेति ॥ गौरो वंशोऽन्वयो यस्य तस्य ते । पर्वतस्थले गिरिस्थले । पर्वतो गच्छ-तः । अतएव भ्रमेण देहवैक्लव्येन भ्रमिसंज्ञेन खिन्नस्य सतोऽकुत्सितरुतेन भ्रमरी भृङ्गी गौरवं प्रतिपत्तिविशेषं कुरुते ॥ १० ॥

इहेति ॥ कं जलम् । धयन्ति पिबन्ति ॥ ११ ॥

इहेति ॥ रणन्तीति शत्रन्तं षट्पदकुलविशेषणम् । तस्य भृङ्गरणितस्यानुगुणामनु-गामिनीम् ॥ १२ ॥

वहतीति ॥ कुङ्कमजकणा मकरन्दलवास्तैः शारः शबलः शरदि भवानि मुद्गादीनि

---

(१) जनयतीति--इहायं पटुर्भ्रान्तिजनने समर्था कान्तिर्यस्य सः। स्फटिकमणिरचितो भित्तिभागः । बाला ये लीलामृगास्तेषाम्, जलभ्रान्तिं जनयति । सादृश्यात् । इह च । उल्ल-सन्तः शोभमानाः । हरितमणीनां नीलमणीनां किरणाः । सरसा नवीना या तृणाली तस्या लोभं स्पृहां, उत्पादयन्ति । भ्रान्तिमदलङ्कारः ।। ९ ।।

(२) इहेति--इह कन्दरे गुहायां, कन्दलिन्यां कन्दलयुतायां भुवि कवलितकन्दं चर्वि-तकन्दं, विरचिता केलिर्येन तत्, क्रोडयूथं वराहयूथं क्रीडति । इह सरसि-तडागे । कुरङ्गा मृगाः । कन्धरां = ग्रीवां । सरलयन्तोऽवक्रीकुर्वन्तः । सरसिजगर्भेषु भ्रान्ता भृङ्गा यस्मिंस्तत् । कं जलं धयन्ति = पिबन्ति । स्वभावोक्तिरलङ्कृतिः ।। ११ ।।

(३) इहेति--इह पुनरनिशं भिन्नानि द्रुमकुलानि वृक्षयूथानि यैस्तानि, श्रुतिसुखकरं कर्णमनोहरं रणन्ति कूजन्ति, भ्रमरकुलानि निशम्य भ्रमरकुलशब्दं श्रुत्वेति यावत्, किंनरेन्द्रा भ्रमररणनानुकूलां वीणां गुणयन्ति कुर्वन्तीतिभावः ।। १२ ।।

(४) वहतीति--शारदीनः शरत्कालिकः । समीरो वहति । कीदृशः सः । नवविकासो-

वनकरिमदगन्धस्पर्धिसप्तच्छदाली कुसुमजकणशारः शारदीनः समीरः' १३

राजा तु तेन तस्याः सकललतितवनप्रदेशप्रकटनप्रियालापप्रपञ्चेन परितोषितः 'साधुः भोः सारसिके सुभाषितमञ्जरि, साधु । गृहाण पारितोषिकम्' इत्यभिधाय सर्वाङ्गीणाभरणप्रदानेन प्रसन्नाननां तामकरोत् ॥ क ॥

(१)ततश्च संचरच्चटुलभृङ्गविहंगवेगवेल्लद्बकुलचम्पकचूतचन्दनमन्दराम-न्दस्यन्दमानमकरन्दबिन्दुसंदोहाडम्बरिताकाण्डप्रावृषि, प्रलम्बताम्बूलवल्ली-वलयितनितम्बनिम्बकिम्बजम्बीरजम्बूस्तम्बकदम्बके, कुसुमितकरवीरवीरु-धि कोरकितकरञ्जाञ्जननिकुञ्जशिञ्जानशुककपिञ्जले, जलदसमयनीरदनीलत-मतमालतलताण्डवितशिखण्डिनि, मण्डलितमदकलकलहंसोत्तंसकमलवा-पीमण्डिते, मञ्जरितसिन्दुवारसुन्दरामोदनन्दिनि मन्दतरमारुतान्दोलनवि-लोलकक्कोलकुड्मलफलनालिकेरलवङ्गपूगपुंनागनारङ्गरङ्गितविहङ्गे भृङ्गमु-खनखरपञ्जरजर्जरितसर्जखर्जूरमञ्जरीरजःपुञ्जपांसुलभुवि, भुवो भूषणायमाने, सर्वर्तुनिवासनामनि वने विहर्तुमारत ॥ ख ॥

(२)तत्र च व्यतिकरे प्रलयप्रचण्डपवनोल्लासिततनुतुहिनाचलगण्डशैलली-

---

विद्यन्ते येषां ते शारदिनः कृषीवलास्तेषामिनः स्वामी । तत्तत्सस्यसंपत्तिहेतुत्वात् ॥ १३ ॥

ततश्चेति । भृङ्गमुखनखरेत्यादौ भृङ्गो धूम्याटः पक्षी ॥ ख ॥

तत्रचेति शकलोदितेति ॥ शकलः खण्डशशी हंससदृशो भवति । मन्दरगिरिरिव

---

ल्लासिनो नवीनविकासेन शोभमानाः । ये किंजल्काः कमलकेसराः । तेभ्यो लुभ्यन्तो मे मधुकरास्तैः कृतानि गीतानि यासु ताः । कमलमालाः । नर्त्तयन् । तथा वनकरिणां मदगन्धेन स्पर्धन्त इति स्पर्धिनः, सप्तच्छदाः, तेषां श्रेणयस्तासां कुसुमेषु जाता ये कणा बिन्दवस्तैः शारः शबलः संमिश्रित इति यावत् ॥ १३ ॥

(१) ततश्चेति--सर्वर्तुनिवासनामनि वने विहर्तुमारभतेत्यन्वयः । संचरन्तो विचरन्तः, चटुला ये भृङ्गा भ्रमरा विहङ्गाश्च, तेषां वेगेन वेल्लन्तो ये बकुलाः, चम्पकाः, चूताः, चन्दनाः, मन्दरास्तेभ्योऽमन्दं स्यन्दमाना मकरन्दबिन्दुसन्दोहास्तैराडम्बरिता = आटोपिता, अकाण्डेऽकाले प्रावृट् वर्षा यस्मिंस्तत् । वनविशेषणमेतत् । प्रलम्बा लम्बमाना यास्ताम्बूललतास्ताभिर्वलयिता नितम्बा अधोभागा येषां ते तादृशा ये निम्बाः, किम्बाः, जम्बीरा = जम्भलाः, जम्बूस्तम्बाः कदम्बाश्च यत्र । कोरकितानां करञ्जानामञ्जनानां च निकुञ्जे लतामण्डपे शिञ्जानाः शब्दायमानाः शुकाः कपिञ्जलाश्च यत्र । जलदसमये नीरदनीलतमा ये तमालास्तेषां तलेषु ताण्डविताः शिखण्डिनो मयूरा यत्र तत्र । मन्दतरमारुतान्दोलनेन मन्दमन्दवायुचलनेन विलोलानि कक्कोलानां कुड्मला मुकुला एव फलानि, नालिकेराः, लवङ्गाः, पूगाः, पुंनागाः, नारङ्गाः, तै रङ्गिता विहङ्गा यस्मिन् ।

(२) तत्र चेति--तत्र च व्यतिकरे राजहंसाः कुतोऽपि निपेतुरिति सम्बन्धः । प्रलये प्रचण्डपवनेनोल्लासिता उत्क्षिप्ता ये तुहिनाचलस्य हिमालयस्य गण्डशैला च्युतस्थूलोपलास्तेषामनुकृतिं कुर्वन्तः । सुरवारणेन्द्रेणैरावतेन क्षोभिता संचालिता या गगनमन्दाकिनी व्योमगङ्गा तस्याः पतन्ति पाण्डुराणि सितानि डिण्डीरपिण्डपटलानि पिण्डीभूतफेनकुलानि ।

लास्याकलयन्तः, मन्दमरुत्तरङ्गिततनुतरशरदभ्रविभ्रमायमाणाः, सुरवारणेन्द्रविक्षोभितगगनमन्दाकिनीपतत्पाण्डुरडिण्डीरपिण्डपटलानि विडम्बयन्तः, शकलोदितेन्दुमण्डलसहस्रसंछादितामिव गगनमापादयन्तो, मन्दरगिरिपरिक्षेपक्षुभितक्षीरवारिधिदूरसमुच्छलितदुग्धकल्लोललीलां दर्शयन्तः, शेषाहिफणचक्रवालधवलाः, प्रमुदितहराट्टहासलवा इव मूर्तिमन्तः पतन्तः, अमन्दमन्द्रकोलाहलभरितभुवनान्तरालाः, सपदि धरातलमुत्फुल्लपाण्डुपङ्कजप्रकरप्रकारेण मण्डयन्तो निपेतुः कुतोऽपि पुण्डरीकपाण्डुपक्षपत्रराजयो सपदि रासहंसाः ॥ क ॥

तथाविधे च व्यतिकरे विस्मयविस्मृतनिमेषतया निर्वातनिश्चलनीलोत्पलपलाशशोभायमानलोचनः कौतुकाकूततरलितमनाः सपरिजनो नरपतिरवलोकयन्निश्चल एवावतस्थे ॥ ख ॥

ते च धार्तराष्ट्रा अपि कृतपाण्डुपक्षपाताः, द्विजातयोऽपि सुराजिताः, (१)केचिदुच्चचञ्चुपुटविघटितनिकटबालस्थलकमलकुड्मलाः सरसबिसकिसलयानि कवलयन्तः, केऽप्युन्नतसरलगलनालया नलिनवनविमुखाः खमालोकयन्तः, केचिदुत्क्षिप्तपक्षविक्षेपपवनकम्पितकन्दलाः सलीलमुत्पतन्तः, के(२)चिन्मदमधुरनिजनिनादनिर्जितशिञ्जाननूपुराः, पुरः पुरोऽस्य धावन्तो विचरितुमारभन्त ॥ ग ॥

राजापि परिधावितविहङ्गग्रहणाग्रहसमग्रव्यग्रपरिग्रहः परिहासोन्मीलदमलदन्तकान्तिस्तवकिताधरपल्लवो विहसन्नेव तेषामन्यतममनुच्चचटुल-

---

परिक्षेपो मन्थाः ॥ क ॥

तथेति ॥ शोभायमानलोचनेत्यत्र शोभाशब्दात्तद्वति वर्तमानादुपमानात्कर्तृवाचकादाचारेऽर्थेक्यङ् । एवं विभ्रमायमाणेत्यादयोऽपि व्याख्याताः ॥ ख ॥

ते चेति ॥ कृष्णैश्चरणाग्रैर्हंसा धार्तराष्ट्राः । कृतः पाण्डुपक्षाणां शुभ्रपक्षतीनां पातो न्यासो यैः । तथा द्विजातयः पक्षिणः सुष्ठु राजिताश्च । विरोधे धार्तराष्ट्राः कुरवः पाण्डुर्नृपः । पक्षपातस्तद्गृह्यत्वम् । द्विजातयो विप्राः । सुरया जिताः । गलनालिः कण्ठकाण्डम् ॥ ग ॥

राजेति ॥ सलयश्चरणन्यासश्चारी ॥ क ॥

---

मन्दरगिरिपरिक्षेपेण मन्दराचलपरिपातेन क्षुभितः क्षोभं प्राप्तो यः क्षीरवारिधिः क्षीरसागरः तस्य दूरं समुच्छलिता ये दुग्धकल्लोलः क्षीरवीचयस्तेषां लीलामनुकृतिम् ।

(१) केचिदिति—उच्चचञ्चुपुटेन । विघटिता वियोजिता निकटे समीपे बालस्थलकमलानां कुड्मलाः कोरका यैस्ते ।

(२) केचिदिति—मदेन मधुरो यो निजनिनादः कलध्वनिस्तेन निर्जिताः शिञ्जाननूपुरा यैस्ते ।

चरणचारीचर्यया चारु संचरन्तमीष(१)दुत्क्षिप्तपक्षविलासविहसितविलासिनीलास्यलीलमुन्नमिताग्रग्रीवं जग्राह हेलया हंसम् ॥ क ॥

उत्क्षिप्तः स च तेन रक्तकमलगर्भविभ्रमायमाणपाणिपल्लवे, पाण्डुपद्म इव पद्मरागशुक्तितले, क्षणमुदयशैलशोणमाणिक्यशिखरशिखायामिन्दुरिव, विराजितो राजहंसो मृदुवाद्यमानरौप्यघनघर्घरीजर्जरस्वरेण कृतस्वस्तिशब्दो विस्पष्टवर्णविशेषं राजानमुपश्लोकयांचकार ॥ ख ॥

पाण्डुपङ्कजसंलीनमधुपालीसमं गलम् ।
यो बिभर्ति विधेयात्ते ना कपाली स मङ्गलम् ॥ १४ ॥

अपिच ।

सरलप्रियं गुणाढ्यं लम्बितमालं विचित्रतिलकं च ।
वनमिव वपुस्तवैतत्कथमवनं नृपजनस्याभूत् ॥ १५ ॥

अपिच ।

(२)वरसहकाररञ्जकवीरतरोऽशोकमदनापुंनाग ।

---

उत्क्षिप्त इति ॥ पाणिपल्लवस्य पद्मरागशुक्तिः शोणमाणिक्यशिला चोपमानम् । हंसस्य तु पाण्डुपद्म इन्दुश्च ॥ ख ॥

पाण्डुवति ॥ श्वेतसरोजलीनालिश्रेणिनिभं कण्ठं यो धारयति स ना पुरुषः कपाली कपालमाली । अर्थाच्छिवस्तव मंगलं क्रियात् ॥ १४

सरलेति ॥ सरला अकुटिलाः प्रिया यस्य । तथा गुणाढ्यं शौर्याद्याढ्यम् । तथा लम्बितस्रक् । यथा विविधपुण्ड्रं तव वपुर्जनस्यावनं रक्षकमभूत् । वनमिव तदा सरलप्रियंगुणेति समाहारद्वन्द्वः । तथा लम्बिनः प्रलम्बास्तमाला यत्र तथा विशिष्टाश्चित्रकायास्तिलकवृक्षाश्च यत्र । नृपेत्यामन्त्रणे । कथमिति विरोधे । अवनशब्दस्य वनप्रतिषेधार्थत्वात् ॥ १९ ॥

वरेति ॥ वराः सहकारकाः साचिवादयो यस्य । तथा रञ्जयतीति रञ्जकः । तथा वीराणां शूद्रकादीनामिव तरो बलं जवो वा यस्येति संबुद्धौ न दीर्घः । न शोको यस्य । एतेन धीरत्वोक्तिः । मदन इव मदनः कामः । पुंनाग इति नागशब्दः प्रशंसायाम् । इत्यामन्त्रणैः प्रकृतोऽर्थः । विविधद्रुममयेतिपदाद् द्रुमार्थोऽप्यूह्यः । तद्यथा । सहकारआम्रः, करञ्जको नक्तमालः, वीरतरुर्नदीसर्जः । यदमरः—'नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽ-

---

(१) ईषदिति—ईषदुत्क्षिप्तावुच्चालितौ यौ पक्षौ तयोर्विलासवद् विहसिता या विलासिनी नर्त्तकी तस्या लास्यं तद्वल्लीलानुकृतिर्यस्य तम् ।

(२) वरेति—हे राजंस्त्वं विविधोत्तमद्रुममयोऽपि बिभीतकः कलिद्रुमः, तन्मयः कथमसि । विविधद्रुममयत्वं यथा—वरसहकार-करञ्जक-वीरतर्वशोक-मदन-पुंनागवृक्षाः । तत्सम्बुद्धौ । प्रकृत्यर्थे च-वरसहकारक ! रञ्जक ! वीरतरस्, अशोक, मदन, पुंनागेतिषट् सम्बोन्धनपदानि । अत्र व्याजरूपया राज्ञो निन्दया प्रभावातिशयस्तुतिकथनात् व्याजस्तुत्यलङ्कारः । । १६ ॥

विविधद्रुममय राजन्कथमसि न विभीतकः क्वापि ॥ १६ ॥

अपिच ।

(१)बाणकरवीरदमनकशतपत्रकबन्धुजीवकसुजाते ।
नृप विविधविटपरूपस्तथापि विटपः कथं नासि ॥ १७ ॥

राजा तु तदाकर्ण्य सविस्मयम् 'अहो अस्य धैर्यं मनुष्यसंनिधौ, आश्चर्यं रूपे, माधुर्यं वाचि, प्राचुर्यं प्रज्ञायाम्, औदार्यमर्थे, गाम्भीर्यं वर्णव्यक्तौ । प्रायेणाहारमैथुननिद्राभयभ्रमणमात्रविवेकास्तु कथं प्रागल्भ्यमेतत्पक्षिजातिषु । तदेष विहंगव्यञ्जनः कोऽपि कामचारी भविष्यति ॥ सर्वथा मनसापि नावज्ञेयाः केऽपि प्राणिनः । यतः कर्मतः कामतः शापतः संछन्नरूपाण्यपि भ्रमन्ति विविधाश्चर्यभाञ्जि भूतानि' इति चिन्तयन्नुचितज्ञस्तमीषदुल्लसितसिन्दुवारमञ्जरीभिरिव कुन्दकान्तदीप्तिभिरर्चयन्स्वागतमपृच्छत् ॥ क ॥

असावपि प्रणयप्रणतशिराः शुचिरोचिषां चयेन पाण्डुपुष्पप्रकरप्रकारेण प्रतिपूजयन्निव 'देव, भवदवलोकनेनाल्हादितमनसो ममाद्य स्वागतम्' इति ब्रुवाणो राजानं रञ्जयांचकार ॥ ख ॥

अत्रान्तरे त्रासतरलतरतरत्तारकमकाण्डाडम्बरितबाष्पप्लवप्लवमानमिव वहन्ती चक्षुः, उत्क्षिप्तपक्षपत्रपल्लवव्याजेन संगृहीते सहचरे शाखोद्धारमिव दर्शयन्ती, हंसी दूरादवनिपालमवाप्य रौप्यमयघण्टाटंकारकोमलया गिरा श्लोकद्वयमपठत् ॥ ग ॥

र्जुनः, । अशोकः कङ्केल्लिः, मदनः शल्यः, यत्फलं विवाहे वधूवरपाणौ बध्यते । पुंनागः छत्रपर्णिका । कथमिति विरोधे । विभीतकस्याक्षार्थत्वात् । प्रकृते तु विभीतको विशेषेण भीत इति कुत्सायमनुकम्पायां वा कन् ॥ १६ ॥

बाणेति ॥ बाणः करवीरो दमनकः शतपत्रं बन्धुजीवकं जातिश्चेति विटपाः । एतन्मयस्त्वमसि शब्दतः । अर्थतस्तु बाणाः करे यस्य । वीरान्दमयसि । शतसंख्यं पत्रं वाहनं यस्य शेषादिति कप् । बन्धून् जीवयस्युपकरोषि । शोभना जातिः क्षत्त्राख्या यस्य । उभयथाप्येतानि नृपेति च सम्बोधनानि । असीति त्वव्ययं त्वमित्यर्थे । त्वं न विटान्पासीति विटपः । अपात्रभर्ता नेत्यर्थः । तथापि कथमिति विरोधोद्भावने विटपशब्दस्य वीरुदर्थत्वात् ॥ १७ ॥

राजेति ॥ कामचारी विद्याधरादिः ॥ क ॥

अत्रेति ॥ शाखोद्धारमन्यायपूत्कारचिह्नं शाखाग्रहणम् ॥ ग ॥

(१) बाणेति--त्वं विविधविटपरूपोऽपि विटपो वृक्षो नासीति विरोधः । परिहारे तु विटान्पातीति विटपो धूर्तराट्, नासि । विविधविटपरूपत्वे च-बाण-करवीर-दमनक-शतपत्रक-बन्धुजीवक-सुजातीनि पदानि सम्बोन्धनानि वृक्षवाचकानि च । विरोधनिरासे तु बाणकर-वीरदमनक-शतपत्रक-बन्धुजीवक सुजातिपदानि भिन्नार्थानि । व्याजस्तुतिरलंकृतिः॥१७॥

(१)एकान्ते सेवते योगं मुक्ताहारपरिच्छदः ।
हंसः समोक्षयोग्योऽपि देव किं वध्यते त्वया ॥ १८ ॥
(२)नीरञ्जनपदे तिष्ठन्विश्वसंसारसङ्गतः ।
हंसः किं वध्यते क्वापि यस्य नालम्बनं प्रियम् ॥ १९ ॥

अन्यच्च ।

राजन्, जलपक्षिणो मुनय इव ये मीनाहारं वाञ्छन्ति, बहुधावनव्यसनिनो बिसाधाराः । तदलमाग्रहेण' ॥ क ॥

---

एकेति ॥ अस्यापत्यमिः । इरिव इः कंदर्पप्रतिमः । ततः संबुद्धौ ए इति देव इति चोपच्छन्दयितुं संबोध्य मुमोचयिषुः पतिं, हंसी नृपमाह । मुक्ताहारो मौक्तिकहारस्तद्वत्परिच्छदौ पक्षती यस्य शुभ्रत्वात् । स तथोक्तः । कस्य जलस्यान्ते वर्तमानमगं द्रुमं यः सेवते । मोक्षस्य मोचनस्य योग्योऽपि स हंसो वार्चेस्त्वया भवता किं किमर्थं वध्यते इत्येकोऽर्थः । अथवा एकान्त इति समस्तं विजनार्थम् । अथ च हंस आत्मा पुरुषः स मोक्षयोग्योऽपि किं बध्यते । न बध्यत एवेत्यर्थः । कया । त्वया । त्वशब्दः सर्वादिगणेऽन्यार्थः अतः पुरुषापेक्षयान्यया प्रकृत्येत्यर्थः । कस्मान्न बध्यत इत्याह—कान्ते कमनीये परमानन्दस्वरूपे ए कृष्णे त्यक्ताहारपरिवारः सन्योगमध्यात्मं यः सेवते ॥ अत्र पक्षे अ इत्यस्माद्विष्णुवाचकात्सप्तम्येकवचने ए इति रूपम् । यदि वा समोक्षयोग्योऽपीति समः समदर्शनः । अक्षयोग्योऽपि इन्द्रियसंबद्धोऽपि ॥ १८ ॥

नीरेति ॥ जनानां पदे स्थाने पुरग्रामादावतिष्ठन्यः सरस इदं सारसम् । तथा श्वसन्तीति श्वसाः प्राणिनः, वयः पक्षिणः श्वसा यत्र तथाभूतं नीरं जलम्, गतः स हंसः किं क्वापि बध्यते, न बध्यत एव । यस्य नलस्येदं नालं तृणसंबन्धि, वनं काननं प्रियम् । अथवा नीरञ्जनपदे नीरागपदे तिष्ठन्हंस आत्मा किं क्वापि बध्यते, न बध्यत एव । यस्य विश्वेभ्यः संसारसङ्गेभ्य आलम्बनमासक्तिर्न प्रियम् । विश्वसंसारसङ्गत इति तसिलन्तम्॥ १९ ॥

राजन्निति ॥ मीनो मत्स्यः । बह्विति भिन्नम् । बिसं पद्मिनीकन्द आधारो जीवनं येषाम् ॥ मुनिपक्षे अमी इति नेति च पदद्वयम् । बहुधा, अनेकधा वनव्यसनिनो वनस्थाः । तथा व्रतेतः साधारः साधारणतिथिपर्वोत्सवादिर्येभ्यः । लोकोत्तरवृत्तत्वात् । 'बिसादनाः' इति पाठे तु बिसमदनं येषाम् । पक्षे विगतं सादनं येभ्यः । अपीडाकरा इत्यर्थः ॥ क ॥

---

(१) एकान्त इति—ए, कान्ते, एकान्ते वा, सेवते, यः, अगं, मुक्ताहारपरिच्छदः, हंसः, सः, मोक्षयोग्यः, अपि, देव, किं, बध्यते, त्वया इति हंसपक्षिपक्षे पदच्छेदः । ए, कान्ते, एकान्ते वा, सेवते, योगं, मुक्ताहारपरिच्छदः हंसः, सः, मोक्षयोग्यः, अपि देव, किं, बध्यते, त्वया,, इत्यात्मपक्षे पदच्छेदः ॥१८ ॥

(२) नीरेति—नीरं, जनपदे, अतिष्ठन्, विश्वसं, सारसं, गतः, हंसः, किं, बध्यते, क्व, अपि, यस्य, नालं, वनं, प्रियमिति हंसपक्षे पदच्छेदः। आत्मपक्षे च-नीरञ्जनपदे, तिष्ठन् ,विश्वसंसारसंगतः, हंसः, किं, बध्यते, क्व, अपि, यस्य, न, आलम्बनं प्रियमिति पदच्छेदः ॥ १९ ॥

राजा तु तेन तस्याः श्लेषश्लाघिना श्लोकोक्तिरसेनाह्लाद्यमानो नर्मालापलीलया तां बभाषे ॥ क ॥

(१)'अनेकधा यः किल पक्षपातं सदा सदम्भोजगतः करोति ।
स हंसिकेदारविहारशीलो न बध्यते किं बहुनाशकुन्तः' ॥ २० ॥

किं चान्यदपि श्रूयतां बन्धस्य कारणम् ॥ ख ॥

अस्ति मत्परिग्रहे मृणालिकानामवननायिका, सापरागस्थगितमुखकमलापि बलादनेन विनाशिता, विनिपत्योपरि जर्जरिता नखैः खण्डितम-

---

राजेति ॥ श्लेषश्लाघिना श्लेषप्रकाशनशीलेन । एतेन एकान्त इत्यादिवचसां श्लिष्टार्थत्वमभिहितम् ॥ क ॥

अनेकेति ॥ हे हंसिके, यः सदा जगतोऽपि सर्वस्यापि सदम्भो दाम्भिकः । तथानेकधोक्तोऽपि प्रणतिप्रत्युपकारादिना पक्षपातं ममत्वं करोति । तथा दारक्रीडारतोऽब्रह्मचारी । तथा बहून्नाशयत्येवंविधः कुन्तः प्रासो यस्येति हिंसापापरतः । स कथं न बध्यते'। संसारकारायामिति शेषः । इति हंसीवचनप्रतिवचनौचित्येन समपक्षे व्याख्या ॥ अथवा यो दाम्भिकः सदा जगतोऽपि पक्षस्य मित्रवर्गस्य पातं नाशं करोति । तथा जगतोऽपि दारेषु क्रीडापरः । तथा बहुघातिकुन्तास्त्रः । स महापराधी बध्यत एव । नर्मणैव हंसीवचसोऽन्यथात्वम् । तत्त्वतस्तु प्रामाण्यम् । तद्यथा । हे हंसि । किं बहुना किं बहूक्त्या । सदम्भोजं सत्पद्मं, गत प्राप्तः, सन्यः पक्षतिपातं करोति केदारविहारं च शीलयति स शकुन्तः पक्षी न बध्यते । किं तर्हि मुच्यत एव । तस्माद्युक्तमुक्तं त्वयेति वास्तवोऽर्थः । एवमुत्तरत्रापि ॥ २० ॥

अपरपरिभोगप्रतिपादनेर्ष्ययोत्कृष्टदोषदर्शनेन च हंसं प्रति हंसीं कलहयन्नाह—किंचेति ॥ चकारः पराभिप्रायाक्षेपपूर्वके विशेषे । एवं नामासौ दुरात्मा निःशङ्को निर्मर्यादश्च ॥ ख ॥

अस्तीति ॥ येन । आसतां लोकदाराः । मम राज्ञोऽपि परिग्रहे स्थितायां नायिकायां प्रवृत्तम् । मृणालिकानां पद्मिनीनामवने रक्षणे, नायिका स्वामिनी, सा ततोऽपरागाद्रागाभावात्, संवृतवक्त्रकमलापि बलात्कारादनेन त्वद्भर्त्रा विनाशिता । विनाशोऽत्र शीलखण्डनम्। तदाह—विनिपत्येति । अधर ओष्ठः,अलिकं ललाटं तस्य, तथा अलकानां केशानां च मण्डनम् । लुप्तम् । उदस्तः सुकुमारभावः । अर्थात्कन्यात्वम् ॥ वास्तवे तु । मृणालिका पद्मिनी । नामेति संबोधने । वनयस्य नायिकेव । परागो मकरन्दस्तेन छन्नमुखानि कमलानि यस्याम् । बलादपि अनेन विना पक्षिणा सा अशिता भक्षिता । अशो-

---

(१) अनेकेति—अनेकधा, यः, किल, पक्षपातं, सदा, सदम्भः, जगतः, करोति, सः हंसिके, दारविहारशीलः, न, बध्यते, किं, बहुनाशकुन्तः,, इति निन्दाद्योतकनर्मवाक्ये पदच्छेदः । अनेकधा, यः, किल, पक्षपातं, सदा, सदम्भोजगतः, करोति, सः, हंसि, केदारविहारशीलः, न, बध्यते, किं, बहुना, शकुन्तः, इति वास्तविकार्थे पदच्छेदः ॥ २० ॥

धरदलम्, दलितमल्लिकालकमण्डनम्, अपनीतः सुकुमारभावः ॥ क ॥

किं वापीवरेणानेन न कृतम् ॥ ख ॥

तदेष यावन्मध्यं बहुधापाञ्जरन्नावगाहते तावन्मे कुतः संतोषः । न च नदीक्षिते द्विजन्मनि निगृहीतेऽपि गरीयः पातकमस्ति ॥ ग ॥

अयि मुग्धे कलहंसिके, त्वं पुनः मानसंगतापि विमाननां सहसे, विपरीतः खल्वेषः । यतः सद्वंशकान्तारागविमुखो मधुपश्रेणिश्रयणीयां सुराजीविनीं कान्तां कामयते । तदलमनेन । गच्छ वत्से, यथाप्रियम्' इत्यभिहितवति वसुंधरेश्वरे ॥ घ ॥

सापि सपरिहासं हंसी 'हंहो विहंगभुजंग, मृणालिकां तामरसान्तरसानुरागरञ्जितमनाः कामयसे किं वापीनदेहे नीरसेवके त्वयि न संभाव्यते' इत्याकलितकलहं कलहंसमवादीत् ॥ ङ ॥

---

भोजनार्थात्कर्मणि क्तः । अधरदलमधःपत्रम् । अलय एव कालं कृष्णं कस्य शिरस उपरिभागस्य मण्डनम् । अपनीतो मृदुभावः । नखैर्जर्जरितत्वात् ॥ क ॥

किमिति ॥ अथवानेन पीवरेण स्थूलेन किं न कृतम् । सर्वं कृतमेव तदित्युपसंहारे ॥ वास्तवे तु वाप्यां वरेण प्रधानेनानेन ॥ ख ॥

तदिति ॥ तस्मादेषोऽपराधी, पञ्जरस्येदं पाञ्जरं मध्यं यावन्नावगाहते । मे मम । तावत्कुतः संतोषः । अथायं द्विजन्मत्वादनिग्राह्य इत्यत आह—न चेति ॥ द्वाभ्यां सकाशाज्जन्म यस्य स द्विजन्मा न द्विजन्मा तथोक्ते अर्थात्त्रिजाते निगृहीतेऽपि गरीयोऽत्यर्थं पातकं न च नैवास्ति । तस्मिन्कीदृशे । नदीक्षिते दीक्षा शैवादिमतपरिग्रहः संजातोऽस्येति । एतेन दीक्षितो लिङ्गी त्रिजातोऽप्यवध्य एव । अथवा अपिः समुच्चयार्थो भिन्नक्रमो द्विजन्मनीत्यनेन संयोज्यः । तद्यथा दीक्षिते व्रतिनि द्विजन्मनि ब्राह्मणे निगृहीते न च न पातकम् । पातकमेवेत्यर्थः । वास्तवे तु तस्मादेष त्वत्पतिः । अपां जलानां मध्यं जरन्यावद्वार्धकावधि नावगाहते तावन्मे कुतः संतोषः । नद्यां क्षित उषिते द्विजन्मनि विहंगे नितरां गृहीते स्नेहात्स्वीकृते गरीयोऽत्यर्थं न च पातकमस्ति । श्रेय एवास्तीत्यर्थः । गरीय इति क्रियाविशेषणम् । अपिर्विरोधोद्भावने गृहीतशब्दस्य दण्डितार्थत्वात् ॥ ग ॥

अयीति ॥ मानेन संगता । विमानना अवगणना । पक्षे मानसं सरः । विषु पक्षिषु माननां पूजा । विपरीतो विरुद्धवृत्तः । पक्षे विभिः पक्षिभिः परिवृतः । कादम्बककदम्बकेश्वरत्वात् । सदन्वयकान्तानुरागपराङ्मुखे । मद्यपश्रेणिसेव्याम् । सुरया जीवति या ताम् । इच्छति । पक्षे शोभना वंशा मस्करा येषु तेषु कान्तारेषु नगेभ्यो विमुखो भृङ्गपङ्क्तिश्रितां सुष्ठु शोभनां राजीविनीं नलिनीम् । प्रियस्यानतिक्रमेण यथाप्रियम् । प्रियो भर्ता इष्टप्रदेशश्च । इत्युक्तवति नृपे ॥ घ ॥

सापीति ॥ हंस्यपि हंसमवादीत । हंहो इति प्रश्नपूर्वामन्त्रणे । विहंगविलासिन् । तां राजनिवेदिताम् । मृणालिकानां पालननायिकाम् । अरसां निःस्नेहाम् । तरसा बलेन । अनुरागेण स्वासक्त्या रञ्जितचित्त इच्छसि । नुः किमर्थे । न चायं विलासिधर्मः ।

सोऽपि 'वैदग्ध्यधुरंधर, धूर्तालापपण्डित, प्रज्ञाप्राग्भारगुरो, चातुर्याचार्य, मा मे प्रियां प्रकोपय । सदृशा एव यूयं वयं च राजहंसाः । सरसां श्रियमनुभवामः । नदीनां पात्रेष्ववस्थितिं कुर्मः । न चरणचर्यायां न श्लाघ्यामहे । तत्सपक्षेषु विपक्षो माभूः ॥ क ॥

एषा मे हृदयं जीव उच्छ्वासः प्राण एव च ।
संसारसुखसर्वस्वं प्राणिनां हि प्रियो जनः ॥ २१ ॥
(१)रूपसंपन्नमग्राम्यं प्रेमप्रायं प्रियंवदम् ।
कुलीनमनुकूलं च कलत्रं कुत्र लभ्यते ॥ २२ ॥

तदलमलीककलहारम्भेण भवानप्येवं प्रेमप्रपञ्चनाटकनायको नातिचिरादेव यथा भवति तथा कमप्युपकारं करिष्यामि' इति राजानमवादीत् ॥ख॥

अत्रान्तरेऽन्तरिक्षमण्डलादतिस्पष्टवर्णव्यक्तिमनोहारिणी वागश्रूयत ॥ग॥

राजन्राजीवपत्राक्ष क्षिप्रं हंसो विमुच्यताम् ।
भविष्यत्येष ते दूतो दमयन्त्याः प्रलोभने ॥ २३ ॥

राजा तु तस्याः सोष्मबलातैलपूरेणेवाङ्गमुत्पुलकयता, कर्णान्तरमवती-

---

वस्तुतस्तु मृणालिकां पद्मिनीम् । तामरसान्ते अम्भोजे रसो निर्यासस्तत्रानुरागो यस्येति संबोधनम् । अन्तशब्दः स्वरूपार्थः । अथवा तामरसस्यान्तरे मध्ये सानुरागेति संबोधनम् । अथवा पीने स्थूलाङ्गे । नीरसे निःस्नेहे । निर्वीर्ये वा । बकप्राये त्वयि किं न संभाव्यते । अन्यत्र । त्वयि किंभूते वाप्यश्च नद्यश्च तेष्वीहा यस्य । तथा नीरं जलं सेवते यः । किं न संभाव्यत इति । संभावना प्रशंसाविषया । एकमेव हि वाक्यं प्रकरणादौचित्याच्च प्रशंसां निन्दां च प्रतिपादयति । यथा 'त्वमस्माकं किं किं न करिष्यसि' इति प्रसन्नेनोक्तं प्रशंसां गमयति, रुष्टेन च निन्दाम् ॥ ङ ॥

सोऽपीति ॥ राजहंसा राजमुख्या यूयं सरसां जनानुरागकरीं लक्ष्मीमनुभवथ । तथा पात्रेषु धर्मपात्रादिषु दीनां स्थितिं व्यवस्थां न कुरुथ ॥ तथा रणविधौ न न श्लाघ्यध्वे । चः समुच्चये । वयं पक्षे सरसां तडागानाम् । नदीनां सरितां कूलमध्येषु । चरणं चर्या गतिविशेषः ॥ तत्तस्मादुक्तप्रकारेण समानपक्षेषु पक्षतिसहितेषु च । विरुद्धपक्षो माभूः ॥ क ॥

एषेति ॥ एषैव मे हृदयं मनः । अभिन्नभावात् । जीवो जीवितम् । तत्सद्भावे जीवनात् । उच्छ्वासः श्वासरोधकचिन्तादिदुःखभरापगमहेतुत्वात् । प्राणः प्रधानभूतो वायुः । देहाधारत्वात् । प्राणो बलमपि । जीवितार्थो बलार्थो न तु वाय्वर्थः । यत्प्रशस्तपादः—'प्राणोऽन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुः' इति ॥ २१ ॥

रूपेति ।। प्रेम्णा तुल्यं प्रेमप्रायम् । सस्नेहमित्यर्थः ॥ २२ ॥

राजा त्विति ।। बला गन्धद्रव्यविशेषस्तस्य तैलम् ॥ क ॥

---

(१) रूपेति—रूपसंपन्नं नागरिकभावानुविद्धं सस्नेहं प्रियालापि सदृशं प्रियतमानुकूलं कलत्रं भाग्येनैवोपलभ्यते नान्यथा ॥ २२ ॥

र्येन, दमयन्तीति नाम्ना कोमलतैत्तिरपिच्छस्पर्शसुखमिवानुभवन्मनाङ्निमीलिताक्षश्चिन्तयांचकार ॥ क ॥

(१)'आल्हादयन्ति सौख्याम्भःशातकुम्भीयकुम्भिकाः।
काञ्चीकलापसश्रीकाः श्रोणीबिम्बाः श्रुता अपि ॥ २४ ॥

तत्केयं दमयन्ती, कश्चायमाश्चर्यभूतो विहंगः का चेयं नभोभारती, सर्वमेतद्विस्तरेण वेदितव्यम्' इत्यवधारयन्नेकस्यामुत्फुल्लपल्लवितलतामण्डपच्छायायामुन्नि(२)द्रकुसुममकरन्दशीकरासारशिशिरे शिलातले निषद्य तं हंसमवादीत् ॥ ख ॥

(३)'भद्र, साप्तपदीनं सख्यम्, उत्पन्नकतिपयप्रियालापा प्रीतिः, प्रयोजननिरपेक्षं दाक्षिण्यम्, (४)अकारणप्रगुणं वात्सल्यम्, अनिमित्तसुन्दरो मैत्रीभावः सतां लक्षणम् ॥ ग ॥

अस्ति च तत्सर्वं भवन्मूर्तावतो निःशङ्कमभिधीयसे कथय केयं दमयन्ती, कस्य सुता, कीदृग्रूपम, कुत्र सा वसति, कश्च भवानस्माकमुपकर्तुमिच्छति, का चेयं दिव्यवाणी इत्येवमुक्तः स कथयितुमारेभे ॥ घ ॥

'शृङ्गाररसभृङ्गार तस्याः सौन्दर्यवीरुधः।
कर्णमारोप्यतां देव वार्ताविस्मयपल्लवः ॥ २५ ॥

अस्ति विस्तीर्णमेदिनीमण्डलमण्डनायमानो नगनगरपुरविहाराराम-

---

आह्लादेति ।। सौख्यजलसौवर्णकलशयः। आसतां दृष्टाः स्पृष्टा वा। श्रुता अप्याल्हादयन्ति। यतः सौख्यस्य सर्वात्मना आधारभूताः ॥ २४ ॥

भद्रेति ।। सप्त पदानि गम्यन्त उच्यन्ते वा यत्र सख्ये तत्साप्तपदीनम्। मैत्र्याः प्रीतेर्भावोऽभिप्रायः ॥ ग ॥

शृङ्गारेति ।। रसेन सिच्यमाना वीरुद्वर्धते। शृङ्गारोऽपि कर्णकण्ठे निहितेन पल्लवेन शोभत इत्युभयसमागमौचित्यात्। सौन्दर्येण वीरुदिव सौकुमार्यात्। वार्ताया विस्मयो वार्ताविस्मयः स एव पल्लवः ॥ २९ ॥

अस्तीति ।। देशानामुत्तरो मुख्यो दक्षिणदेशोऽस्ति। अपिर्विरोधे। उत्तरशब्दस्य

---

(१) आल्हादेति—सौख्यमेवाम्भो जलं तस्य, शतकुम्भे पर्वते भवं शातकुम्भं सुवर्णं तत्सम्बन्धिन्यः कुम्भिकाः। सौख्यजलपूरितसौवर्णकलश इति भावः। काञ्चीकलापेन—काञ्चीविभूषणेन सलक्ष्मीकाः। श्रोणीबिम्बाः श्रोणतीति श्रोणी "श्रोणृ संघाते" इति धातोरिन्, ततश्च ङीप्। श्रुता अपि समाकर्णिता अपि। आल्हादयन्ति सुखयन्ति ॥ २४॥

(२) उन्निद्रेति—उन्निद्राणि विकसितानि। यानि कुसुमानि प्रसूनानि तेषां मकरन्दशीकराणां पुष्परसबिन्दूनामासारोऽनवरतप्रस्रवणं तेन शिशिरे।

(३) साप्तपदेति—'साप्तपदीनं सख्यमिति' पाणिनिसूत्रोद्धारः (५।२।२२)। सप्तभिः पदैरवाप्यते साप्तपदीम्। अत्र खञ् प्रत्ययः।

(४) अकारणेति—अकारणेन निर्निमित्तेन प्रगुणमवक्रं वात्सल्यम्।

रमणीयः सीतासहायसंचरितरघुपतिपादपद्मपवित्रारण्यः (१)पुण्यतरतरङ्ग-गङ्गागोदावरीवारिवारितदुरितदावानलप्रसरः मन्दर इव बलिराजजनितप-रिवर्तनः, कैलास इव महेश्वरलोककृतवसतिः, मेरुरिव सुवर्णप्रकृतिकमनीयो, यदुवंश इव दृष्टशूरपुरुषावतारः, सोमान्वय इव बुधप्रधानो, वेदपाठ इवाने-कैः सवनैरुपेतः, पर्वते पर्वते स्थाणुभिः, पुरे पुरे पुराणपुरुषैः,जले जले कम-लोद्भवैः, पदे पदे देवकुलैः, वने वने वरुणैः, स्थाने स्थाने नन्दनोद्यानैः, अर्ग-लः स्वर्गस्य, तापीप्रायोऽप्यनुपतापी जनस्य, विन्ध्याद्रिमुद्रितायां दिशि देशानामुत्तरोऽपि दक्षिणो देशः ॥ क ॥

यत्र । शास्त्रे शस्त्रे च वेदे वैद्ये च भरते भारते च कल्पे शिल्पे च प्रधा-नो, धनी, धन्यो, धान्यवान्, विदग्धो वाचि, मुग्धो मुखे स्निग्धो मनसि, वसति निरन्तरमशोको लोकः ॥ ख ॥

यत्र क्रुद्धधूर्जटिललाटलोचनानलज्वालाकवलनाकुलः, त्रासादपाङ्गाव-लोकनमात्रनिर्जितपरमेश्वरमनसां विलासिनीनामुच्चकुचकुम्भयोः शृङ्गा-रसर्वस्वम्, अधरपल्लवेषु मधु, भ्रूभङ्गेषु धनुः, कटाक्षेषु पुष्पबाणान्निधाय निलीनोऽङ्गेषु जघनस्थलस्थापितरतिर्मकरकेतनः ॥ ग ॥

---

दिग्देशार्थत्वात् । बलिना बलवता, राज्ञा भीमलक्षणेन जनितं परि समन्ताद्वर्तनं परिपा-लनं यस्य । पक्षे बलिराजो दैत्यः । परिवर्तनं भ्रमणम् । महानीश्वरोऽतिसमृद्धः शिवश्च । सुष्ठु वर्णा द्विजातयः । प्रकृतयोऽमात्याद्याः । पक्षे सुवर्णप्रकृत्या स्वर्णस्वभावेन काम्यः । शूरो विक्रमी वसुदेवपिता च । बुधो विद्वान्ग्रहविशेषश्च । स इति भिन्नम् । वनैः काननैः । पक्षे सवनैर्यज्ञैर्युक्तः ॥ स्थाणुः कीलः स्थिरपदार्थश्च । पुराणपुरुषो वृद्धो विष्णुश्च । कमलोद्भवैः कमलोत्पत्तिभिर्ब्रह्मभिश्च । कुलं गृहं वृन्दं च । वरुणो वृक्षो जलं वा । पक्षे प्रचेताः सूर्यो वा । नन्दन इति क्रियावचन इन्द्रवनसंज्ञा च । तैस्तैर्बहुत्वविशिष्टैर्दिवोऽर्ग-लोऽधिकः । स्वर्गे ह्येकैक एव स्थाणुप्रभृतिः । अस्मिंस्तु बहव इत्यर्थः । तापी नदी प्राये-ण यत्र । विरोधे तु तापयत्यवश्यमिति तापी ॥ क ॥

यत्रेति ॥ कल्पे शिल्पे चेति । कल्पो यज्ञकर्मणामुपदेशकः । प्रधान इति । प्रकृष्टं धानं धारणं यस्य । शस्त्रशास्त्रादीनि प्रकर्षेण धारयतीत्यर्थः । एवं सर्वत्र वाच्यलिङ्गता । मुख्यार्थस्य हि प्रधानशब्दस्याविष्टनपुंसकलिङ्गत्वम् ॥ ख ॥

यत्रेति ॥ देशे विलासिनीनां कुचादिष्ववयवेषु स्वोपकरणानि शृङ्गारादीनि स्थापयि त्वा त्रासान्निलीनो मन्मथः । यतः । किंविशिष्टानां तासाम् । निर्जितं परमेश्वराणां धनिनां मनो याभिः ॥ अथ च परमेश्वरो धूर्जटिः सोऽपि ताभिर्निर्जित इत्युक्तिलेशः । एतेन शरणागतत्राणवैभवम् ॥ ग ॥

---

(१)—पुण्येति—पुण्यतराः पवित्रास्तरङ्गा वीचयो यस्याः सा गङ्गा गोदावरी च तयो-र्वारि तेन वारितो दूरीकृतो दुरितदावानलप्रसरो दुरितमेव दावाग्निस्तस्य विसरो येन ।

यासां तारुण्यमेव सर्वाङ्गेषु शोभार्थमाभरणम्, उत्तुङ्गस्तनमण्डललावण्यमेव मुखकमलावलोकनाय दर्पणः, तारतरनयनकान्तिरेव मुखमण्डलमण्डनाय चन्दनललाटिका, भ्रूभङ्गा एव विभ्रमाय मृगमदपत्रभङ्गाः, कटाक्षा एव युवजनजयाय परमास्त्राणि, बन्धूककुसुमकान्तिदन्तच्छद एव लोकलोचनमनोमोहनाय माहेन्द्रमणिः, मुखकमलपरिमलागतमधुकरमधुरझंकार एव विनोदाय वीणाध्वनिः ॥ क ॥

किं बहुना—

ता एव निर्वृतिस्थानमहं मन्ये मृगेक्षणाः।
मुक्तानामस्पदं येन तासामेव स्तनान्तरम् ॥ २६ ॥

मन्ये च। ताभिरेव विविधनिधुवननिधानकुम्भीभिः कुम्भोद्भवोऽपि भगवान् प्रलोभितो भविष्यति, येनाद्यापि न मुञ्चति दक्षिणां दिशमेव ॥ख॥

अथवा।

(१)देशो भवेत्कस्य न वल्लभोऽसौ स्त्रीसंकुलः सुस्थितकामकोटिः।
दग्धैककामं त्रिदिवं विहाय यस्मिन्कुमारोऽपि रतिं चकार ॥ २७ ॥

(२)तस्यान्तर्भूतवैदर्भमण्डलस्यालंकारभूतमनाकुलममरपतिपुरप्रतिस्पर्धिपरितःपरिखाप्रान्तरूढप्रौढहृद्योद्यानमालावलयितमदभ्रशुभ्राभ्रंलिहप्रासा-

---

यासामिति ॥ माहेन्द्रमिन्द्रजालम्। तन्त्रबलेनाविद्यमानवस्तुप्रकाशनमिति यावत्। तदर्थो मणिर्माहेन्द्रमणिः ॥ क ॥

ता एवेति ॥ निर्वृतिर्मुक्तिः शर्म च। मुक्ता मुक्तात्मानो मौक्तिकानि च ॥ २६ ॥ख॥

देश इति ॥ कामकोटिर्देवी कंदर्पकोट्यश्च। कुमारः कार्तिकेयो डिम्भश्च। रतिरास्थार्थः। सुरतार्थेन च विरोधोद्भावना ॥ २७ ॥

तस्येति ॥ तस्य दक्षिणदेशस्यान्तर्भूतं वैदर्भं मण्डलं तदलंकारभूतम्। एवं विशेषणोपेतम्। निरुपद्रवम्। तुङ्गतरङ्गेषु रङ्गन्ति तरुणानि नवान्यर्जुनानि धवलानि यानि राजीवानि तद्वद्राजमाना ये राजहंसास्तैर्विराजितं वारि यस्यास्तस्या वरदायास्तीरे कुण्डिनं पुरं वर्तत इति शेषः। एकत्र ब्राह्मणैरध्यासितम्। कीदृग्भिः। आहुतिहतोपद्रवसंघैः। तथा कृतक्रतुभिः। तथा कोपशून्यैः। निरुक्तं ग्रन्थविशेषो वचनाभावश्च।

---

(१) देश इति—स दक्षिणो देशः कस्य न प्रियः। यतः स्त्रीभिर्व्याप्तः। सुस्थिताः कामकोटिर्देवी कन्दर्पकोट्यश्च यत्र। यत्र च दग्धकामः कुमारः=कार्त्तिकेयोऽपि त्रिदिवं स्वर्ग विहाय निवासं चक्रे। तथा कुमारो बालोऽपि यत्र रतिं सुरतं चकारेति विरोधेन देशस्य वैशिष्ट्यं प्रबोध्यते।

(२) तस्येति—तत्र दक्षिणदेशप्रान्तवर्त्ति वैदर्भमण्डले कुण्डिनं नाम नगरम्। परितो या परिखा तत्प्रान्ते निकटे रूढोत्पन्ना प्रौढा योद्यानमाला ताभिर्वलयितम्। अदभ्रा बहवो ये शुभ्रा धवलाः, अभ्रंलिहा आकाशचुम्बिनः प्रासादा हर्म्याणि तेषां शिखरशिखाः शिखाग्रभागास्तासामाभोगस्तेन भग्नो विनाशितो रविरथतुरंगानां सप्तसप्तिसप्ताश्वानां वेगो येन तत्।

दशिखरशिखाभोगभग्नरविरथतुरंगवेगम्, एकत्राग्निहोत्रमन्त्रपवित्राहुतिहत-समस्तदिव्यान्तरिक्षभौमोत्पातसंघातैः, कृतमन्युभिरपि मन्यूशून्यैः, उक्त-सूक्तैरपि निरुक्तपरैः, सन्मार्गस्थैरपि गृहस्थैः, सकलत्रैरपि ब्रह्मचारिभिः, अभ्यस्ततिथिभिरप्यतिथिकुशलैः, सामप्रयोगप्रधानैरपि दण्डावलम्बिभिः, शतपथानुसारिभिरप्येकमार्गैः, ब्राह्मणैरध्यासितम्। एकत्र कुरुभिरिव द्रोण-पुरःसरैः, प्रासादैरिव तुलाधारिभिः, नैयायिकैरिवानुमेयानुमाननिपुणैः, वैशेषिकैरिव द्रव्यानुगुणकर्मविशेषपण्डितैः, वैयाकरणैरिव रूपसिद्धिप्रधानैः, रुद्रैरिवानेकग्रन्थिबद्धकपर्दकैः, विपणिवणिग्जनैरधिष्ठितम्। एकत्र विट-कौलदम्भदीक्षाभिरिव कुचरूपलोभितलोकाभिः, कुकविकाव्यपद्धतिभिरिव भग्नयतिगणवृत्ताभिः, निशाचरीभिरिव रजनिरागिणीभिः, सर्वतोमुखज-घनचपलाभिरप्यनार्याभिः, कर्णाटचेटीभिर्भरितम्। एकत्र बालकमिव कुलालाकीर्णम्। एकत्र वृद्धिमिव कुजराजितम्। एकत्र चित्रविद्ययेव प्रव-र्धमानसकलशिशुशोभितया विन्यस्तस्वस्तिकया सर्वतोभद्रभूषणया भवन-मालयालंकृतम्। एकत्र नाटकैरिव पताकाङ्कसंधिसंगतैः, दुष्टकिरातैरिव दुष्टकूटकर्मभिः, शस्त्रैरिव सुधारैः, विचित्रैरपि सचित्रैः, सतुलैरप्यतुलैर्देव-

सन्मार्गः सदाचारः श्रेष्ठाध्वा च। सकलं सर्वं त्रायन्त इति सकलत्राः। ब्रह्म वेदं चरन्ति जानन्त्यवश्यम्। 'ब्रह्मचारिभिरपि सकलत्रैः' इति पाठे ब्रह्मचारिभिर्निषिद्धकामैः। अति-थीनागन्तून्, कुशांश्च लान्ति स्वीकुर्वन्ति। साम वेदः सान्त्वं च। दण्ड आषाढो दमनं च। शतपथो यजुर्वेदभागः शतसंख्यः पन्थाश्च। एकमार्गैरृजुभिः। सर्वत्रापिर्विरोधार्थे। स तु प्रतीयमानव्याख्यया। पुनरप्येकत्र। वणिग्भिरधिष्ठितम्। द्रोणो मानं कौरवगुरुश्च। सूत्रादिमानं गृहादीनां तिर्यग्धारणस्तम्भश्च तुला। अनुमेयं कणादि तस्यानुमानमुद्देश-ज्ञानम्। पक्षे अनुमीयते तदनुमेयम्। अनुमीयतेऽनेन तदनुमानम्। यथाऽयं वह्निमान्धू-मवत्त्वादित्यत्र धूमोऽनुमानम्। वह्निरनुमेयः। द्रव्यस्य रूप्यकादेरनुगुणः संकलना तत्कर्म-विशेषविज्ञाः। पक्षे द्रव्यानुगता गुणकर्मविशेषाः पदार्थाः। रूपं टङ्ककरूपकादिनाणकं शब्दश्च। कपर्दो वराटो जटाबन्धश्च। एकत्र। कर्णाटदासीभिर्भरितम्। कुचयो रूपेण लोभितलोकाः। शाक्तदम्भदीक्षासु कुत्सितेन चरुणा मांसादिनोपलोभितलोकाः। भग्न-मुनिवृत्तशीलाभि। पक्षे भग्नयतिगणानि वृत्तानि यासु। यतिर्विरतिः। गणा मगणा-दयोऽष्टौ। वृत्तं पद्यम्॥ रजनी हरिद्रा निशा च। रागो वर्णान्तरारोपणमासक्तिश्च। कर्णाटे हि हरिद्रैवाङ्गरागः। मुखे जघने च चपलाः। आर्या साध्वी मात्रावृत्तभेदश्च। ततो नञ्योगः। अपिर्विरोध। मुखजघनचपलाशब्दस्यार्याख्याद्वयवचित्वात्। एकत्र। कुलालैः कुम्भकारैः कुत्सितलालया चाकीर्णम्। कुजैस्तरुभी राजितम्। पक्षे कुत्सित-जरया जितम्। एकत्र। गृहश्रेण्या भूषितम्। प्रवर्धमानैः सकलैः कलावद्भिः। शिशुभि-र्डिम्भैः शोभितया। तथा विन्यस्ताः स्वस्तिका मौक्तिकादिक्षोदरचिताश्चतुष्का यस्याम्। सर्वत इति भिन्नम्। भद्राणि वास्तुशास्त्रख्यातानि भूषणं यस्याम्। यदि वा

कुलैः संकुलम् । विशालमपि शालासंपन्नम्, चतुश्चरणसंयुक्तमपि चरण-रहितम्, विट्संभृतमपि शुचिमार्गम्, सर्वत्र चत्वराधिकमपि स्थिरप्रकृति, मज्जन्महाराष्ट्रकुटुम्बिनीमुखमण्डलविधीयमानोत्फुल्लकमलशोभायास्तुङ्गतरङ्गरङ्गत्तरुणार्जुनराजीवराजमानराजहंसविराजितवारेर्वरदायास्तीरे रमणीयकरसकुण्डं कुण्डिनं नाम नगरम् ॥ क ॥

(१)यस्य नातिदूरे दर्शनदूरीकृतदुरितोपप्लवाऽऽप्लवनजनितपातकभङ्गां गङ्गामुपहसन्ती स्वर्गमार्गाश्रयनिश्रेणी पुण्यपयाः पयोष्णी वहति ॥ ख ॥

यस्य च पश्चिमदेशे (२)प्रणतसुरासुरमौलिनीलमणिमरीचिचञ्चरीकचक्रचुम्बितचरणाम्भोजस्य भोजकटकूपजन्मनो जरापातितययातेः (३)प्रचण्डदण्डदाण्डिक्यदण्डनाडम्बरितगण्डपाषाणविदलितवैदर्भमण्डलस्य भ-

स्वस्तिकवर्धमानौ गृहावयवविशेषौ । पक्षे शिशुः सकलः स्वस्तिको वर्धमानः सर्वतोभद्र इत्याख्यानि पञ्चपत्राणि । एकत्र देवकुलैः संकुलम् । पताका ध्वजवासः सैवाङ्को येषाम् । तथा संधिषु संगतानि । अविभाव्यसंधीनित्यर्थः । नाटकेषु तु मुख्यनायकोपरि उपनायकचरितं पताका । अङ्कः प्रबन्धविभागः । मुख-प्रतिमुख-गर्भ-अवमर्श-निवर्हणख्याः पञ्च संधयः । कूटं शिखरं कपटं च । सुधां लेपविशेषममृतं च प्राप्नुवन्ति । पक्षे शोभना धारा येषाम् । विचित्रैरनेकप्रकारैः । न विगतचित्रैः । न तुला साम्यं येषाम् । तथा तुलया धारणस्तम्भेन सह । उभयत्रापिविरोधे । विशालं विस्तीर्णम् । व्यपेतशालम् । शाला गजाद्यालयः । चत्वारश्चरणा ऋग्वेदादयः । अपि चेति विरोधे । तदा रणेन युद्धेन रहितम् । विड्भिर्वैश्यैः संवृतम् । न विष्ठाभिः । चत्वरं चतुष्पथम् । प्रकृतिरमात्यादिः । विरोधस्तु चत्वरेति चकारस्य समुच्चयार्थस्य पूर्वपदेन योगे ॥ क ॥

यस्येति ॥ यस्य ( पुरस्य ) । नातिदूरे (निकटे) । गङ्गा स्नानात्पुण्यहेतुः । पयोष्णी तु दर्शनादपीत्यस्या विशेषः ॥ ख ॥

यस्य चेति ॥ भार्गवः शुक्रः । भोजकटकूपेति अधिष्ठाननाम । तत्र जन्मास्येति । तथा च श्रुतिः—'शुक्रो भोजकटेऽभवत्' । कूपादिप्रसिद्ध्या हि अधिष्ठानिनामानि दृश्यन्ते । तथा च मरुदेशे शिवकूपः किराटकूपो जाङ्गलकूप इत्याद्यधिष्ठाननामानि । वृषपर्वदैत्यसुतां शर्मिष्ठां शुक्रसुतां देवयानीं च ययातिनृपतिरुपयेमे । ततोऽसौ शर्मिष्ठाप्रीत्या देवयानीमवजानन् 'तवाङ्गे जरा पततु' इति शुक्रेण शप्तः । तथा दाण्डक्यो नाम भोजकट-

(१) यस्येति—दर्शनेनः दूरीकृतो दुरितोपसर्गो यया सा स्वर्गमार्गश्रयणनिःश्रेणिका पयोष्णी, आप्लवनेन स्नानेन जनितः पातकभङ्गो यया सा तां गङ्गामुपहसति ॥

(२) प्रणतेति—प्रणता ये सुरासुरास्तेषां मौलौ ये नीलमणयस्तेषां मरीचय एव चञ्चरीका भ्रमरास्तेषां चक्रेण चुम्बितं चरणाम्भोजं यस्य ।

(३) प्रचण्डेति—प्रचण्डो दण्डो यस्य तादृशो यो दाण्डिक्यो नाम राजा तस्य दण्डनं तेनाडम्बरिता क्षिप्ता "डबि क्षेपे" इति धातुः, ये गण्डपाषाणास्तैर्विदलितं वैदर्भमण्डलं येन तस्य ।

गवतो भार्गवस्याश्रमः ॥ क ॥

यत्र च विपत्त्राः सन्ति साधवो न तु तरवः, विजृम्भमाणकमलानि सरांसि न जनमनांसि, कुवलयालंकाराः क्रीडादीर्घिका न सीमन्तिन्यः, विपदाक्रान्तानि सारस्कूलानि न कुलानि ॥ ख ॥

किं बहुना—

देशानां दक्षिणो देशस्तत्र वैदर्भमण्डलम् ।
तत्रापि वरदातीरमण्डलं कुण्डिनं पुरम् ॥ २८ ॥

तत्रास्ति (१)समस्तरिपुपक्षक्षोददक्षदक्षिणक्षोणीपालमौलिमाणिक्य-निकषनिर्मलितचरणनखदर्पणश्च(२)तुरुदधिपुलिनचक्रवालवालुकासंख्य-संख्यविख्यातकीर्तनीयकीर्तिसुधाधवलितवसुंधरावलयो (३)निजभुजपञ्ज-रान्तरनिरुद्धशारिकायमाणरणरङ्गाङ्गणार्जितोर्जितजयश्रीः, (४)यौवनमदम-त्तकान्तकुन्तलविलासिनीनयननीलोत्पलदलमालार्च्यमानलावण्यपुण्यप्रति-मः, रविरिव नासत्यजनकः, पुरंदर इव नाकविख्यातः, गरुत्मानिव नागमा-धिक्षेपी, पद्मखण्ड इव नालसहितः, व्याकरणप्रबन्ध इव नामसंपन्नः, धाम

---

देशाधिपः शुक्रछात्रमरजःसंज्ञां क्षत्रियः किल हठाद्द्विजकन्यां परिणीतवान् । इति परिभूतं-मन्येन शुक्रेण मन्युना पातालशैलगण्डवृष्टिना स वैदर्भमण्डलो हतः ॥ क ॥

यत्रेति ॥ विपदस्त्रायन्त इति विपत्त्राः सन्त न वृक्षा विपर्णाः । एवं विकसत्क-मलानि । न तु कुत्सितो विजृम्भमाणः प्रसरन्मलः पापं येष्विति । यद्विश्वः—'मलं किट्टे पुरीषे च पापे च कृपणे मलः' । कुवलयं सरोजं कुत्सितवलयं च । वीनां पदैराक्रा-न्तानि कूलानि । कुलानि तु न विपदा विपत्त्या ॥ ख ॥

तत्रेति ॥ तत्र कुण्डिने रिपुपक्षक्षोदप्रवीणानामप्यनुकूलानां राज्ञां मौलिमणिनिकष-निर्मार्जितनखादर्शः । तथा चतुरुदधिद्वीपपुञ्जवालुकावदसंख्यसंख्येष्वनेकरणेषु विख्यात-कीर्त्यैव सुधया शुभ्रितभूमण्डलः । तथा जयश्रीः सारिकोपमा यस्य । एवंविधो भीमो नाम राजास्ति ॥ कुन्तलस्य देशविशेषस्य विलासिन्यः । लावण्यमेव पुण्यप्रतिमा । रविरिवेति । सर्वत्र नेति भिन्नम् । असत्यवक्ता न । अकविषु कुकविषु न प्रतीतः ।

---

(१) समस्तेति—समस्तरिपुपक्षक्षोदे संपूर्णशत्रुविनाशे दक्षाश्चतुरा ये दक्षिणक्षोणीपाला दक्षिणात्यराजानस्तेषां मौलिमालिक्यनिकषेण निर्मलितश्चरणनखदर्पणो यस्य सः ।

(२) चतुरिति—चतुरुदधिपुलिनचक्रवालेषु चतुःसमुद्रतटसमुदायेषु या वालुका रेण-वस्तत्र यान्यसंख्यसंख्यानि=अगण्ययुद्धानि तैर्विख्याता कीर्त्तनीया या कीर्त्तिसुधा तया धव-लितं वसुन्धरावलयं भूमण्डलं येन सः ।

(३) निजेति—निजभुजपञ्जरान्तरे निरुद्धा शारिकायमाणा 'पञ्जरस्थेव शारिकेतिवत्' रणरङ्गाङ्गणेऽर्जितोपार्जितोर्जिता जयश्रीर्येन सः ।

(४) यौवनेति—यौवनमदमत्ताः कान्ताः कमनीया याः कुन्तलदेशस्थविलासिन्यस्तासां नयनान्येव नीलोत्पलदलानि तेषां मालास्ताभिरर्च्यमाना लावण्यमेव पुण्यप्रतिमा यस्य सः ।

धाम्नाम्, आधारो धीरतायाः, पुरं पुरुषकारस्य, आश्रयः श्रेयसां, श्रियां श्रुतीनां च, राजा राणाङ्गणेष्वगणितभीर्भीमो नाम ॥ क ॥

यस्यानवरतमुत्कृष्टालयः क्रीडावनपादपाः पौरलोकश्च, अपरुषो दायादा वाग्विभवश्च, विमत्सरा सभासदो देशश्च, विकसद्रुचयोऽङ्गावयवाः क्रीडापर्वतश्च, अपराजयो मण्डनमणयः सेनासमूहश्च, अगतरुजो वने विनाशमन्वभञ्जितान्तं रिपवः पुष्पप्रकरश्च ॥ ख ॥

तस्य च कंदर्पकमनीयकान्तेर्मत्ताः करिणः सदामानो न मानिनीलोकः, कृतविटपानमनाः क्रीडोद्यानतरवो नावरोधजनः, कटकालंकृतदोषः सीमन्तिन्यो न परिपन्थिकः ॥ ग ॥

यस्य च चरणाम्भोजयुगलं विमलीक्रियते नमज्जनेन न मज्जनेन ॥ घ ॥

(१)यः श्रृङ्गारं जनयति नारीणां नारीणाम् ॥ ङ ॥

यः करोत्याश्रितस्य नवं धनं न वन्धनम् ॥ च ॥

यो गुणेषु रज्यते नरमणीनां न रमणीनाम् ॥ छ ॥

यस्य च नमस्याग्रहारेषु श्रूयते नलोपाख्यानं न लोपाख्यानम् ॥ ज ॥

आगमान्शास्त्राणि न तिरस्करोति । अलसेभ्यो हितः । आलेनानर्थेन सहितो वा न । आमेन रोगेण न युक्तः । पक्षे नासत्ययोर्देववैद्ययोर्जनकः पिता । नाकः स्वर्गः । नागानां सर्पाणां मां लक्ष्मीमधिक्षिपति लुम्पति । नालं काण्डम् । नाम प्रातिपदिकम् ॥क॥

यस्येति ॥ अत्र बहुत्वैकत्वश्लेषः ॥ उत्प्राबल्येन । अर्थात्सौरभजनितेन कृष्टा आनीता अलयो यैः । तथोक्तास्तस्य राज्ञः संबन्धिनः क्रीडार्थं वनवृक्षाः । जनस्तु उत्कृष्ट-आलयो गृहं यस्य । अपगता रुट् येभ्यः । पक्षे परुषशब्दस्य नञ्तत्पुरुषे अरूक्षः स्निग्ध इत्यर्थः । विगतो मत्सरो येभ्यः । एकत्वे तु विमन्ति पक्षियुक्तानि सरांसि यस्मिन् । विकसन्ती रुचिः कान्तिर्येषु । अन्यत्र द्रुर्वृक्षस्तस्य चयः । अपगता राजिः संधिर्येभ्यः । पक्षे न पराजीयत इत्यच् । अगतरुजोऽगतपीडाः शत्रवः । इतः प्राप्तोऽन्तो मरणं यत्र तथाभूतं विशिष्टं नाशं नशनं भयाददर्शनं वनेऽनुभूतवन्तः । इणः क्ते 'इतः' इति रूपम् । पुष्पप्रकरस्तु पर्वतवृक्षजो वने नितान्तं भृशं प्रध्वंसमनुबभूव । अनुभवन्नितान्तमिति श्लेषस्तन्या बहुत्वैकत्वयोः ॥ ख ॥

तस्य चेति ॥ सह दाम्ना अर्गलेन । पक्षे सदा मानो गर्वो यस्य । विटपानां विस्ताराणामानमनं कृतं तद्यैः । अन्यत्र कृतं विटानां पाने चुम्बने मनो येन । कटकैर्वलयैरलंकृतौ दोषौ बाहू यासाम् । परिपन्थी तु स्कन्धावारेऽलमत्यर्थं कृतोपद्रवः ॥ ग ॥

यस्य चेति ॥ नमता जनेन न क्षालनेन । एतेन जनानुरागसंपत्तिः । एवमग्रेऽप्युत्तरपदेषु नञ्संबन्धः ॥ घ ॥

यस्य चेति ॥ नलस्योपाख्यानं भारतप्रतीतम् । नमस्यानां पूज्यानां देवद्विजादीनां ग्रामेषु लोपकथा नैव ॥ ज ॥

(१) य इति—नारीणां कामिनीनां श्रृङ्गारं जनयति । अरीणां श्रृङ्गारं न जनयति ।

यस्य च राज्ये साक्षरस्य पुस्तकस्य बन्धः, सगुणस्य कार्मुकस्याकर्षणम्, सुवंशप्रभवस्य छत्रस्य दण्डः, सुजातेरुद्यानविशेषस्योत्खननम्, कुलीनस्य कन्दस्योन्मूलनारम्भः, सन्मार्गलग्नस्य पुनर्वसुभाजश्चन्द्रस्यैव ग्रहणालोकनमभूत् ॥ क ॥

किं बहुना—

(१)देवो दक्षिणदिङ्मुखस्य तिलकः कर्णाटकान्ताकुच-
क्रीडाशैलमृगः प्रतापकदलीकन्दः स किं वर्ण्यते ।
यस्यारातिकरीन्द्रकुम्भरुधिरक्लिन्नासिदंष्ट्राङ्कुरा
शौर्यश्रीर्भुजदण्डमण्डपतले सिंहीव विश्राम्यति ॥ २९ ॥

(२)तस्य च महामहीपतेरात्मरूपापहसितसमस्तसुरसुन्दरीसौन्दर्यसारसंपत्तिकलङ्ककुलकन्दकन्दलीकंदर्पदर्पगजेन्द्रावष्टम्भस्तम्भयष्टिरखिलजननयकुरङ्गवागुरा रामणीयकपताकायमानोद्भिन्ननवयौवनश्रीः, शृङ्गारस्यागारम्,अवनिर्वनिताविभ्रमाङ्कुराणाम्, आभोगः सौभाग्यभागस्य, रङ्गशाला रागवृत्तनृत्तस्य, सर्वान्तःपुरपुरंध्रिकाप्रधानभूताऽस्ति प्रिया प्रियङ्गुमञ्जरी नाम ॥ ख ॥

---

यस्य चेति ॥ साक्षरं लिखिताक्षरः अधीताक्षरश्च । गुणो ज्या शौर्यादिश्च आकर्षणं कर्णान्तप्रापणम् आक्षेपश्च । वंशो वेणुरन्वयश्च । दण्डो यष्टिर्दमनं च । जातिर्मालती विप्रादिश्च । उत्खननं वृक्षपुष्ट्य अलवालमार्दवायोत्कृष्टं खननं गोर्दनमिति प्रतीतम् । पक्ष उच्छेदनम् । कुलीनः कौ क्षितौ लीनोऽभिजातश्च । सद्विद्यमानं मृगस्येदं मार्गम् । लग्नं सक्तं संयोगो यस्य । पुनर्वसू नक्षत्रम् । ग्रहणं राहुयोगः । पक्षे सन्मार्गः सदाचारः । पुनरिति भिन्नम् । वसु भारधनी । ग्रहणं धारणम् । सच्चित्यतान्वितो मार्गः । अर्थान्नम इति वा । व्याख्यानगतिर्यथा । साक्षरस्य वर्णोपेतस्य पुस्तकस्यैव बन्धनं न जनस्येति ॥ क ॥

तस्येति ॥ भीमस्य प्रिया प्रियङ्गुमञ्जरी नामास्ति ॥ ख ॥

---

(१) देव इति—दक्षिणदिङ्मुखस्य तिलकः कर्णाटकान्तानां कुचावेव क्रीडाशैलः केलिपर्वतस्तत्र मृगः । स्वेच्छया विहरणशीलः । प्रतापकदलीवृक्षस्य कन्दो मूलम् । स देवो भीमनृपः । किं वर्ण्यते । अरातय एव करीन्द्रास्तेषां कुम्भस्थलस्थरुधिरेण रक्तेन क्लिन्नाऽसिरेव=खड्ग एव दंष्ट्राङ्कुरो यस्याः सा । शौर्यश्रीर्वीरत्वलक्ष्मीः । सिंहीव । यस्य नृपस्य । भुजदण्डमण्डपतले दोर्दण्डमण्डपे । विश्राम्यति श्रान्ता सती निषीदति । सर्वातिशायि शौर्यमस्येति सारः ॥ २९ ॥

(२) तस्य प्रियङ्गुमञ्जरी नाम प्रियासीत् । कीदृशी सा । आत्मरूपेण निजसौन्दर्येणापहसिता तिरस्कृता समस्तसुरसुन्दरीणां सर्वदेवरमणीनां सौन्दर्यस्य या सारसम्पत्तिः सैव कलङ्कः=सौन्दर्यसारसम्पत्तितिरस्कारजनितापवादरूपस्तस्य । कुलस्य समूहस्य कन्दो मूलं तस्य कन्दली=अङ्कुरभूता, तथा कन्दर्प एव मदन एव दर्पगजेन्द्रो गन्धहस्ती तस्यावष्टम्भाय बन्धनाय स्तम्भयष्टिभूता प्रियङ्गुमञ्जरी । तथा—निखिलजननयनान्येव कुरङ्गा मृगास्तदर्थं वागुरा बन्धनरज्जुः । रामणीयवैजयन्तीभूतोत्पन्ना तरुणतारुण्यशोभा यस्याः सा ।

यस्याः पद्मानुकारिणी कान्तिर्लोचने च, रम्भाप्रतिस्पर्धिनी रूपसंपत्तिरूरुमण्डले च, सुमनोहारिणी केशकवरी भ्रूभङ्गचक्रे च, भ्रमरकोद्भासिनी ललाटपट्टिका कर्णोत्पले च, प्रवालुकाकारिणी दन्तच्छदच्छाया करचरणयुगले च ॥ क ॥

यस्याः सुवर्णमयं वचनं नूपुरं च पदे पदे मनोहरति ॥ ख ॥

यस्या सुमधुरया वाचा सदृशी शोभते कण्ठे कुसुममालिका । अलिकालयाऽप्यलकवल्लरीमालया सह विराजते तिलकमञ्जरी ॥ ग ॥

किं बहुना—

(१)तस्याः कान्तिनिरुद्धमुग्धहरिणीलीलाचलच्चक्षुष-
स्तारुण्यस्य भरादनालसलसल्लावण्यलक्ष्मीरसः ।
लुभ्यल्लोकविलोचनाञ्जलिपुटैः पेपीयमानोऽपि स-
न्नङ्गेष्वेव न माति सुन्दरतरो रङ्गंस्तरङ्गैरिव ॥ ३० ॥

एवमनयोः सकलसंसारसुखरसास्वादमुदितमनसोर्यान्ति दिवसाः ॥घ॥

कदाचिच्चटु(२)लतरतरुणषट्चरणचक्रचुम्बनाक्रमणभरभज्यमानमञ्ज-

---

यस्या इति ॥ अत्रप्रथमैकत्वद्वित्वयोः स्त्रीक्लीबयोश्च श्लेषः । सर्वत्र नान्तत्वात् । पद्मा श्री पद्ममब्जम् । रम्भा अप्सरोन्तरं कदली च । सुमनसः पुष्पाणि । पक्षे सुशब्देन समासः । भ्रमरकं ललाटस्थमलकं भृङ्गश्च प्रवालो विद्रुमः पल्लवश्च ॥ क ॥

यस्या इति ॥ सुष्ठु वर्णोऽकारादिः सुवर्णं च । तेन निर्वृत्तं पदं प्रकृतिविभक्तिसमुदायः पादन्यासश्च ॥ ख ॥

यस्या इति ॥ अत्र तृतीयाप्रथमयोः श्लेषः । सुष्ठु मधुनो मकरन्दस्य रयः प्रसरो यत्र । अलिकं ललाटमालयः स्थानमस्याः सा तिलकमेव मञ्जरीति रूपकम् । तृतीयापक्षे अलिवत्कालो वर्णो यस्याः । यदा त्वलिवत्कालेति क्रियते तदा ङीप् प्रसज्येत ॥ग॥

तस्या इति ॥ आ समन्तादलस आलसः । पश्चान्नञ्योगः । तस्या लावण्यलक्ष्मीरसः सुन्दरतरश्चारुतरः । तरङ्गै रङ्गन्विलसन्निव । रसो हि भरादजिह्मो लसति तरङ्गैश्च रङ्गति॥३०

कदेति ॥ मधुबिन्दुकर्दमवत्सु । पर्णदन्तुरमध्येषु । सुगन्धिगन्धवाह एव वाजी तस्य

---

(१) तस्या इति--कान्त्या स्वसौन्दर्येण निरुद्धा मुग्धा या हरिणी तस्या लोलां चाञ्चल्यं तद्वत् चलन्ती चक्षुषी यस्याः सा तस्याः । तारुण्यस्य यौवनस्य । भरात्, अनालसं लसन् लावण्यलक्ष्म्या रसः । लुभ्यन्तो दर्शनार्थं स्पृहां कुर्वन्तो ये लोकास्तेषां विलोचनान्येवाञ्जलिपुटानि तैः पेपीयमानोऽपि सन् तथा तरङ्गै रङ्गन्निव । अङ्गेष्वेव न माति न परिमित्यं लभते । तस्या लोकोत्तरां कान्तिं सर्वे विलोकयितुमीहन्त इति भावः ॥ ३० ॥

(२) चटुलेति—चटुलतरा अतिचपलास्तरुणा युवानो ये षट्चरणा भ्रमरास्तेषां चक्राणां निवहानां यश्चुम्बनायाक्रमणभरस्तेन भज्यमानि विदीर्यमाणि यानि मञ्जरीजालानि तेभ्यो गलन्तो निपतन्तोऽमन्दा बहवो ये मकरन्दबिन्दवो मरन्दकणास्तैः कर्दमिलेपु पिच्छिलेषु ।

रीजालगलदमन्दमकरन्दबिन्दुकर्दमिलेषु विविधाङ्गविहंगविहारविदलितदल-दन्तुरान्तरालेषु स्मरबन्धुसुगन्धिगन्धवाहवाजिवाह्यालीषु वरदायाः पुण्य-पुलिनपालिपादपतलेषु रममाणयोः परिणतेन्द्रवारुणारुणकपोलकान्तिरुद्-घुषितदेहपिण्डकण्डूयनाकूततरलितकरकिसलया बालकमेकमुदरदेशलग्नम-परमपि पृष्ठप्रतिष्ठितमुद्वहन्ती कापि कपिकुटुम्बिनी दृष्टिपथमवातरत् ॥ क ॥

तां चावलोक्य चेतस्यास्पदमकरोत्तयोरनपत्ययोर्विषमविषादवेदनाव्य-तिकरः ॥ ख ॥

(१)करपत्रधाराकर्तनदुःसहदुःखदूनमनसोर्वैमनस्यमभूद् भूम्नि राज्ये जने जीविते च । किमनेनाधिपत्येनापत्यशून्येन ॥ ग ॥

(२)सर्वथा सकलसुरासुरकिरीटकोटीकोणशोणमणिमरीचिचञ्चरीक-चुम्बितचरणाम्बुजमम्बिकाप्रियं प्रतिपद्यामहे महेश्वरमित्यन्योन्यमालो-चयांचक्रतुः ॥ घ ॥

अथ विपुलवियद्विलङ्घनश्रमप्रशमनार्थमरुणेन वारुणीं प्रतिपानार्थमिवा-वतार्यमाणेषु रविरथतुरंगमेषु, अपरासक्ते दिवसभर्तरि शोकभरादिव तमः-पटलेनापूर्यमाणामाश्वासयितुमिव पूर्वां दिशमभिधावमानासु पादपच्छा-यासु, हारीतहरितहरिहारिणस्तरणेररण्यान्तराच्च मन्दमपवर्त्तमानेषु गोम-ण्डलेषु, अस्ताचलवनदेवतादत्तरक्तचन्दनार्घसलिलप्लवप्लाव्यमान इव लोहितायति पश्चिमाशामुखे, वारविलासिनीभिः कपोलमण्डलीमण्डनाय क्रियमाणेषु पत्रभङ्गेषु । भयेनेव पादपैः प्रारब्धे पत्रसंकोचकर्मणि, विघटिष्य-माणचक्रवाककामिनीकरुणकूजितव्याजेन दिवसभर्तुरस्ताचलगमनं निवार-यन्तीभिरिव विरहविधुराभिः कमलिनीभिर्विधीयमानेषु प्रार्थनाप्रणामाञ्जलि-

वाह्यालिप्रायेषु । वरदातरुतलेषु क्रीडतोरसुयोः कपिपत्नी इन्द्रवारुणीफलपिङ्गलकान्ति-र्वानरी नयनपथं गता दृष्टेत्यर्थः ॥ क ॥

तामिति ॥ तां च वीक्ष्य विषादव्यथासंपर्को हृदि पदमकरोत् ॥ ख ॥

अथेति ॥ अथानन्तरं श्रमशान्त्यर्थं वारुणीं पश्चिमां प्रति लक्ष्यीकृत्य नीयमानेषु रविरथाश्वेषु । प्रतिपानपक्षे वारुणी सुरा । अपरा दिग् अङ्गनान्तरं च । तमो मोहो ध्वा-न्तं च । तथा गोमण्डलेषु किरणौघेषु च । यथासंख्यं रवेर्वनान्तराच्चमन्दं चलमानेषु । दूरादपि कोद्गमूपात । हारीताः शुकाभाः पक्षिणस्तद्वद्धरिता नीला ये हरयोऽश्वास्तैर्ग-च्छति । तस्मात् । वनाच्च हारीतैः शुकाभपक्षिभिर्हरितैः शाद्वलैर्हरिभिर्वानरैश्च हारिणो मनोज्ञात् । रक्तचन्दनार्घः प्रस्तावाद्रवेरेव । पत्रभङ्गो विलेपनचित्रं पत्रवल्लीसंज्ञं पर्णानां

(१) करपत्रेति—करपत्रधारया क्रकचधारया यत्कर्त्तनं तेन यद् दुःसहदुःखं तद्वद्दूनं मनो ययोः ।

(२) सर्वथेति—सकलसुरासुराणां याः किरीटकोटयस्तासां कोणे प्रान्ते याः शोणमरीचय एव रक्तकिरणा एव चञ्चरीका भ्रमरास्तैश्चुम्बितं चरणाम्बुजं चरणारविन्दं यस्य तम् ।

पुटेष्विव कमलमुकुलेषु, क्रमेण (१)पश्चिमाम्भोधितरङ्गान्तरतस्तरुणतरताम्र-तामरसानुकारिकेसरायमाणरश्मिमञ्जरीजालजटिलमवलोक्य तरणिमण्ड-लमतिसंभ्रमभ्रमद्भ्रमरनिकुरम्ब इव प्रधावमाने दूरं तिमिरपटले, कृष्णागु-रुपङ्कपत्रभङ्गभूष्यमाणेष्विव दिगङ्गनामुखेषु, कोकिलकलापैराक्रम्यमाणेष्वि-व वनान्तरेषु, विकचकुवलयबहलमेचकरुचिनिचयश्यामलीक्रियमाणेष्विव सलिलाशयेषु, तापिच्छगुच्छच्छदच्छायमानास्विव वनवृतिषु, नृत्यत्कलापि-कुलकलापैः कालीक्रियमाणेष्विव शैलशिरःशिलातलेषु, कज्जलालेख्यचित्रचर्च्य-मानास्विव भवनभित्तिषु, विरहिणीनिःश्वासधूमश्यामलीक्रियमाणेष्विव पान्थावसथेषु, कस्तूरिकासलिलसिच्यमानास्विव कामुकविलासवासवे-श्मवाटीषु, मदान्धसिन्धुरनिरुध्यमानेष्विव नृपभवनाङ्गेषु, कलितकालकञ्चु-कायामिव गगनलक्ष्म्याम् , (२)मदनशरनिकरविद्रुतदरिद्रविटविषादान-लस्फुलिङ्गेष्विव रङ्गत्सु ज्योतिरिङ्गणेषु, काञ्चनीषु तिमिरकरिकुम्भभेदभल्ली-ष्विव निशितासु प्रदीप्यमानासु प्रदीपकलिकासु, (३)प्लवमानापाण्डुपु-ण्डरीककल्माषितकालिन्दीपरिस्यन्दसुन्दरेऽमृतमथनक्षणक्षुब्धक्षीरसागरर-सबिन्दुस्तबकितनारायणवक्षःस्थल इव कांचिदपि श्रियं कलयति ताराविरा-जिते वियति, विटङ्कान्तमनुसरन्तीषु वेश्यासु वेश्मपारावतपतत्रिपङ्क्तिषु च, भ्रमरसंगतासु कुलटासु कुमुदिनीषु च, नदीपालिविरहितेषु चत्वरेषु चक्र-वाकमिथुनेषु च, जाते जरद्व्ययकायकालकान्तिकाशिनि निशावतारे, तरुण-तमालकाननमिवाञ्जनगिरिगुहागर्भमिवेन्द्रनीलमणिमहामन्दिरोदरमिव वि-शति सकलजीवलोके स लोकेश्वरः 'प्रिये प्रियङ्गुमञ्जरि, प्रसादय प्रणतप्रिय-कारिणमभङ्गानङ्गदर्पहरं हरम् । अहं च तदाराधनावधनामनुविधास्यामि,

भञ्जनं च । तथा कांचिदपि श्रियं शोभां नारायणवक्षसि तु श्रियमब्धिपुत्रीं प्राप्नुवति नक्षत्रालंकृते नभसि । कालिन्दीपरिस्यन्दो नारायणवक्षश्च वियत उपमानम् । पाण्डुपुण्ड-रीकाणि क्षीररसबिन्दवश्च ताराणाम् । परिस्यन्दः प्रस्रवणम् । प्रवाह इति यावत् । विटो भुजंगः । कान्तः पतिः । पक्षे पक्षिणामावासयष्टेरुन्नतोंऽशो विटङ्कस्तस्यान्तः । भ्रमो भ्रमणं तत्र रसस्तात्पर्यम् । अन्यत्र भ्रमरा भृङ्गाः । नेति भिन्नम् । पक्षे नदीनां पालिः

(१) पश्चिमेति--सूर्यास्तमनवर्णनप्रस्तावः । पश्चिमाम्भोधितरङ्गान्तरतः पश्चिमसमुद्र-वीचिमध्यात्, तरुणतराणि नवीनतराणि ताम्राणि रक्तानि यानि तामरसानि कमलानि, तद-नुकारीणि तत्सदृशानि केसरायमाणानि च रश्मयः किरणा एव मञ्जर्यस्तासां जालानि तैर्ज-टिलम् । अत्रोपमारूपकयोः समप्राधान्यात्समप्रधानसंकरः ।

(२) मदनेति--मदनशरनिकरेण कामबाणनिवहेन विद्रुता विशेषेण द्रवीभूता दरिद्रा निर्धना ये विटास्तेषां विषाददावानलोऽग्निस्तस्य विस्फुलिङ्गेषु = ज्वलत्कणेषु ।

(३) प्लवेति--प्लवमानानि तरन्ति पाण्डुपङ्कजानि धवलकमलानि यत्र, कल्माषि-ता कृष्णवर्णा या कालिन्दी कलिन्दकन्या यमुना तस्याः परिस्यन्देन प्रस्रवेण सुन्दरे ।

इत्यभिधाय यथावासमयासीत्॥ क॥

ततश्च।

(१)अखण्डितप्रभावोऽथ प्रदोषेणान्धकारिणा।
तस्याश्चित्ते स्थितः शम्भुरुदयाद्रौ च चन्द्रमाः॥ ३१॥
(२)बिभ्रते हारिणीं छायां चन्द्राय च शिवाय च।
नभोगरुचये तस्मै नमस्कारं चकार सा॥ ३२॥
नित्यमुद्वहते तुभ्यमन्तः सारङ्गरञ्जितम्॥
(३)भूतिपाण्डुर गोवाह सोम स्वामिन्नमो नमः॥ ३३॥

एवं च नातिचिरात्

सेतुः। इतीति सति स राजा यथावासमयासीत्। किं कृत्वा हे प्रिये, प्रसादय हरमहमपि तदाराधनमनुपृष्ठलग्नः करिष्यामीत्यभिधाय॥ क॥

अखण्डितेति॥ शम्भुशशिनोः श्लेषः। प्रकृष्टदोषेण अन्धकनाम्ना प्रतिपक्षेण। अव्याहतवैभवः। शशी च प्रदोषेण रजनीमुखेन। अन्धत्वविधायिना अन्धकारयुक्तेन वा। न खण्डितः प्रभाया आवो वृद्धिर्यस्य। अत्र अव वृद्ध्यर्थः॥ ३१॥

बिभ्रत इति॥ चन्द्रपक्षे हरिणस्येयं हारिणी छाया। कलङ्क इत्यर्थः। नभोगा विहद्व्यापिनी रुचिर्यस्य। शिवस्तु हारिणीं छायां कान्तिम्। तथा भोगे विलासे रुचिरभिलापो यस्य पश्चान्नञ्योगः॥ ३२॥

नित्यमिति॥ सहोमया वर्तत इति सोमः तस्य संबोधनम्। तद्विशेषणं स्वामिन्निति। तथा भूत्या भस्मना पाण्डुरः शुभ्रः। तथा गौर्वृषो वाहनं यस्य। एवंभूत उमापते। अन्तर्मध्ये। सारमुत्कृष्टम्। गरं कालकूटम्। जितं महिम्ना स्तम्भितशक्ति। नित्यमुद्वहते बिभ्राणाय तुभ्यं नमो नमः। अत्र प्रकर्षे द्विवचनम्। सोमश्चन्द्रोऽपि। तदा भवनं भूतिर्जन्म। जन्मना पाण्डुरः स्वभावश्वेतः। तथा गाः किरणान् वहतीत्यण्। पाण्डुराश्च ता गावश्चेति समासे कृते समासान्तो दुर्वारः। अन्तरिति कर्मपदम्। सारङ्गो मृगस्तेन रञ्जितं लाञ्छितमिति तद्विशेषणम्॥ ३३॥

(१) अखण्डितेति—तस्याश्चित्ते शम्भुः स्थितः। कीदृशः सः अन्धकासुरेण। तथा प्रदोषेण=प्रदोषाख्यव्रतेन। अखण्डितप्रभावोऽव्याहतैश्वर्यः। यद्वा प्रदोषेणान्धकासुरेणेति योज्यम्। चन्द्रमा अपि उदयाचले स्थितः सोऽपि। अन्धं तिमिरं करोतीत्यन्धकारी तेन प्रदोषेण रजनीमुखेन न खण्डितः प्रभाया आवो वृद्धिर्यस्य सः॥ ३१॥

(२) बिभ्रत इति—सा प्रियङ्गुमञ्जरी चन्द्राय चन्द्रचूडाय च प्रणनामेति भावः। चन्द्रो मृगाङ्कत्वात् हरिणाङ्कभृत्, गगनगतकान्तिश्च। चन्द्रचूडश्च, "परशुमृगवराभीतिहस्तं" इत्युक्तत्वात् हारिणीं मृगसम्बन्धिनीं छायां कान्तिं बभार। यद्वा हारिणीं रम्यामिति ग्राह्यम्। तथा नभसि गगने योऽगः कैलासः। अभ्रंलिहत्वात्कैलासस्येयमुक्तिः तत्र रुचिः प्रीतिर्यस्य तस्मै। यद्वा न भोगे विलासे रुचिः स्पृहा यस्य तस्मै॥ ३२॥

(३) भूतीति—चन्द्रपक्षे भूतिवत्पाण्डुरः शुभ्र इत्यर्थोऽपि बोध्यः।

(१)क्षुभ्यत्क्षीरसमुद्रसान्द्रसलिलोल्लोलैरिव प्लावयँ-
ल्लोकं लोचनलोभनः स्मरसुहृज्जातः स चन्द्रोदयः।
यस्मिन्संभृतवैरदारुणरणप्रारम्भिणो भ्राम्यतः
क्रुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते ॥ ३४ ॥

अपिच—

(२)श्च्योतच्चन्दनचारुचन्द्ररुचिभिर्विस्तारिणीभिर्भरा-
ज्जातेयं जगती तथा कथमपि श्वेतायमानद्युतिः।
उन्निद्रो दिनशङ्कया कृतरुतः काको वराकः प्रिया-
मन्विष्यन्पुरतः स्थितामपि यथा चक्रभ्रमं भ्राम्यति ॥ ३५ ॥

अपिच—

(३)मुग्धा दुग्धधिया गवां विदधते कुम्भानधो वल्लवाः
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि।
कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥ ३६ ॥

क्षुभ्यदिति ॥ स धवलिताशेषभुवनतलश्चन्द्रोदय उत्प्रेक्ष्यते। क्षुभ्यत्क्षीरसमुद्रसा-न्द्रसलिलोल्लोलैर्लोकं प्लावयन्निव जातः। क्षीरसमुद्रक्षोभस्य तत्सहचरितत्वात् ॥ ३४ ॥

श्च्योतदिति ॥ सातत्यभ्रमणेन कुलालप्रेरितचक्रवद्भ्रमो यत्रेति भ्रमणक्रियाविशेष-णम्। अथवा चक्रः कोकस्तस्येव भ्रमो यस्य। सोऽपि रात्रौ समीपवर्तिनीमपि प्रियाम-न्विष्यन् भ्रमति ॥ ३५ ॥

मुग्धेति ॥ वल्लवा बालगोपालाः। शबर्योऽप्यारण्यकस्त्रियो विपर्यस्ता भवन्तु। सततपरिचितोत्तंसरचनाः कान्ता उत्तमस्त्रियोऽपि विपर्यस्ता इति' अपिर्विस्मये ॥ ३६ ॥

(१) क्षुभ्यदिति—क्षुभ्यन् क्षोभं प्राप्तो यः क्षीरसागरस्तस्य सान्द्रं यथा तथा सलिल-स्य जलस्योल्लोला ऊर्ध्वगमनानि तैः। लोकं प्लावयन्निवोत्प्रेक्षा। तथा लोचनप्रियः। स्मर-स्य सुहृन्मित्रं स चन्द्रोदयो जातः। यत्र संभृतं संचितं यद्वैरं तेन दारुणो भीमो रणप्रारम्भोऽ स्यास्तीति तस्य। तदर्थं च भ्राम्यतोऽन्येषणार्थं गच्छतः। क्रुद्धस्य कुपितस्योलूककदम्बस्य पुरतोऽग्रे। काकोऽपि। हंसायते हंस इवाचरति। अयं भावः शशाङ्कचन्द्रिकया धवलितःकाकः कृष्णवर्णोऽपि श्वेतवर्णस्य हंसस्य साम्यं भजते। सितवर्णत्वात् ॥ ३४ ॥

(२) श्च्योतदिति—विस्तारिणीभिः।श्च्योतन्ति स्रवन्ति यानि चन्दनानि तद्वच्चारवो या रुचयो ज्योत्स्नास्ताभिः। इयं जगती तथाश्वेतश्वेतायमानद्युतिर्धवलकान्तिः, जाता। यथा दिनशङ्कया दिनभ्रान्त्योन्निद्रो जातजागरः। वराको दीनः काकः। कृतं रुतं शब्दो रोदनं वा येन सः। पुरतः स्थितामपि प्रियामन्विष्यन् गवेषयन्। चक्रभ्रमं चक्रवत्। भ्राम्य-ति। चन्द्रिकाधवलमाकाशं निशाम्य दिनभ्रान्त्योन्निद्रः काकश्चन्द्रिकया सितवर्णां प्रिया-मपश्यन् गवेषयंश्च भ्राम्यति विरौति चेति फलितार्थः ॥ ३५ ॥

(३) मुग्धेति—वल्लवा गोपाः। मुग्धाः सन्तः। दुग्धधिया गवामधो नीचैः कुम्भान् कुर्वते। तथा मुग्धाः कान्ता अपि कुवलयं नीलकमलं कैरवशङ्कया सितोत्पलभ्रान्त्या कर्णे

यत्र च—(१)

मुक्तादाममनोरथेन वनिता गृह्णन्ति वातयने
गोष्ठे गोपवधूर्दधीति मथितुं कुम्भीगतान्वाञ्छति ।
उच्चिन्वन्ति च मालतीषु कुसुमश्रद्धालवो मालिकाः
शुभ्रान्विभ्रमकारिणः शशिकरान्पश्यन्न को मुह्यति ॥ ३७ ॥

अपिच—

(२)किं कर्पूरकणाः स्रवन्ति वियतः किं वा मनोनन्दिनो
मन्दाश्चन्दनबिन्दवः किमु सुधानिष्यन्दधारा इमाः ।
इत्थं भ्रान्तिममी जनस्य जनयन्त्यङ्गे लगन्तः परा-
मिन्दोः कुन्दविकासिकुड्मलदलस्रक्सुन्दरा रश्मयः ॥ ३८ ॥

इति जनितमुदिन्दोः सिन्दुवारस्रगाभं
किरति किरणजालं मण्डले दिङ्मुखेषु ।
हरचरणसरोजद्वन्द्वमाराधयन्ती
शुचिकुशशयनीये साथ निद्रां जगाम ॥ ३९ ॥

इति श्रीत्रिविक्रमभट्टविरचितायां दयमन्तीकथायां
हरचरणसरोजाङ्कायां द्वितीय उच्छ्वासः॥

---

किमिति ॥ कुन्दस्य विकासिनां कुड्मलदलानां स्रक् । तद्वत्सुन्दरा इति शौक्ल्यसौकुमार्यातिशयार्थः । जरठकन्दस्य हि दलाग्राणि परुषाण्यरुणानि च भवन्तीति ॥ ३८ ॥

इतीति ॥ इत्यमुना प्रकारेण । जनितहर्षम् । निर्गुण्डीकुसुममालाप्रतिमं करनिकरं दिङ्मुखेषु किरति वितन्वति सतीन्दोर्मण्डले हरं ध्यायन्ती सा दर्भशय्यायामस्वपत् । समाधिलयं गतेति भावः ॥ ३९ ॥

इति विषमपदप्रकाशमेतं दमयन्त्यास्तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥

इति चण्डपालविरचिते दमयन्तीकथाविवरणे द्वितीय उच्छ्वासः समाप्तः ॥

---

कुर्वते । शबरी भिल्ली । मौक्तिकेच्छया बदरीफलं संगृण्हाति । सान्द्रा चन्द्रमश्चन्द्रिका कस्य चित्ते भ्रान्तिं न विधत्त इति भावः । श्लोकोऽयं साहित्यदर्पणे भ्रान्तिमदलङ्कारोदाहरणत्वेनोद्धृतः॥ ३६ ॥

( १ ) मुक्तेति—वनिताः कान्ताः । वातायने गवाक्षे । मुक्तादाममनोरथेन मौक्तिकहारस्पृहया शशिकरान् गृण्हन्ति । गोपवधूर्गोपी गोष्ठे कुम्भीगतान् तान् 'दधीतिः भ्रान्त्या मथितुं वाञ्छति। तथा मालतीषु जातिद्रुषु । कुसुमेषु श्रद्धालवो मालिन्यस्तान् उच्चिन्वन्ति । इत्थं भ्रान्तिजनकान् शुभ्रान् शशिकरान् विलोकयन् को न मुह्यति, मुह्यत्येवेत्यर्थः॥ ३७ ॥

( २ ) किमिति—कुन्दस्य विकासिनो ये कुड्मलास्तेषां दलानां स्रङ्माला तद्वत्सुन्दराः । इन्दोः करा, जनस्याङ्गे लगन्तः परामित्थं भ्रान्तिं समुत्पादयन्ति । यथा—वियत इमे कर्पूरकणाः क्षरन्ति किम् । वा मनोनन्दिनो मन्दाश्चन्दनकणाः श्च्योतन्ति किम् । अथ वा सुधाया अमृतस्य निष्यन्देन स्रवणेन या धाराः प्रवाहा इमाः किम् ॥ ३८ ॥

## तृतीय उच्छ्वासः ।

अथ क्रमेण रजतकुम्भमम्भोभरणार्थमिवेन्दुमण्डलमादाय पश्चिमाम्भोनिधिपुलिनमनुसरन्त्यां तरुण(१)कपोतकंधरारोमराजिराजिन्यां रजन्याम्, अखिलकमलखण्डकमलिनीनां विनिद्राचमाणकमलकुड्मलविलोचनेषु कज्जलरेखास्विवोल्लसन्तीषु भ्रमरराजिषु, राजीवराजिपुञ्जनिकुञ्जे शिञ्जानमञ्जीरमञ्जुलमुन्नदत्सु शरद्वलाहकवलक्षपक्षविक्षेपपवनतरलिततरुणतामरसेषु दीर्घिकावतंसेषु, हंसेषु क्रेङ्कारयति च चक्रवाकमिथुनमेलकमङ्गलमृदङ्ग इव रौप्यघर्घररवसरसं सारसकुले, अवश्यायजलशिशिरशीकरिणि मन्दान्दोलितविनिद्रद्रुममञ्जरीरजःकणकषायिते (२)तमःसर्पसंदष्टोज्जीवितजगन्निश्वासायमाने प्रस्खलति प्रभातसुरतश्रमखिन्नसुन्दरीकुचमण्डले मरुति, मनोहारिहारीतहरितहये हरिततिमिरपटलपटीं गगनलक्ष्म्याः करपरामृष्टपयोधरे रागवति सवितरि,(३)मृगमदमिलितबहलकुङ्कुममण्डनमञ्जरीभिरिव पिञ्जरिते पुरंदरदिङ्मुखे सुखप्रसुप्ता सा स्वप्नमद्राक्षीत् ॥ क ॥

किल सकलसुरासुरशिरःशेखरीकृतचरणकमलः, कमलाधिवासेन ब्रह्मणा नारायणेन च रचितरुचिरस्तुतिः, कृशानुरूपेण ललाटलोचनेन चन्द्रमसा च भासमानः, विकचं कर्णे कुवलयं करे कपालं च कलयन्, अहिंसाटोपं मनसा शिरसा च बिभ्राणः, प्रोज्ज्वलन्नयनार्चिश्श्रिताभस्म च समुद्वहन्, अधिकङ्कालेन स्कन्धेन कंधरार्धेन च विराजमानः, सालसदृशं भुजवनं भवानीं च दधानः, सर्वदानववारं त्रिशूलं मन्दाकिनीं च धारयन्, देवो

---

अथेति ॥ अनन्तरं किरणसंस्पृष्टमेघे । रागवत्यारक्ते रवौ दृष्टा सती स्वप्नं ददर्श । अन्योऽपि रागवानासक्तः किल पटीमुत्सार्य कराभ्यां पाणिभ्यां स्तनौ स्पृशति । शरद्वलाहकवलक्षाः शरादभ्रधवलाः । क्रेङ्कारो वाद्यविशेषः ॥ क ॥

स्वप्नमाह—किलेति । वार्तोक्तौ । हरः शक्तिमण्डलादुत्तीर्य पुत्रीत्यभिधाय ईदृशीं पारिजातमञ्जरीमदात् । कीदृशो हरः । ब्रह्मणा विष्णुना च कृतस्तुतिः । द्वयेनापि कीदृशेन । कमलेऽधिवासोऽस्य पद्मासनत्वात् । विष्णुस्तु कमलायाः श्रिया अधिवासस्तेन । तथा वन्हिस्वरूपेण नेत्रेण चन्द्रमसा च कृशेन क्षामेण अनुगतरूपेणाविनाभावसंबद्धमूर्तिना लसन् । तथा विकचं सविकासम् । कपालं तु विगताः कचाः केशा अस्मादिति विकचम् ।

---

(१) तरुणेति—तरुणो युवा यः कपोतस्तस्य कन्धरायां ग्रीवायां या रोमराजिर्लोमश्रेणिस्तद्वद्राजिन्याम् । प्रभातप्रायामित्यर्थः ।

(२) तम इति—तम एव सर्पस्तेन संदष्टं पुनरुज्जीवितं यज्जगत् तस्य निश्वास इवाचरति ।

(३) मृगेति—मृगमदेन कस्तूर्या मिलितं संमिश्रितं यत्कुङ्कुममेव मण्डनं भूषणं तस्य मञ्जरीभिरिव ।

दर्पितदनुजेन्द्रनिद्राहरो हरश्चन्द्रमण्डलादवतीर्य 'पुत्रि प्रियंगुमञ्जरि, मञ्जरी-मिमां गृहाण। मा भैषीः। प्रत्युषसि मन्नियोगाद्दमनकनामा महामुनिरेष्यति स तेऽनुग्रहं करिष्यति' इत्यभिधाय स्वश्रवणशिखरान्तराद(१)मन्दमकरन्द-स्यन्दसुन्दरामोदमाद्यन्मधुकररवरमणीयां पारिजातमञ्जरीमदात् ॥ क ॥

सापि 'प्रसादोऽयम्' इत्यभिधाय स्वप्न एव प्रणामपर्यस्तमस्तका स्तुतिमकरोत् ॥ ख ॥

(२)तुभ्यं नमो नमल्लोकशोकसंतापहारिणे ।
व्यर्थीकृतान्धकारातिदम्भारम्भाय शम्भवे ॥ १ ॥
विभो विभूतिसंपन्न पन्नगेन्द्रविभूषण ।
नमो नमोघसंकल्प तुभ्यमभ्यन्तरात्मने ॥ २ ॥

(३)अत्रान्तरे तरणिकोमलकान्तिभिन्नभास्वत्सरोजदलदीर्घविलोचनायाः ।
तस्याः प्रबोधमकरोद्रजनीविरामयामावसानमृदुमङ्गलतूर्यनादः ॥ ३ ॥

क्रमेण च प्राच्यां सिच्यमानायामिव बहलकुसुम्भाम्भःकुम्भैः ककुभि, प्रभवति तारकोच्छेदनाय सुकुमारे रश्मिजाले, पूर्वाचलस्थलीमधिरोहति

---

तथा अहिंसाया आटोपमावेशम् । अहिं च साटोपं सस्पन्दम् । प्रोज्ज्वलद्दीप्यमानम् । भस्म तु प्रकर्षेणोज्ज्वलम् । अधिगतं कङ्कालं शरीरास्थि अर्थात्खट्वाङ्गं येन । कंधरार्धेन तु कालेन सह कालकूटत्वात् । अधिकमिति क्रियाविशेषणम् । सालद्रुमतुल्यं प्रांशुत्वात् । पक्षे सालसे लीलामन्थरे दृशौ यस्याः । सर्वान्दानवान्वारयति । गङ्गा तु सर्वदा नित्यं नवा अविच्छाया वाः पाथो यस्याः । अथवा सर्वं ददातीति सर्वदाः। आनूयन्त इत्यानवाः तथोक्ता वारोऽस्याः । एतेन कामुकत्वेन नर्मवचनादात्मजलानां स्तुत्यत्वोक्तिः ॥ क ॥

तुभ्यमिति ॥ अन्धकारातीति कर्मधारयः ॥ १ ॥

विभो इति ॥ विभुः सर्वव्यापी । विशेषेण भूत्या भस्मना संपन्नः समृद्धः । यद्वा विभूत्या चतुर्दशभुवनाधिपत्यलक्षणया । तथा वासुकिभूषणः । मोघो निष्फलः संकल्पो ध्यानं यस्य । पाश्चात्त्यन्योगः । एतानि शिवसंबोधनानि ॥ २ ॥

क्रमेणेति ॥ यथा माहेन्द्र इन्द्रः, तथा सुकुमारः कुमारः । स हि तारकासुरोच्छेदनाय प्राभवत् । सुकुमारं मृदु रश्मिजालं तु तारकाणां नक्षत्राणामुच्छित्तये । वैणिकवैणवि-

---

( १ ) अमन्देति—अमन्देन बहुना मकरन्दप्रस्रवणेन सुन्दरो यो ह्यामोदो गन्धस्तेन माद्यन्तो ये मधुकरा भ्रमरास्तेषां रवेण शब्देन रमणीयां मनोहराम् ।

( २ ) तुभ्यमिति—नमन्तो ये लोकास्तेषां शोकजनितसंतापं हरतीति तस्मै । तथा व्यर्थीकृतो विफलीकृतोऽन्धकारातेरन्धकासुरस्य दम्भस्य शाठ्यस्यारम्भो येन तस्मै नमः ॥ १ ॥

( ३ )अत्रेति—तरणिकोमलकान्त्या प्रातःकालीनसूर्यकान्त्या भिन्नं विकसितं भास्वद् दीप्यमानं यत्सरोजं नीरजं तस्य दलवद् दीर्घे विलोचने यस्याः सा । रजन्या विरामोऽवसानं यत्रैतादृशो यो यामस्तस्य पर्यवसाने मृदुमङ्गलतूर्यनादो माङ्गलिकवाद्यघोषः प्रबोधं चक्रे।३।

जगत्प्रबोधप्रारम्भमङ्गलकलशेंऽशुमालिमण्डले, ताण्डवाडम्बरिणि पुण्डरीक-खण्डे, हिण्डमानासु दीर्घिकामण्डनमुण्डमालासु कारण्डवमण्डलीषु, वि-श्राम्यति श्रवणपुटेषु हृदयानन्दिनि वन्दिवृन्दारकवृन्दवन्दनारम्भरवे, रण-यत्सु वीणावेणुकोणान्वैणिकवैणविकेषु, कण्ठकुहरप्रेङ्खोलनालंकारकुशले तारातरं गायति ग्रामरागं गायनजने, जाते जरज्जपाप्रसूनभिन्नस्फुटस्फाटि-ककान्तिसमप्रभे प्रभातसमये, सा समुत्थाय भूत्वा शुचिर्विकचनवनलिनगर्भ-मर्घाञ्जलिमवकीर्य भगवतः सवितुःस्तुतिमकरोत् ॥क॥

(१)वासरश्रीमहावल्लीपल्लवाकारधारिणः।
जयन्ति प्रथमारम्भसंभवा भास्वदंशवः ॥ ४ ॥

(२)जयत्यम्भोजिनीखण्डखण्डितालस्यसंचयम्।
कौङ्कुमं पूर्वदिग्गण्डमण्डनं मण्डलं रवेः ॥ ५ ॥

राजापि प्रथमप्रबुद्धप्रगीतगीतध्वनिनिरस्तनिद्रः, सान्द्रविद्रुमप्रभाभासि संध्यावसरे, विधाय सान्ध्यं विधिम्, अधिकृतेन धर्मकर्मणि तत्कालपुरःसरे-ण पुरोधसा सह तामेवान्वेष्टुमन्तःपुरमाजगाम ॥ ख ॥

दृष्ट्वा च विस्मयमानः स्फुरदरविन्दसुन्दराननाम् 'अनुगृहीतेयमिन्दु-मौलिना' इत्यवधारयन्, अतिहर्षोत्कर्षमन्थरगिरा तां बभाषे ॥ ग ॥

(३)मुग्धस्निग्धनिरुद्धशब्दहसितस्फारीभवल्लोचनं
तिर्यक्कान्तिकपोलपालिपुलकस्पष्टीकृतान्तर्धृति।
एतत्ते करभोरु पङ्कजसदृग्दृष्ट्वा मुखं मे बला-
दुच्चैः किंचिदचिन्त्यचर्चितचमत्कारं मनो हृष्यति ॥ ६ ॥

---

क्वौ वीणावेणुवादकौ। अलंकाराश्च मुद्रितविवृतानुनासिकादयः। तारोऽत्युच्चध्वनिः। ग्राम-रागः पञ्चमः। यद्वा षड्जमध्यमगान्धारांस्त्रींस्त्रीन्ग्रामान्रागं च भरतोक्तं षड्विधं गायके गायति सति ॥ क ॥

राजापीति ॥ प्रथमप्रबुद्धा ये प्रकृष्टगीतास्तद्गीतध्वनिना ध्वस्तनिद्रः ॥ ख ॥

मुग्धस्निग्धेति ॥ मणिबन्धकनिष्ठिकयोर्मध्यं करभस्तद्वदूरू यस्याः। तत ऊङ् तस्याः संबोधनम्। ईदृशं ते मुखं दृष्ट्वा सहसाचिन्त्याधिगतचमत्कारं मे मनो हृष्यति ॥ ६ ॥

---

(१) वासरेति—वासरश्रीरेव महावल्ली तस्याः पल्लवानामाकृतिं धरन्तीति। प्रथमारम्भसंभवा भास्वतः सूर्यस्यांशवः किरणाः। जयन्ति ॥ ४ ॥

(२) जयतीति—रवेर्मण्डलं जयति। अम्भोजिनीखण्डस्य खण्डितो विनाशित आलस्य-संचयो येन तत्। तथा कुङ्कुमेन रक्तं पूर्वदिशो गण्डस्थमण्डनं सौरमण्डलम् ॥ ५ ॥

(३) मुग्धेति—मुग्धाः स्निग्धास्तथा निरुद्धा लज्जयेति भावः, शब्दा यत्र तद् हसितं तेन स्फारीभवन्ती विकसिते नेत्रे यत्र तत्। तथा तिर्यक्कान्तियुता या कपोलपालि-स्तत्र पुलकैः स्पष्टीकृता व्यक्तीकृताऽन्तर्धृतिर्येन। ते कमलवदाननं विलोक्य समधिगत-चमत्कारं मे मनो हृष्यति ॥ ६ ॥

तत्कथय शपासि ममाज्ञया हर्षवृत्तान्तम्' इत्यभिहिता सा स्मितसुधानुविद्धमुग्धमुखवीणाक्वणकोमलालापेन सर्वमादितः स्वप्नदर्शनमाचचक्षे ॥क॥

क्षितिपतिस्तु तदाकर्ण्य 'प्रिये, मयापि स भगवान्। आत्मानुहारिणा विनायकेन स्वामिना च शक्तिमता पुत्रेणानुगम्यमानो, दग्धकामः पूरितकामश्च, एककपर्दक ईश्वरश्च, ससोमश्चासोमः, सविभवश्चाविभूतिश्च, पिनाकी चापिनाकी, दृष्टः स्वप्नान्तरे तरुणार्कमण्डलमध्यवर्ती प्रणतप्रियंकरः शंकरः। तदेष ब्राह्मणः करोतु संवादिनोरनयोः स्वप्नयोरर्थपरामर्शम्' इत्यभिधाय तां, तमवस्थितं पुरः पुरोहितमभाषयत् ॥ ख ॥

सोऽपि 'देव, दिष्ट्या वर्धसे। अनल्पपुण्यप्राप्यमेतत्तरुणेन्दुमौलेरालोकनम्, अवश्यमवाप्स्यति देवी सकलराजचक्रचूडामणिकल्पमशेष(१)भुवनभ्रान्तशुभ्रयशःपिण्डडिण्डिममपत्यम्' इत्यनेकधा तयोराशंसयांचकार ॥ग॥

एवंविधे च व्यतिकरे कोऽपि कान्तकार्तस्वरस्वरूपमुत्फुल्लपाण्डुपुष्पमालया मेरुशिखरमिव प्रदक्षिणाक्षीणलग्नया नक्षत्रराज्या जनितशोभं जटाभारमुद्वहन्, अतिबहलमलयजरसरचितविचित्रपुण्ड्रकमण्डनासमरशैलशिलामिव रङ्गत्त्रिस्रोतसं ललाटपट्टिकां कलयन्, प्लवमान इवोज्जृम्भपङ्कजकिंजल्ककपिलकायकान्तिकल्लोलेषु, करुणारसपूर्णवक्षःस्थलदीर्घिकायामन्तस्तरन्तीं बालकलहंसपक्षिपङ्क्तिमिव स्फारस्फाटिकाक्षमालिकां बिभ्राणः, कुशाकोपीनवासाः, करकलितकुशकाण्डकमण्डलुमण्डलैः, तरुभिरिव विविध-

क्षितिपतिस्त्विति ॥ अग्रे स्थितं पुरोहितमित्यमुना प्रकारेण राज्ञीकथनलक्षणेनावोचत्। यत् प्रिये, स भगवाञ्छंकरो मयापि स्वप्नान्तरे दृष्टः। कीदृशः। सामर्थ्यवता हेरम्बेण, शक्तिशस्त्रभृता षण्मुखेन चात्मप्रतिमेनानुगम्यमानः। शिवोऽपि विगतनायकः सकललोकस्वामी शक्तिमांश्च शिवशक्त्योरविनाभावसंबन्धादित्यात्मसादृश्यम्। कामः स्मर इच्छा च। कपर्दो जटाबन्धः। विरोधपक्षे वराटः ईश्वरो धनवान्। ससोमः सेन्दुः। सह उमया वर्तत इति सोमः। ततो नञ्योगः। विगतो भवो येभ्यस्ते विभवा मुक्तात्मानः। तैः सह। भगवत्सायुज्यं हि मुक्तिरिति वृद्धाः। तथा विशिष्टा भूतिर्यस्य। भस्म च। पिनाकं धनुरस्यास्ति। अपीति भिन्नम्। नाकी स्वर्गी। यद्वा 'चप सान्त्वने'। चपयन्ति सान्त्वयन्त्यनुनयन्त्यवश्यं चापिनः प्रसादका नाकिनो यस्य ॥ क ॥

एवंविध इति ॥ कोऽपि मुनिः सूर्यमण्डलादवातरत्। कनकपिङ्गजटाभारस्य मेरुशिखरं पुष्पमालायाश्च नक्षत्रराजिरुपमानम्। लग्नं संबद्धं ज्योतिषप्रणीतं च। ललाटस्य शिला तिलकानां च गङ्गोपमानम्। परिवृत्तो मुनिभिः। कीदृशैर्विविधशाखैः। शाखा कठबह्वृचादिलता च जटा केशरचना मूलं च। वल्कलं वृक्षत्वक्। तदेव तरूणां सहजं मुनीनां चाहार्यम्। मेखला मौञ्जी नगान्तदेशश्च। रुद्राक्षजपमालान्वितैः। पक्षे रुद्राक्षा अक्षाश्च तरु-

(१) अशेषेति—अशेषभुवनेषु भ्रान्तः शुभ्रयशःपिण्डमेव डिण्डिमो यस्य तत्।

शाखैर्विधृतजटावल्कलैश्च, पर्वतैरिव समेखलैः सरुद्राक्षाक्षमालैश्च, नक्षत्रैरिव समृगकृत्तिकाश्लेषैः सज्येष्ठाषाढैश्च, ससंमदैरपि नमदाकारमाकलयद्भिः, अक्रीडैरपि चक्रीडापरैः, रोमशैरपि विप्रबालकैः मुनिभिः परिवृतः, सेवितपुराणपुरुषोऽप्यजनार्दनप्रियः, प्रसन्नशंकरोऽप्यनाश्रितभवः, प्रबुद्धोऽप्यवन्दीकृतजनः, श्रमणोऽप्यजिनपरिग्रहः, ग्रहगण इव नवधात्मको लोकानाम्, धनुर्धर इव नालीकसंधः, हंस इव नदाम्भस्थानकप्रियः, पन्नग इव नाकुलीनः, सरस्वतीसंनिवासस्य मुखमन्दिरस्य वन्दनमालयेव प्रथमोद्भेदभासिन्या दंष्ट्रिकारोमराजिरेखया श्यामलितोत्तरोष्ठपृष्ठः, कलिकालकलङ्कशङ्काशरणागतैस्त्रिभिः पुण्ययुगैरिव सुसूत्रीभूय देहलग्नैः, त्रिपुष्करस्नानावसरविलग्नसरसबिसकाण्डकुण्डलैरिव भक्त्याराधितत्रिपुरुषरचितरक्षासूक्ष्मरेखानुकारिभिः सितयज्ञोपवीततन्तुभिर्भूषितदेहः, शर्मी विद्रुमाभाधरश्च, प्रजापो विप्रजापश्च, सुतपाः कुतपश्लाघी च, विकलत्रः, सकलत्रश्च, यमान्तानुसारी सकुशलश्च, विकचनवनलिनशङ्कया मिलन्मुक्तमुग्धमधुपमण्डलेनेव रुद्राक्षवलयेन विराजितवामपाणिपल्लवः, न स्मृतः स्मरापस्मारेण, नाङ्गीकृतः कृतघ्नतया, नालोकितः कितववृत्तेन, नाकलितः कलिना, न निरुद्धो विरुद्धक्रियाभिः, अतितेजस्तया द्वितीय इव परब्रह्मणः, तृतीय इव सूर्याचन्द्रमसोः, चतुर्थ इव गार्हपत्याहवनीयदक्षिणाग्नीनाम्, पञ्चम इव दिक्पतीनाम्, षष्ठ इव महाभूताधिदेवतानाम्, सप्तम इव मूर्तर्तूनाम्, अष्टम इव सप्तर्षीणाम्, नवम इव वसूनाम्, दशम इव ग्रहाणाम् अन(१)वरतहृदयक-

विशेषाः । मृगकृत्तिकाया मृगत्वचः श्लेषैः सहितैः ज्येष्ठापाढेन प्रशस्यव्रतदण्डेन सहितैः । पक्षे मृगो मृगशिरः कृत्तिका अश्लेषा ज्येष्ठा आषाढाश्च नक्षत्राणि । समंमदैस्तृष्णाक्षयात्सानन्दैः । तथा मदस्य गर्वस्याकारं नाकलयद्भिः । अपिर्विरोधे । स तु तुल्यार्थव्याख्यया । क्रीडा विषयासक्तिः । तथा चक्रिणो विष्णोरीडा स्तुतिस्तत्परैः । विरोधे तु चः पृथक् । भूमरोमयुक्तैः । विप्राणां बालकैर्डिम्भैः । विरोधे विशेषेण प्रगतकेशैः । पुराणपुरुषा वृद्धाः । जनानामर्दनं पीडा । प्रपन्नानामाश्रितानां शंकरः सुखंकरः । भवः संसारः । प्रबुद्धो विद्वान् । बन्दीकृतो हठेन गृहीतः । श्रमणस्तपस्वी । अजिनं मृगादित्वक् । विरोधे तु पुराणपुरुषो जनार्दनश्च विष्णुः । शंकरो भवश्च शिवः । प्रबुद्धः सुगतः । बन्दा बन्दका बौद्धव्रतस्थाः । श्रमणः क्षपणः । जिनोऽर्हन् । परिग्रहः सर्वत्र नेति भिन्नम् । वधो हिंसा । अलीकसंधो मिथ्याप्रतिज्ञः । दम्भवेदिनो दाम्भा मायिकाः । अकुलीनो नाभिजातः । ग्रहगणस्तु नवसंख्यस्वरूपः । धन्वी च नालीके शरे संधानं यस्य । हंसस्तु नदस्याम्भ एव स्थानकं तत्प्रियः । नाकुर्वल्मीकस्तत्र लीनः । भक्त्याराधितत्रिपुरुषैरिति । त्रयः पुरुषा

(१) अनवरतेति–अनवरतं निरन्तरं हृदयकमलस्य कर्णिका पद्मबीजकोशस्तस्या मध्ये स्फुरत्प्रकाशमानं ज्योतीरूपं तेजोमयं परमब्रह्म तस्य कान्तिकलापेनेव कान्तिनिवहेनेव ।

मलकर्णिकान्तःस्फुरज्ज्योतीरूपपरमब्रह्मकान्तिकलापेनेव बहिर्निर्गच्छता च्छभस्मानुलेपेन कनकगिरिरिव विरलचन्द्रातपेनापाण्डुरितदेहः, दीर्घसरसबिसकाण्डपाण्डुना प्रचण्डपवनेनोर्ध्वमुल्लासितेन जटाजूटबन्धनपटप्रान्तपल्लवेन शिरःपतद्गगनगलद्गङ्गाम्बुधाराहारिणो हरस्य स्वामिभक्त्या कृतानुकरणव्रतचर्यामिव कलयन्, कोमले महसि तरुणे वयसि वृद्धे तपसि पृथुनि यशसि गुरुणि श्रेयसि वर्तमानः, सदः सदाचाराणाम्, आश्रयः श्रुतीनाम्, मही महिम्नः, प्रपा कृपारसस्य, क्षेत्रं क्षमाङ्कुराणाम्, पात्रं मैत्रीसुधायाः, प्रासादः प्रसादस्य, सिन्धुः साधुतायाः, तरुणार्कमण्डलमध्यान्मुनिरवातरत् ॥क॥

राजा तु दूरत एव तमायान्तमवलोक्य विस्मयविस्फारितविलोचनो (१)हर्षवर्षविनिःसरद्बहलपुलकोत्तम्भितोत्तरीयवासाः ससंभ्रममासनादुत्थाय कियन्त्यपि पदान्यभिमुखं समेत्य क्षितितलमिलन्मौलिमण्डलः प्रणाममकरोत् ॥ ख ॥

मुनिरपि सदारुणान्तयापि सौम्यया दृशा विद्रुमप्रभाभिन्नया सुधासिन्धुतरङ्गमालयेव प्लावयन्नाशिषमवादीत् ॥ ग ॥

(२)'सिन्दूरस्पृहया स्पृशन्ति करिणां कुम्भस्थमाधोरणा
भिल्लो पल्लवशङ्कया विचिनुते सान्द्रद्रुमद्रोणिषु ।

यत्रेति समुदायिन एव समुदाय इति दर्शने बहुवचनम् । व्यतिरिक्तसमुदायपक्षस्तु नेहाश्रित इति सेवितहरिहरब्रह्मभी रक्षार्थं रचितरेखातुल्यैर्यज्ञोपवीततन्तुभिर्भूषितदेहः । शमोऽस्यास्तीति शमी शान्तः । तथा विद्रुमं प्रवालं तुत्तुल्योष्ठः । प्रजां पाति क्रतुकृद्यो हि प्रजात्राणम् । विप्राञ्जापयति जपं प्रापयति । भट्टदर्शनान्वयत्वात् । सुष्ठु तपो व्रतमस्य । तथा कौ भुवि तपसा लोकोत्तरेण धर्मेण श्लाघनशीलः । 'तपःऽश्चान्द्रायणादौ स्याद्धर्मे लोकोत्तरेऽपि च' इति विश्वः । यदा कुतपो दर्भस्तदा कुतपश्लाघीत्यत्र विसर्गाभावेऽपि ( शस्य द्वित्वेन ) श्रुत्या विरोधप्रतीतिः । विगतकलत्रः । सकलं त्रायते । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमास्तेषामन्तः पारम् । कुशान्दर्भाल्लान्ति गृण्हन्ति ये ते कुशला दक्षास्तैः सह । चः सर्वत्र विरोधे । तद्यथा शमीनामा तरुः । तथा द्रुमाभां धरति । विर्नञर्थे । वि प्रजापवान् । कुतपः कुत्सितं तपः । सह कलत्रेण । यमस्यान्तकस्य समीपमनुसरत्यवश्यम् । सह कुशलेन क्षेमेण ॥ क ॥

मुनिरिति ॥ राजप्रणामानन्तरम् । सर्वदा रक्तप्रान्तया दृशा प्रवालच्छुरितक्षीरोदवीच्येव प्लावयन्मुनिरप्याशिषमुवाच । रक्तान्तनेत्रत्वं शुभलक्षणम् । विरोधे स इति मुनिविशेषणम् । दारुणं रौद्रम् ॥ ग ॥

सिन्दूरेति ॥ भ्रमकरं भ्रान्तिजनकम् । तच्च सिन्दूरस्पृहयेत्यादिनाभिहितम् ॥७॥

(१)-हर्षेति हर्षवशेन विनिसरन्तो निर्यन्तो बहलाः बहवः पुलकास्तैरुत्तम्भितं पतितमुत्तरीयवासो दुकूलं यस्य सः । उद्धतं स्तम्भितं प्रतिबन्धो यस्मादित्युत्तम्भितम् ।

(२) सिन्दूरेति-प्रथमोद्भवं सौरं सूरस्येदं तत्तेजश्चिरं वः पातु । कीदृशं तत् । भ्रान्तिजन-

कान्ताः कुङ्कुमकाङ्क्षया करतले मृद्नन्ति लग्नं च य-
च्चत्तेजः प्रथमाद्भवं भ्रमकरं सौरं चिरं पातु वः' ॥ ७ ॥

दत्ताशीश्च (१)प्रणामपर्यस्तकर्णपूरपल्लवपरामृष्टपादपांसुरवनिपालेन स्वयमादरेणोपनीतमुच्चकाञ्चनासनमध्यतिष्ठत् ॥ क ॥

(२)अथ नरपतिदत्ते प्राप्तसौन्दर्यनिर्यन्मणिमहसि स तस्मिन्नासने संनिविष्टः ।
रुचिररुचि सुमेरोः संगतः शृङ्गभागे कमल इव कान्तिं कांचिदुच्चैर्बभार॥८॥

दत्त्वार्घमर्हणीयाय तस्मै सोऽपि महीपतिः ।
स्वहस्तधौतयोर्भक्त्या ववन्दे पादयोर्जलम् ॥ ९ ॥
कृत्वातिथ्यक्रियां सम्यग्विनयं च प्रकाशयन् ।
तस्याग्रे भूतलं भेजे नोपविष्टः स विष्टरे ॥ १० ॥
(३)ललाटपट्टविन्यस्तपाणिसंपुटकुड्मलः ।
नोचैरुवाच वाचं च चञ्चद्दशनदीधितिः ॥ ११ ॥
(४)'अद्य मे सुबहोः कालाच्छ्लाघनीयमभूदिदम् ।
त्वत्पादपद्मसंस्पर्शसंपन्नानुग्रहं गृहम् ॥ १२ ॥

यतः समस्तमुनिमनुजवृन्दारकवृन्दवन्दनीयपादारविन्दाः, परमानन्द-परिस्पन्दभाजः पांसूनिव पार्थिवान्, तृणमिव स्त्रैणम्, निधनमिव धनम्, रोगानिव भोगान्, राजयक्ष्माणमिव लक्ष्मीम्, आकलयन्तः सकलसंसार-सुखविमुखाः कस्य भवादृशा भवनमवतरन्ति ॥ ख ॥

---

अथेति ॥ प्राप्तसौन्दर्यं रम्यं निर्यन्निःसरन्मणीनां महस्तेजो यस्मात् तत्रासने आसीनः । मुनिः कांचिदपूर्वां शोभां बभार ॥ रुचिरकान्तौ सुमेरोः शृङ्गभागे स्थितो ब्रह्मेव ॥ ८ ॥

---

कम् । तां भ्रान्तिमेव दर्शयति—आधोरणा हस्तिपकाः करिणां कुम्भस्थं गण्डस्थं तेजः सिन्दूरा-काङ्क्षया स्पृशन्ति । तथा भिल्ली किरातपत्नी सान्द्रा या द्रुमाणां द्रोणिस्तत्र लग्नं तेजः पल्ल-वशङ्कया विचिनुते संगृण्हाति । कान्ताः कामिन्यः करतले लग्नं तेजः कुङ्कुमस्पृहया मृद्नन्ति चूर्णयन्ति ॥ ७ ॥

( १ ) प्रणामेति—प्रणामेन नत्या पर्यस्तः पतितो यः कर्णपूरपल्लवः :कर्णाभरणपल्लवस्तेन परामृष्टः स्पृष्टः पादपांसुः पादरेणुर्यस्य सः ।

( २ ) अथेति—अथ नरपतिदत्ते राज्ञा दत्ते । प्राप्तं सौन्दर्यं येन रम्यं तथा निर्यन् निर्ग-च्छन् मणीनां महस्तेजो यस्यात् तथोक्ते । आसन आसीनः । रुचिरा रम्या रुक्कान्तिर्यस्य स तत्र । सुमेरोः शृङ्गभागे शिखरे संनिविष्टो ब्रह्मेव । स मुनिर्दमनकाख्यः । काञ्चन कान्ति शोभामुच्चैर्दधौ ॥ ८ ॥

( ३ ) ललाटेति—ललाट एव पट्टो बृहदाकारत्वात्, तत्र विन्यस्तः स्थापितः पाणि-संपुट एव हस्ताञ्जलिरेव कुड्मलो मुकुलो येन । तथा चञ्चन्ती प्रकाशमाना दशनानां दन्तानां दीधितिः कान्तिर्यस्य सः। एतादृशो राजा नीचैर्वाचमुवाच। विनयावनतो बभाष इति भावः॥११॥

( ४ ) अद्येति—त्वत्पादपद्मयोः संस्पर्शेन सम्पन्नः संजातोऽनुग्रहोऽनुकम्पा यस्य तत् । मे गृहं चिराय श्लाघनीयमभूत् । हे मुने तव पादस्पर्शेन मे गृहं पावनं संजातमिति सारः ॥१२॥

तदहमद्यानवद्यस्य भगवन्नभूवं भूम्नो यशोराशेर्भाजनम्, आरूढः पदं श्लाघार्हम्, आगतो गुणिषु गौरवम्, उपलब्धवान्धन्यताम्, संपन्नः पुण्यवतामग्रणीः, जातो जनस्य वन्दनीयः ॥ क ॥

(१)तदित्थमनेकप्रकारोपकारिणां किं ब्रवीमि, किंकरोऽस्मीति पौनरुक्त्यं सर्वस्वामिनाम्। केनार्थित्वमित्यनुचितादरो निःस्पृहाणाम्। इदं मे सर्वस्वमात्मीक्रियतामिति स्वल्पोपचारः स्वाधीनाष्टगुणैश्वर्याणां भवताम्। तथापि प्रणयेन भक्त्या च मुखरितः किंचिद्विज्ञापयामि ॥ ख ॥

इदं राज्यमियं लक्ष्मीरिमे दारा इमे गृहाः।
एते वयं विधेया वः कथ्यतां यदिहेप्सितम्' ॥ १३ ॥

मुनिरप्यवनीशस्य विनयमभिनन्द्य स्निग्धमुग्धस्मितसुधाधवलिताधरपल्लवमब्रवीत्-'उचितमेतद्भवा दृशां वक्तु कर्तुं वा ॥ ग ॥'

उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ १४ ॥

अपिच—

(२)यथा चित्तं तथा वचो यथा वाचस्तथा क्रिया।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ १५ ॥

अपिच—

विवेकः सह संपत्त्या विनयो विद्यया सह।
प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ १६ ॥

तदेतत्समस्तमस्ति त्वयि दीर्घायुषि, श्रूयतामिदानीं प्रस्तुतम्। (३)अनवरतसुरासुरचक्रचूडामणीकृतचरणरजसश्चन्द्रचूडामणेर्देवस्यादेशेनागता वयम्। अवाप्स्यसि सकलजलधिजलकल्लोलमालालंकारभाजो भुवो भर्तुरुचितमतिमान्यं धन्यमसामान्यं कन्यारत्नम्' इति ॥ घ ॥

उपेति ॥ इन्दुः केन शिशिरीकृतः। स्वभावादेव शिशिर इत्यर्थः ॥ १४ ॥
यथेति ॥ वाचीत्येकत्वेऽपि जात्या बहुत्वप्रतीतिः ॥ १५ ॥
विवेक इति ॥ प्रश्रयः प्रणयः ॥ १६ ॥

---

(१) तदित्थमिति—राजा तानि विनयवचांसि ब्रूते। अनेकधा परोपकारिणां भवतां किमुपकारमारचयामि। कानि च वाक्यानि भवतां सविधे ब्रवीमि। स्वोक्तेरनकाशं प्रदर्शयति—यत्, अहं भवतां किङ्कर इत्यनुचितं वचः। सन्त्येव सर्वेषां स्वामिनो भवन्तः। इत्यादि सर्वत्र विज्ञेयम्।

(२) यथा चित्तमिति—'मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्'मिति सूक्तेर्मूलस्थानमिदं पद्यम् ॥ १५ ॥

(३) अनवरतमिति—अनवरतं यथा तथा सुरासुरचक्रेण चूडामणीकृतं चरणयो रजोधूलिर्यस्य तस्य।

एवमुक्तवति तस्मिंस्तपस्विनि पुत्रार्थिनी कन्यालाभं मन्यमाना विप्रियं प्रियंगुमञ्जरी (१)जरन्मञ्जीररवजर्जरविलक्षाक्षरया गिरा कुर्वाणेव क्रोधपरिस्पन्दं निन्दास्तुतिधर्मेण नर्मलीलाकलहमकरोत् ॥ क ॥

(२)'नयशोभाजन, कृतकुटीककुशास्त्रग्राहिन्नवेदनोद्गारं कृतवानसि क्वापि। सर्वदानादेयेषु प्रतिकूलवर्तिषु जलेषु रतिं कुर्वाणः पाठीनहिंसको धीवर इवोपलक्ष्यसे। कुरङ्गेषु प्रीतिं बध्नासि। कदम्बैः कुरवकैर्बहुकदलीकैः पलाशप्रायैः कुजन्मभिः सह संवससि ॥ ख ॥

किमन्यद् ब्रूमो वयम्।

यस्य ते सदाचारविरुद्धः पुष्पवत्कान्ताराग एव प्रियः ॥ ग ॥

---

एवमिति ॥ क्रोधस्य परिस्पन्दं चेष्टां कुर्वाणेव ॥ क ॥

नयेति ॥ यशोभाजनेत्यामन्त्रणस्य नञ्योगः। तथा कृतानि कृत्रिमाणि, नतु वेदवदपौरुषेयाणि। कुत्सितटीकानि कुशास्त्राणि गृण्हासीत्येवंशीलः यस्मादवेदो वेदपाठरहितः। इदमपि द्वयमामन्त्रयम्। क्वापि न उद्गारमुच्चारणं कृतवानसि। वक्तुमपि न वेत्सीत्यर्थः। स्तुतिपक्षे नयश्च शोभा च ते जनयसि। यद्गृहमागतोऽसि तस्येति शेषः। तथा कृता कौ पृथिव्यां टीका गमनं येन। स्वर्गिणाप्यस्मदनुजिघृक्षयेति शेषः। कुशो दर्भ एवास्त्रं गृण्हास्यवश्यम्। एतेनाहव्यशत्रूणामपि विघातोक्तिः। वेदना दुःखं तदर्थमुद्गारमुच्चारणं क्वापि नाकरोः। एतेन प्रियंवदत्वोक्तिः। निन्दायां अनादेयेष्वश्रद्धेयेषु जडेषु रतिं विदधद्धिंसको धीवर इवावबुध्यसे। धीवरोऽपि किल नादेयपयःसु कूलं कच्छं प्रति वर्तमानेषु रतिं कुरुते। पाठीनाहारत्वात्। पक्षे सर्वकालमेव नदीभवेषु कूलं कूलं प्रति वर्तमानेषु वारिषु रागमासक्तिं कुर्वाणः पाठवान् 'न हिंसाशीलो' धिया बुद्ध्या वर एवावगम्यसे। एतेन तीर्थस्थास्नुर्दयालुर्ज्ञानी च। कुत्सितो रङ्गो वासना येषां तेषु विषयेषु प्रीतिमान्। पक्षे कुरङ्गा मृगास्तेषु प्रीतः। कदम्बैः कुमातृकैः। कुत्सिता अम्बाः कदम्बाः ताश्च दुश्चेष्टितैः कुर्वन्ति आचक्षते वा इति णिजन्तादचि सिद्धम्। बहुव्रीहौ तु कोः कन्न भवति। कुत्सितो रवो येषां तैः। कुत्सितमलीकं कदलीकम्। कोः कत। बहु कदलीकं येषाम्। तथा पलं पिशितमश्नन्ति ये तेषां प्रायैः सदृशैः। तथा कुत्सितं जन्म येषां तथाविधैः सह वासं विधत्से। पक्षे कदम्ब-कुरबक-कदली-पलाशा ये कुजन्मानः कौ पृथिव्यां जन्म येषामिति कृत्वा भूरुहस्तैः सह संवससि। मुनयो हि मृगनगप्रियाः। वनवासित्वात् ॥ ख ॥

यस्येति ॥ पुष्पवतीषु हि कान्तासु राग आसक्तिः। आचारविरुद्धः कुलधर्मानुचितः

---

(१) जरदिति—जरन्मञ्जीरवत् जीर्णभवन्नूपुरशब्दवत् जर्जराणि विलक्षाणि सविस्मयानि अक्षराणि यस्यां सा।

(२) नयेति—न यशोभाजन, कृतकुटीक, कुशास्त्रग्राहिन्, अवेद, न, उद्गारं, कृतवान्, असि, क्व अपि, । सर्वदा, अनादेयेषु, प्रतिकूलवर्तिषु, जडेषु रतिं, कुर्वाणः, पाठीनहिंसकः, धीवर इव, उपलक्ष्यसे, इति नर्मवाक्ये पदच्छेदः। वास्तविकार्थं तु—नयशोभाजन, कृतकुटीक, कुशास्त्रग्राहिन्, न, वेदनोद्गारं, कृतवान्, असि, क्व, अपि, सर्वदा, नादेयेषु, प्रतिकूलवर्तिषु, जलेषु, रतिं, कुर्वाणः, पाठी, न, हिंसकः, धीवर, इव, उपलक्ष्यसे, इति, ।

तदलमेनन तापसहितेन कन्यावरप्रदानेन' इति ॥ क ॥

एवमभिहितः सोऽपि तां बभाषे ॥ ख ॥

'दोषाकरमुखि, किं मामुपालभसे। प्रायः प्राणिनामीशः शंभुरेव शुभा-शुभं कर्मालोक्य तुलाधर इव तुलितं फलमुपकल्पयति ॥ ग ॥

तथाहि।

यद्यावद्यादृश येन कृतं कर्म शुभाशुभम्।
तत्तावत्तादृशं तस्य फलमीशः प्रयच्छति ॥ १७ ॥

अथवा।

मत्तमातङ्गगामिनि, यस्यास्तवाप्रमाणालोचनश्रीः सा त्वं बलिसंश्रया-वलग्ना कस्य नाधिक्षेपं जनयसि ॥ घ ॥

तदलमनेनालापालसत्प्रपञ्चेन। गतो भूयिष्ठो दिवसः। समासन्नो ऽस्माकमाह्निकसमयः। सीदत्येषा ब्रह्मपरिषद्। गगनमण्डलमध्यमारोहति भगवानशेषकल्याणचिन्तामणिस्तरणिः। अरविन्दारुणवदने न नक्तं समय-

---

पक्षे सदाचारेत्यामन्त्रणम्। विभिः पक्षिभी रुद्धः पुष्पवान्कान्तारस्यागस्त्यस्तलेव प्रियः ॥ग॥

तदिति ॥ तस्मात् तापस तपस्विन्, हि स्फुटं ते तव संबन्धिना कन्यावरप्रदानेन नालं न पर्याप्तं नेष्टं पूर्यत इति यावत्। यतोऽहं पुत्रार्थिनीति। अथवा तापःसंतापस्तत्स-हितेन। पक्षे तापसेत्यामन्त्रणम्। तेनानेन कन्यावरप्रदानेनालं नान्यत्प्रार्थनीयमित्यर्थः ॥ क ॥

दोषेति ॥ दोषाणामाकरो मुखं यस्यास्तत्संबोधनम्। पक्षे दोषाकरश्चन्द्रः ॥ ग ॥

मत्तेति ॥ मत्तः क्षीबो मातङ्गः शबरस्तद्वद्गच्छसि चेष्टसेऽवश्यम्। स ह्यनुचि-तचेष्टः त्वमपि तथा क्षीबा। म्लेच्छाभिगमस्त्वनुचितत्वान्न व्याख्येयः। पक्षे मातङ्गो हस्ती। यस्या भवत्या आलोचनश्रीर्विवेकसंपदप्रमाणा प्रत्यक्षादिप्रमाणापेता सा त्वं बलिनो बलवतो राज्ञः संश्रयेऽवलग्नावष्टब्धा कस्य पूज्यस्यापूज्यस्य वा अधिक्षेपं तिरस्कारं न करोषि। सर्वस्यापि करोष्येव। पक्षे लोचनश्रियः प्रसृत्यादिप्रमाणातिरिक्तत्वम्। बलिरु-दररेखा। अवलग्नं मध्यम्। एवंविधा सा त्वं शुभलक्षणा कस्य आधिक्षेपं मनःपीडाया अपनोदं न करोषि ॥ घ ॥

तदिति ॥ तस्माद्। अलं पूर्यतामनेन। अलापे संभाषे आलस्याभव्यस्य सतो भ-व्यस्य च प्रपञ्चेन विस्तारेण। प्रकृतं प्रक्रियत इति भावः। उक्तयो हि सप्रतिपक्षा भव-न्तीत्यालप्रतिषेधे सतोऽपि प्रतिषेधः। तथाहि—'सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्य-न्त्रणाः सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा। अव्युत्पन्नमतिः कृतेन न सता नैवासता व्यकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः'। अथवा। आलापस्य आलेनावस्तुरूपेण सन् न परमार्थेन सन् योऽसौ प्रपञ्चस्तेनालं निरर्थकत्वात्। यदुक्तम्—य-देवार्थक्रियाकारि तदेव परमार्थसत्'। दारुणं नयशोभाजनपाठीनहिंसकेत्यादिकस्य मुनीनां प्रतिपादनाद्रौद्रं वदनं यस्यास्तस्याः संबोधनम्। न अरवि नक्तं समयम्। अपितु सर्वि संध्यासमयं मुनयोऽप्यनुपालयन्ति। नक्तमित्यनेन संध्या लक्ष्यते। वयमपि मुनयस्ततोऽस्मा-कं संध्यावसर इत्यभिप्रायः। स्तुतौ अरविन्दवदरुणं वदनं यस्यास्तस्याः संबोधनम्। नैते

मनुपालयन्त्यमी मुनयः। अनुमन्यस्व। यामो वयम्' ॥ क ॥

इत्यभिहिता सा प्रियंगुमञ्जरी 'महर्षे, मर्षणीयोऽयमेकस्त्यक्तकुलवधूधर्मो नर्मापराधः। स्वीक्रियन्तामेतानि विविधान्यु(१)ल्लसन्मयूखमञ्जरीरचितेन्द्रचापचक्राण्याभरणानि। गृह्यतामिदमिन्दुद्युतिधवलमनलशौचं चीनांशुकपट्टपरिधानयुगलमियं च कुसुममालिका' इत्यभिधायास्यान्यदप्यतिथिसत्कारोचितमुपढौक्य प्रसादनाय प्रणाममकरोत् ॥ ख ॥

मुनिस्तु 'गौरवमुखि, वृत्तमुक्तोऽयं हारः, दोषालयमङ्गदम्, जघन्यपदाश्रयं काञ्चीदाम, सदापदाधिष्ठानं नूपुरम्, अलंकारो भवद्विधानामेव राजते नास्माकम्। इयं च परिमलवाहिनी माला निबद्धमधुकरालापाचीनं वासश्च तवैवोचितम्' इत्यनेकधा श्लिष्टालापलीलयातिवाह्य काश्चित्कालकलाः करकलितकमण्डलुर्मण्डलेश्वरमापृच्छ्य तां च प्रियंगुमञ्जरीं जरठतमालनीलमम्बरतलमुदपतत् ॥ ग ॥

(२)वियति विशदविद्युल्लोललीलायमाने
स्फुरदुरुपरिवेषाकारकान्तौ मुनीन्द्रे।

---

मुनयः संध्याकालमनु पश्चात्पालयन्ति। अवश्यविधेयत्वात्तत्कालमेवेत्यर्थः। तस्मादनुजानीहि यामो वयम् ॥ क ॥

इतीति ॥ इत्युक्ता सा राज्ञी महर्षे इत्याद्यभिधायातिथ्यसत्क्रियायोग्यमुपादाय हर्षयितुं प्रणतिं चक्रे ॥ ख ॥

मुनिस्त्विति ॥ वृत्तमुक्तो वर्तुलमौक्तिकः शीलरहितश्च। दोषाशब्दो भुजपर्याय इति दोषा बाहू आलयो यस्य। दोषा अवद्यानि च। यद्विश्वः—'दोषा रात्रौ भुजेऽपि च'। जघने भवं जघन्यं गर्हितं च। तादृक् पदमाश्रयो यस्य। सदा शश्वत् पदे पादावधिष्ठानमाश्रयो यस्य। पक्षे सतामप्यापदामासमन्तादधिष्ठानं नगरम्। आपदामायेश्च स्थानमिति वाक्ये तु छपामादित्वात्पत्वम्। इति प्रकृतेऽलंकारस्य वर्णनं गौणवृत्त्या दूषणम्। तस्मादेवं दोषयुक्तोऽलंकारो युष्मादृशीनामेव भाति; नास्माकं यतीनाम्। यतो हि चारित्रमण्डनाः। नर्मणस्तु अलमत्यर्थं कारो राजग्राह्यभागस्त्वादृशीनां राजपत्नीनां संगच्छते, नास्माकं वनवृत्तीनाम्। लोकस्योपकुर्म एव वयं, न कुतोऽपि किंचित्प्रतिगृह्णीम इति भावः। इयं च सुगन्धिः सभृङ्गलापा स्रक् चीनमंशुकं च तवैव युक्तं, नास्माकम्, यस्मात् परितो मलं वहति। तथा निबद्धमधुना समवेतक्षरया कराला एवंभूतासौ स्रक्। अपाचीनं निकृष्टं च वासः। इति समयं कंचिच्छ्लेषोक्तिभिर्निर्गम्य गगनमुदगात् ॥ ग ॥

वियतीति ॥ विस्मयान्निश्चलाकृतिर्नृपः स्थाणुनोपमितः ॥ १८ ॥

---

(१) उल्लसदिति—उल्लसन्त्यः शोभमाना मयूखमञ्जर्यस्ताभी रचितमिन्द्रचापचक्रं यैस्तानि।

(२) वियतीति—अथ। विशदा स्फीता, विद्युद्वल्लोला चपलावञ्चला या लीलानुकृतिस्तामिवानुचरति सति। स्फुरन्प्रकाशमानो य उरुः परिवेषो मण्डलं, तस्याकार आकृति-

अथ गतवति तस्मिन्विस्मयोत्तानिताक्षः
क्षितिपतिरवतस्थे स्थाणुसंस्थां दधानः ॥ १८ ॥

स्थित्वा च तत्कथावस्थया काश्चित्कालकलाः कलापिकुलोत्कण्ठाकारिणि रणति नवजलधररवरमणीये मध्याह्नगम्भीरभेरीरवे शङ्खयुगलके, विशति बिसकाण्डकवलनमपहाय (१)तीव्रतरतपनतापताम्यत्तनुनि नवनलिनीछदच्छायामण्डलमुपवनदीर्घिकावतंसे हंसकुले कुमुदकुवलयाम्भोजपत्रपुञ्जपञ्जरान्तरमनुसरति परिहृतोष्णमधुनि, मुकुलितपत्त्रपुटे षट्चरणचक्रवाले,(२)चटुलाग्रिमखुरशिखरोल्लिखितधरणिमण्डलेषु(३) खण्डितखर्वदूर्वानालनीलघुरघुरायमाणघोणाकोणेषु विमुच्यमानेषु पिपासातुरतुरंगेषु,घर्मविघूर्णितेषु ससूत्कारकरविमुक्तसीकरासारवर्षेणार्द्रिताङ्गणेषु मज्जनाय सज्जितेषु सेवागतराजकुञ्जरेषु, क्रीडागिरिसरितमवतार्यमाणेषु लीलामृगमिथुनेषु, पयोभिः पूर्यमाणासु पञ्जरपक्षिपयःपानपात्रीषु, उद्यानारघट्टतटीं टीकमानासु कोयष्टिमयूरमण्डलीषु, क्रीडासरः सरत्सु संगीतश्रमस्विन्नखिन्नकिंनरेषु, कूपकूलकुलायकोणकूणितेष्वातपातङ्काकुलकलविङ्केषु, भवनवनवापीपुलिनपालिपांसुपटलमुत्तप्तमपहाय शीतलशैवलावलिं श्रयति तरलितनक्रे, क्रेंकारयति क्रौञ्चचकोरचक्रवाकचक्रे, क्रीडाप्ररोपितप्राङ्गणप्रान्ततरुशिखरमध्ये मध्याह्नबलिपिण्डाय पिण्डिते क्रेंकारयति काकवयसां कर्णकटु कुटुम्बके, वकवलयवलक्षान्क्षिपति दिक्षु दीप्रान्दीप्तिदण्डांश्चण्डरोचिषि, विसर्ज्य परिजनं राजा मज्जनभवनायोदचलत् ॥ क ॥

गत्वा च पृथ्वीवलयमिव पयःपूर्णसमुद्रद्रोणीकम्, केदारोदरमिव सकलशालिस्थानम्, श्रोत्रियद्विजजनभवनमिव सकलधौतपट्टम्, अतिरम-

स्थित्वा चेति ॥ राजापि निश्चलनेत्रस्तथा तमवलोक्य कंचिच्च समयं तत्कथाभिरेवातिवाह्य मध्याह्नस्नानसद्मने प्रतस्थे ॥ क ॥

गत्वा चेति ॥ मज्जनगृहं गत्वा स्नानपीठे निषण्णः । गृहं विशिष्यते । पयसा पूर्णा समुद्रा मुद्राङ्किता द्रोणी जलपात्री कुण्डिका यत्र । स्नानीयजलादिषु मुद्रा दीयत इति राजधर्मः । तथा कलशाः कुम्भास्तेषामालिः पङ्क्तिस्तया सह युक्तानि स्थानानि प्रदेशा

स्तद्वत्कान्तिः शोभा यस्य स तस्मिन् । तस्मिन्मुनीन्द्रे वियति गतवति सति । विस्मयेनाश्चर्येणोत्तानिते अक्षिणी यस्य सः । क्षितिपतिर्भूपः । स्थाणुसंस्थां निश्चलतां दधानः सन् । अवतस्थे ॥ १८ ॥

(१) तीव्रेति—तीव्रतरस्तीक्ष्णतरो यस्तपनतापः सूर्यातपस्तेन ताम्यन्ती क्लिश्यन्ती तनु वपुर्यस्य तत् तत्र ।

(२) चटुलेति—चटुलश्चञ्चलोऽग्रिमोऽग्रभागो येषां तानि खुरशिखराणि खुराग्राणि तैरुल्लिखितं विलिखितं धरणिमण्डलं यैस्तेषु ।

(३) खण्डितेति—खण्डिता खर्वा ह्रस्वा या दूर्वा एव नालास्ताभिर्नीलवर्णा घुरघुरशब्दमाचरन् घोणाया नासायाः कोणो येषां ते तेषु ।

णीयं मज्जनभवनमवतारिताभरणः स्नानपीठे निषसाद ॥ क ॥

आसन्नस्थितश्चास्यावसरपाठकः पपाठ ॥

(१)'वररजनीकरकान्ते चित्राभरणे निशानभःसदृशे ।
तव नृप मज्जनभवने सविताना भाति परमश्रीः ॥ १६ ॥

अनन्तरमुत्तुङ्गकनककुम्भशोभास्पर्धिकुचमण्डलार्धबद्धोत्तरीयांशुकपरिकराः, ससमरस्मितविकारकारिण्यः, दर्शितसीत्काराङ्गमलनविन्यासाः, काश्चित्समुद्रवेला इव समकरोत्क्षिप्तामलकाः, काश्चित्तरुणतरुमञ्जरीराजय इव भृङ्गारभरभुग्नदेहाः, काश्चिदन्यायकारिण्य इव सभाजनोद्धूलनकराः, काश्चिन्मलयाचलभूमय इवोत्कृष्टगन्धधारितैलाः, काश्चिद्देवलोकवसतय इव चामरधारिण्यः, काश्चित्पुरंदरपुरंध्रिका इव सविभ्रमकङ्कतिकोपान्तेना-

यत्र । तथा कलधौतस्य हेम्नः पट्ट आसनं तेन सह । अन्यत्र पयःपूर्णः समुद्रो द्रोणी च यत्र । द्रोणी देशविशेषः । यद्विश्वः—'द्रोणी स्यान्नीवृदन्तरे' । केदारोदरं तु समग्रशालिस्थानम् । तथा सकलाः सर्वे धौताः क्षालिताः पट्टा आसनानि यत्र ॥ क ॥

वरेति ॥ नृप इति संबोधने । अधुना तद्विशेषणानि । वर श्रेष्ठ । रजनीकरस्य चन्द्रस्येव कान्तिरस्येति चन्द्रद्युते । रणे युद्धे चित्रो व्याघ्रस्तद्वदाभा अस्येति तथोक्त । तथा निशानैस्तेजस्विभिर्वभस्तीति कृत्वा सुभटरम्य अथवा निशानं निर्मलं वभस्ति शोभते । तथा सदृश इः कामो यस्येति कृत्वा कंदर्पप्रतिम । मज्जनसदने सविताना सोल्लोचा उत्कृष्टश्रीर्द्योतते । अथ च मज्जनभवने सविता रविर्ना भाति । परं केवलम् । अश्रीर्निष्प्रभ एवेत्युक्तिलेशः । यतो निशायां यन्नभस्तत्सदृशे । प्रद्योतनानुद्योते हेतुरयम् । तथा चित्राण्याभरणानि यत्र । नभःपक्षे चित्रा नक्षत्रम् । तथा वरा श्रेष्ठा रजनी हरिद्रा तां कुर्वन्ति सत्कुर्वन्तीति कृत्वा रजनीकरा गन्धकारकास्तैः कान्ते । नभस्तु वरो दीप्तिमान् सूर्याभावाद्यो रजनीकरः शशी तेन कान्तम् ॥ १९ ॥

अनन्तरमिति ॥ परिकरमाबध्येति जघने पटीवेष्टिं कृत्वा कामिन्यो राजानमस्नपयन् । समेनाविषमेण करेणोत्क्षिप्तान्यामलकानि यकाभिः । आमलकचूर्णं हि स्नानीयम् । भृङ्गारः कनकालुका । भाजनं पात्रम् । तत्रोद्धूलनम् । चूर्णविशेषः । तेन सह करः पाणिर्यासाम् । सभाजनोद्वलनपाठे तूद्वलनमुद्वर्तनम् । उत्कृष्टानि उद्धृतानि गन्धधारीणि तैलानि याभिः । चामरं प्रकीर्णकम् । विशिष्टो भ्रमश्चलनं तेन सह या कङ्कतिका केशमार्जनी तस्या उपान्तेनासमन्तात्केशानां विरलीकरणमाचरन्त्यः । पालिः पर्यायावसरः । यदजयः—'पालिः कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयोः । इष्टश्मश्रुस्त्रियामश्री पर्यायावसरे

(१) वरेति—मज्जनभवनं निशानभ इवेति साम्यम् । तत्र मज्जनभवनं सवितानं, वरा या रजनी हरिद्रा तां कुर्वन्तीति वररजनीकरा गन्धकारास्तैः कान्तं रम्यम् । विचित्राभरणयुतम् । इति । निशानभश्च सूर्यशून्यं, वररजनीकरश्चन्द्रस्तेन रम्यं, चित्राभरणीनक्षत्रयुतं च, इति ज्ञेयम् । किंच–वररजनीकरकान्ते, रणे चित्राभ, निशानभ, सदृशे, इति पदानि नृपसम्बोधनान्यपि ॥ १९ ॥

केशप्रसादनमाचरन्त्यः, काश्चिद्विन्ध्याटव्य इव दर्शितविविधपादपालिकाः, काश्चिद्राघवसेना इव कृतप्रहस्तमलनाः, काश्चिद्व्याकरणवृत्तय इव बाहुलतां संवाहयन्त्यः, मज्जननियुक्ताः कामिन्यो राजानं स्नपयामासुः ॥ क ॥

किं बहुना—

तास्तास्तं स्नपयामासुरङ्गनाः कुम्भवारिणा ।
एत्य याः स्युः प्रसन्नेन द्युलोकात्कुं भवारिणा ॥ २० ॥

(१)अथ विमलदुकूलप्रान्तनिर्नीरिताङ्गः
परिहितसितवासाः स्वल्पमाङ्गल्यभूषः ।
शुचिरुचितविधिज्ञः स स्वयं स्वस्थचित्तः
कुशकुसुमकरः सन्कर्म धर्म्यं चकार ॥ २१ ॥

अनन्तरमावर्तितानेकस्वर्णवल्लभो वल्लभो जनस्य भोजनस्य समये स मयेन निर्मितया तया सधर्माणं धर्मसुतसभया सभयागतजनजनितारम्भोऽरं भोजनस्थानवेदीं जनस्थानवेदी गतवान् ॥ ख ॥

क्रमे'। ततश्च दर्शिता विविधा पादपालिः पादमर्दनावसरो याभिः । कृतं प्रकर्षेण हस्तमलनं याभिः । बहुलतामिति बाहुर्लतेवेति । पक्षे मकरैः सह उत्क्षिप्तममलं कं जलं याभिः । भृङ्गाणामार आगमनं तस्माद्यो भरः । तथा अवाच्यवचनैः सभाजनस्योद्धूलनं मालिन्यं कुर्वन्ति । उद्धूलनपाठे तु सभाजनादुद्धूलनमपसरणम् । उत्कृष्टगन्धधारिता एला ओपविविशेषो याभिः । च पृथक् । अमरा देवाः । सविभ्रमं सविलासं कं सुखं यत्र । कतिकोपान्ते कियत्कोपविगमे नाकेशस्य दिवस्पते प्रसादनं कुर्वन्ति । कतीति पुरंध्रिकाविशेषणं वा । दर्शिता विविधाः पादपानामालयो याभिः । प्रहस्तो रावणप्रतिहारस्तस्य मलनमभिभवः । बाहुलता बाहुलकम् ॥ क ॥

ता इति ॥ भवस्य संसारस्यारिः शिवस्तेन । प्रसन्नेन हेतुना । द्युलोकात्स्वर्गलोकात् । कुं पृथ्वीम् । एत्यागत्य । याः स्युर्भवेयुः । तास्ताः स्त्रियः । तं कुम्भवारिणा कलशोदकेन स्नपितवत्यः ॥ २० ॥

अथेति ॥ निर्नीरितं निर्जलीकृतमुद्गमितमित्यर्थः ॥ २१ ॥

अनन्तरमिति ॥ आवर्तिता येऽनेके स्वर्णस्य वल्लास्तौल्यमानविशेषास्तद्वल्लभा यस्य । तथा वल्लभो दयितो लोकस्य भोजनस्य काले स राजा मयेन दैत्यवर्धकिना कृतया तया प्रतीतया युधिष्ठिरस्य सभया सधर्माणं सदृशीं भोजनस्थानवेदीम् । सभयानामागतानां शरणं प्रपन्नानां जनानां जनितरक्षोपक्रमः । अरमत्यर्थं जनानां स्थानवेदी लोकस्योचितासनज्ञः प्राप्तवान् ॥ ख ॥

(१) अथेति—विमलं निर्मलं यद् दुकूलं तस्य प्रान्तेन निर्नीरितं निर्जलीकृतमङ्गं यस्य सः । परिहितं सितं वासो वसनं येन सः । तथा स्वल्पा मङ्गलकर्मणि उपयुक्ता भूषा भूषणं यस्य सः । कुशा दर्भाः कुसुमानि पुष्पाणि करे पाणौ यस्य सः । स्वस्थचित्तो निर्विकारमनाः । उचितो यो विधिः पूजायास्तं जानातीति तथोक्तः । स राजा स्वयं धर्म्यं धर्मादनपेतं कर्माह्निकं चकार ॥ २१ ॥

तस्यां च बहुविस्तीर्णस्वर्णभोजनपात्रपत्रशङ्खशुक्तिसनाथायामुपविष्टस्यास्य क्रमेण परिकरमाबध्य गाढमाढौकन्त स्वस्य स्वस्यानुहारिणोऽन्नविशेषानादाय सूपकाराः सूपकाराङ्गनाश्च ॥ क ॥

तथाहि ।

भक्तास्तस्य भक्तम्, मुद्गा मुद्गान्, मोदका मोदकान्, अशोकवर्तिन्योऽशोकवर्तीः, समांसा मांसम्, नानाशाकाः शाकानि, व्यञ्जना व्यञ्जनम्, अपरास्तु काश्चिद्क्षीरा अपि क्षीरम्, अघारिका अपि घारिकाः परिवेषयामासुः ॥ ख ॥

सोऽप्यधीशो भूभुजां भुञ्जानो भोज्यम्, लिहँल्लेह्यम्, आस्वादयन्स्वादु, चूषयञ्चुष्याणि, पिबन्पेयानि, आहारमकरोत् ॥ ग ॥

अनन्तरमाचम्य चन्दनेनोद्वर्तितपाणिपल्लवः शीघ्रमाघ्राय धूपधूमम्, आस्ये निक्षिप्य कस्तूरिकाकुङ्कुमकर्पूरकर्बुराणि क्रमुकफलशकलानि, आदाय च वित्रस्तमृगतर्णकर्णकम्राणि शुक्तिशुक्लानि ताम्बूलीदलानि, तस्मात्प्रदेशादपरमवकीर्णकुसुमहारि विस्तीर्णास्तीर्णस्वर्णमयवैदूर्यपर्यन्तपर्यङ्काङ्कमाप्तैः सह विनोदास्थायिकास्थानमगात् ॥ घ ॥

तत्र च (१)सकामकामिनीकमलकोमलकरपुटपीड्यमानपादपल्लवो नर्तयन्नाट्यपरिपाटीपटून्नटान्, भावयन्नमृतस्रुतः कविवाचः, वाचयंश्चिरंतनकविकथाः, शृण्वन्वीणाप्रवीणकिंनरमिथुनगीतानि, आलोकयँल्लोचनोत्सवकरान्विलासिनीलास्यविलासान्, वादयन्मृदुवाद्यविशेषान्, अवधारयन्वांशिकवाद्यवेणुनिक्वाणान्, कलगिरः पाठयन्पञ्जरशुकान्, (२)कान्ताकुचकुम्भमण्डलावष्टम्भलीलयापराह्णसमयमतिवाहितवान् ॥ ङ ॥

---

तस्यां चेति ॥ सूपकारा औदनिका सूपकारकाश्च ॥ क ॥

भक्ता इति ॥ भक्ताः प्रसादकाः । मुदं गच्छन्तीति मुद्गाः । मोदयन्तीति मोदकाः । न शोके वर्ततेऽभीक्ष्णमशोकवर्ती नीर्नायको येषां यासां च । समोंऽसो यासाम् । नाना अनेकप्रकारा आशा येषां यासां च । 'शेषाद्विभाषा' इति कप् । विशिष्टाञ्जनाः । अक्षीणि ईरयन्ति विभ्रमात्कम्पयन्ति । अघस्य पापस्य अरिकाः शत्रुरूपाः । भक्तमित्यादि कर्मपदानि भक्ष्यार्थानि । परिवेषणमत्र भोजनस्य भाजने क्षेपणम् ॥ ख ॥

अनन्तरमिति ॥ त्रस्तस्य हि मृगशावस्य कर्णौ स्तब्धौ भवतः । ताम्बूलीदलान्यपि तादृंशीति भावः ॥ घ ॥

---

(१) सकामेति—सकामा या कामिनी तस्याः कमलकोमलौ यौ करौ तयोः पुटेन पीड्यमानः संवाह्यमानः पादपल्लवश्चरणकिसलयो यस्य सः ।

(२) कान्तेति—कान्तायाः कमिन्याः कुचकुम्भयोः कुचकलशयोर्मण्डलं प्रदेश एवावष्टम्भ उपधानं तस्य लीलया विलासेन ।

क्रमेण च (१)चषकायमाणविकचकमलमध्यमधुपानमत्त इव पुनर्वारुण्याशयाभिभूतभासि मदादिव लोहितायमाने निपतति मुक्तांशुकेऽशुमालिनि, वनान्तरतरुशिरःश्रितशाखाशिखरेषु गलद्वहलकिञ्जल्कपुञ्जपिञ्जरासु मञ्जरीष्विव विलम्बमानासु दिनकरदीधितिषु, विस्तीर्णशिलावकाशजघनायामुल्लसल्लोहिताधरपल्लवायामस्ताचलवनराजिरेखायामुपरि पतितमवलोक्य रागिणमहर्पतिमीर्ष्यारोषभरादिव जाते जपापुष्पनिचयरुचि पश्चिमाशामुखे, मुखरयति नभो (२)निजनीडनिलयनाकूतकूजितजरदण्डजव्रजे, व्रजति सरः संध्याविधिविधित्सया द्विजन्मजनमुनिनिकाये, कालागुरुलाञ्जनराग इव श्यामलयति गगनलक्ष्मीमभिसारिकावन्धावन्धकारे, राज्ञः संध्यावसरमावेदयन्किंनरमिथुनमिदमगायत् ॥ क ॥

'भोगान्भो गाङ्गवीचीविमलितशिरसः प्राप्य शंभोः प्रसादा-
न्मोहान्मोहानभिज्ञाः क्वचिदपि भवत प्राणिनो दर्पभाजः ।
यस्माद्यः स्मार्तविप्रप्रणतिनुतपदः सर्वसंपन्नभोगो
भास्वान्भाः स्वाङ्गभूता अपि स परिहरन्नस्तमेष प्रयाति' ॥ २२ ॥
एतदाकर्ण्य नरपतिः सांध्यं विधिमन्वतिष्ठत् ॥ ख ॥

क्रमेणेति ॥ अन्योऽपि मधुपानेन माद्यति । पुनःपुनर्मधुवाञ्छया निष्प्रभः स्यात् । तथा क्षीवतया आरक्तः सन्निर्वस्त्रो भूमौ पतति । विस्तीर्णशिलावकाश एव जघनं श्रोणी यस्याः । तथा उल्लसन्तो अधरा अधःस्थिताः प्रवाला यस्याः । ईदृश्यामस्ताचलारण्यराजौ उपरिष्टात्प्राप्तं रागिणं रक्तं द्युमणिं वीक्ष्य रोषादिव पश्चिमदिगानने रक्ते जाते । अन्यस्या अपि मुखमीदृग्गुणायामपरकान्तायामनुरागिणमुपरि पतितं पतिमवलोक्येर्ष्यावशाद्रक्तं स्यात् ॥ क ॥

भोगानिति ॥ भोगानित्यनन्तरो भोःशब्द आमन्त्रणे । गाङ्गोर्मिनिर्मलीकृताङ्गस्य शंभोः शिवस्य प्रसादात् भोगान् प्राप्य भो दर्पभाजः प्राणिनः, मोहात्सकाशाद् ऊहानभिज्ञा अविमर्शकाः क्वचिदपि विषये मा भवतेति । मायोगेऽपि सानुबन्धकत्वाद्विधौ पञ्चमी । यस्माद्धेतोः स्मार्तविप्रैः प्रणामसमये स्तुतपादपद्मः । तथा सर्वसंपत् सकलश्रीको नभोगो वियद्गामी च यो भास्वान् रविः । सोऽपि स्वाङ्गभूता भा दीप्तीः परिहरन् एष भवतां प्रत्यक्षोऽस्तं प्रयाति सर्वे सुलभा दुर्लभाश्च संपन्ना भोगा अस्येत्युक्ताभिहितम् । तस्मादेवंविधस्य महात्मनोऽपि रवेरस्तं विलोक्य शंभोराराधनादिकार्ये न प्रमदितव्यमित्यर्थः ॥ २२ ॥

(१) चषकेति—चषकायमाणं पानपात्रीभूतं यद्विकचं कमलं विकसितपद्मं तस्य मध्ये मधु मद्यं तस्य पानेन मत्तः ।

(२) निजेति—निजनीडानलये स्वीयकुलायालये आकूतेन कूजितं येषां तादृशो जरदण्डजव्रजः । तस्मिन् ।

(१)क्रमेण प्रचुरचलच्चाषकुलकालकान्तिकाशिभिर्वहलतमःकल्लोलैरालोडिते लोके लोकेश्वरो विहितविकालवेलाव्यापारः पारसीकोपनीतपारावारपारीणपारावतपतत्त्रिपञ्जरसनाथे विकीर्णवासधूलिनि धूपधूममुचि विचित्रचित्रशालिनि प्रान्तप्रदीपितदीपदीप्तिदण्डखण्डिततमसि सज्जितशय्ये शय्यागृहे गृहीतस्पृहणीयाङ्गरागो रागसागरकल्लोललोचनयानया प्रियया प्रियंगुमञ्जर्या अलीककलहकोपकुटिलभ्रमद्भ्रूकोणतर्जनजनितस्मितः स्मरविकारकारिकरिकलभकुम्भविभ्रमायमाणोत्तुङ्गपीवरकुचकुम्भपीठमारोपितो रजनीमनैषीत् ॥ क ॥

एवमस्य सकलसंसारसुखपरम्परामनुभवतो यान्ति दिवसाः ॥ ख ॥

कदाचिच्चारुचामीकराचलचलद्देहाधिदेवतेव बहुधानन्दने सुरुचिरवायौवनारम्भे सुरतोत्सवमनुभवन्ती पत्युः प्राणप्रिया प्रियंगुमञ्जरी गर्भं बभार ॥ ग ॥

(२)तेन च विकचचूतमञ्जरीव कोमलफलबन्धेन बन्धुररमणीयाकृतिः, चन्द्रकलेव कलाप्रवेशेनोपचीयमानप्रभा, प्रभातवेलेवोन्मीलदंशुमालिमण्डलेनानन्यमाना, रत्नाकरतरङ्गमालेवान्तःस्फुरन्माणिक्यकान्तिकलापेनोद्भासमाना, गर्भसंदर्भितेन लावण्यपरमाणुपुञ्जेन व्यराजत राजमहिषी ॥ घ ॥

---

कदाचिदिति ॥ बहुधा नन्दयति हर्षयति यस्तस्मिन् । यौवनारम्भे । सुष्ठु रुचिरिच्छा रवः स्वरो यस्याः । शोभनाभिलाषा कलभाषिणी च । सुरतं मोहनमेवोत्सवमनुभवन्ती प्रियंगुमञ्जरी गर्भं दधे । चामीकराचलो मेरुस्तस्य चलद्देहा अधिष्ठातृदेवतेव । सोऽपि बहुधानेकधा नन्दनाख्ये वनारम्भे सुष्ठु अतिशयेन रुचिरवायौ सुरताया देवत्वस्योत्सवमनुभवति । आरम्भणमारम्भः आदिरित्यर्थः । नन्दनं हि वनानामादिराद्यं प्रधानमित्यर्थः । यदि वा वनान्यारभ्यन्तेऽनेनेति कृत्वा वनारम्भः । शतानन्देन हि प्रथमं नन्दनं सृष्ट्वा तद्वृक्षावयवैर्बीजशाखादिभिरितरवनानि जगति सृष्टानि ॥ ग ॥

तेनेति ॥ कुसुमान्तर्गूढः फलारम्भकरसकणिकारूपो बन्धः कोमलफलबन्धः ॥घ॥

---

(१) क्रमेणेति—स राजा शय्यागृहे रजमनीनैषीदिति प्रधानवाक्यम् । प्रचुरमतिशयेन चलन्तो ये चाषाः किकीदिवयः [ 'चास इति च ख्याताः ] पक्षिणस्तेषां कुलं समूहस्तस्य कालकान्तिवत् कृष्णरुचिवत् काशन्त इति । पारसीकैः पारसीकदेशस्थैरुपनीताः पारावारपारीणाः समुद्रोल्लङ्घिनो ये पारावतपतत्त्रिणः कपोतपक्षिणस्तेषां पञ्जरैः सनाथे । तथा प्रान्ते समीपे प्रदीपिता ये दीपास्तेषां दीप्तिरेव प्रकाश एव दण्डस्तेन खण्डितं विनाशितं तमो यत्र । स्मरविकारकारिणौ स्मरोत्पादकौ, तथा करिकलभकुम्भस्य करिशावकुम्भस्थलस्य विभ्रममिवाचरन्तौ, [ कलभग्रहणेन स्तनयोः संहत्वं नवीनता च प्रबोध्यते ] तथोत्तुङ्गावुन्नतौ, पीवरौ पीनौ यौ कुचौ कुम्भाविव तयोः पीठमुपरिप्रदेशमारोपितोऽध्यासीनः ।

( २ ) तेनेति—तेन गर्भधारणेन सा राजहिषी व्यराजतेति प्रधानवाक्यम् । कोमलफलबन्धेन मनोरमा रसालमञ्जरीव, वर्धमानकलासमूहेन चन्द्रकलेव, स्फुरत्सूर्यमण्डलेन प्रभातवेलेव, तथा अन्तःस्फुरन् प्रकाशमानो माणिक्यानां कान्तिकलापस्तेनोद्भासमाना रत्नाकरवीचीमालेव, सा रराजेति भावः ।

(१)गच्छत्सु च केषुचिद्दिवसेषु सुवृत्ततुहिनाचलगण्डशैलयुगलमिव बालमयूरिकाक्रान्तम्, अनङ्गसौधशिखरद्वयमिव शेखरीकृतेन्द्रनीलकलशम्, उज्ज्वलरौप्यनिधानकुम्भयुग्ममिव भुजगसंगतमुखम्, उल्लासिहंसमिथुनमिव चञ्चूत्खातपङ्किलकमलकन्दम्, ऐरावतमस्तकपिण्डपाण्डुरमुच्चचूचुकश्यामलिम्नाऽलंकृतमापूर्यमाणमन्तःक्षीरेण क्षणं क्षणमखिद्यत पयोधरद्वन्द्वमुद्वहन्ती ॥ क ॥

बबन्ध च चन्द्रकलाङ्कुरकवलने स्पृहाम् ॥ ख ॥

अभिलाषमकरोच्च (२)चञ्चलचञ्चरीककुलकलरवरमणीयविकचचूतवनविहारेषु ॥ ग ॥

स्पर्शममन्यत बहु बहलम(३)भ्यर्णावकीर्णविकसितकमलवननिष्यन्दिमकरन्दविन्दोर्मन्दतरतरङ्गसङ्गशीतलमलयमारुतस्य ॥ घ ॥

चिन्तयांचकार च चतुरुदधिलावण्यरसमास्वादयितुम् ॥ ङ ॥

अभ्यवाञ्छदतुच्छमच्छमशेषममन्दमन्दरमन्थानमन्थोत्पन्नममृतमातृप्ति पातुम् ॥ च ॥

इत्यनेकधोत्पन्नगर्भप्रभावादनुरूपदोहदसंपत्तिसंपन्नाधिककमनीयकान्ति(४)रुल्लसद्बहलमृगमदजललिखितविचित्रपत्रभङ्गभव्यविपुलकपोलमण्डलेन मुखेन शशाङ्कमन्तःस्फुरत्कलङ्कमुपहसन्ती द्विगुणमवनिपतेस्तस्य प्रिया प्रियंगुमञ्जरी बभूव ॥ छ ॥

तथाहि ।

> सा समीपस्थितज्येष्ठा पयःपूर्णपयोधरा ।
> अग्रप्रावृडिवाह्लादमकरोत्तस्य भूपतेः ॥ २३ ॥

सा समीपेति ॥ समीपे स्थिता ज्येष्ठा वृद्धस्त्रियो ज्ञातप्रसवस्वरूपा यस्याः । तथा पयसा क्षीरेण पूर्णौ पयोधरौ स्तनौ यस्याः । सा प्रियंगुमञ्जरी तस्य राज्ञो मुदमकरोत् । अग्रं प्रावृषोऽग्रप्रावृट् आषाढवर्षाः । तत्पक्षे समीपे स्थितो ज्येष्ठः शुक्रो मासो यस्याः । तथा पयसा जलेन पूर्णः पयोधरो मेघो यस्याः । भुवो हि प्रावृट् परमोदकारिणीति भुवः पत्युराह्लादं करोति ॥ २३ ॥

---

(१) गच्छत्स्विति—सा पयोधरद्वन्द्वमुद्वहन्ती क्षणं क्षणमखिद्यत । सुवृत्तौ यौ तुहिनाचलगण्डशैलौ तयोर्युगलमिव । कीदृशं तद् युगलं बाला या मयूरिका तयाक्रान्तम् । अत्र स्तनौ गण्डशैलोपमितौ । तथा चूचुकं च बालमयूरिकयेति ज्ञेयम् । एवमग्रेऽपि । ऐरावतस्य मस्तकमेव पिण्डस्तद्वत्पाण्डुरम् ।

(२) चञ्चलेति—चञ्चलं चञ्चरीककुलं भ्रमरकुलं तेषां कलरवेण मधुरशब्देन रम्येषु विकचचूतवनेषु विकसिताम्रकाननेषु विहारः केलिस्तेषु । स्पृहां चकार ।

(३) अभ्यर्णेति—अभ्यर्णे निकटेऽवकीर्णानि पतितानि विकसितानि विकचानि यानि कमलवनानि तेभ्यो निष्यन्दिनो मकरन्दबिन्दवो यस्मिन् तस्य ।

(४) उल्लसदिति—उल्लसत् प्रकाशमाने, बहलमृगमदजलेन कस्तूरिकापयसा लिखितं यद् विचित्रं पत्रभङ्गं पत्ररचना तेन भव्यं विपुलकपोलयोर्मण्डलं यस्मिंस्तत्तेन ।

एवमविरतविविधवाञ्छोत्सवाविच्छेदकर्तरि भर्तरि, संज्ञयैवाज्ञाकारिण्यपारे परिवारे, बहुभङ्गिभाग्योपभोगक्रमेणातिक्रामति कुत्रचित्काले, कालकलाकुशलश्लाघनीये पूर्णप्राये प्रसवसमये, विलीनजात्यशातकुम्भभासि भास्वत्युदयमारोहति, हततिमिरासु दिक्षु क्षणमेकं सा प्रसववेदनाव्यतिकरमन्वभूत ॥ क ॥

ततश्च

(१)प्रभासंयोगिविख्यातं योग्यं नालस्यकर्मणः ।
पृथ्वीव पुण्यतीर्थं सा कन्यारत्नमजीजनत् ॥ २४ ॥

तत्र च दिवसे (२)'विकसितकुमुदकुन्दकान्तकीर्तनीयकीर्तिसुधया धवलानि करिष्यत्येषा प्रवर्धमानास्मन्मुखानि' इति प्रियादिव प्रसन्नाः समपद्यन्त दश दिशः । 'मा स्म पुनरस्मद्गुणानेषापहार्षीत्' इत्यपहृतैकैकसारगुणाः सभया नमस्यन्त इव तस्यै कुसुमाञ्जलिममुञ्चँश्चन्द्रादयो देवाः । स्वकान्तिसर्वस्वापहारभयादिव दिवि ननृतुरप्सरसः । 'किमस्याः समं समुत्पन्नमन्यदपि कन्यारत्नम्' इत्यन्विष्यन्त इव परितः परिबभ्रमुः सुरभयः समाः समीरणाः ॥ ख ॥

किं बहुना ।

(३)अमन्दानन्दनिष्यन्दमपास्तान्यक्रियाक्रमम् ।
जगज्जन्मोत्सवे तस्याः पीतामृतमिवाभवत् ॥ २५ ॥

---

प्रभेति ॥ कान्तिसंयोगि । विख्यातं प्रसिद्धम् । नळस्य नृपतेरिदं नालम् । कर्म अगण्यपुण्यात्मकं तस्य । योग्यमुचितम् । कन्यारत्नम् । सा अजीजनदुत्पादयामास । पृथ्वी पुण्यतीर्थमिव । तदपि प्रभासाख्यम् । योगिभिर्योगमार्गरतैर्विख्यातम् । आलस्य असारस्य कर्मणो न योग्यम् । अथ च आलस्यकर्मणो न योग्यम् । किं तर्हि उद्यमक्रियायोग्यम् । ततस्तदर्थं केनापि न प्रमदितव्यमिति भावः ॥ २४ ॥

तत्र चेति ॥ कन्यारत्नान्वेषिणो हि । सुरभयः सौरभ्यवन्तः । समा सश्रीकाश्च भवन्ति ॥ ख ॥

---

( १ ) प्रभासेति—प्रभासतीर्थं सुराष्ट्रप्रदेशे । तत्र स्नानेन राजयक्ष्मरोगो निरस्यते । यथा भारते—'पुण्यं प्रभासं समुपाजगाम यत्रोडुराट् यक्ष्मणा क्लिश्यमानः', । शान्तिपर्वणि ३६ अध्याये ।

( २ ) विकसितेति—विकसितानि यानि कुमुदानि तद्वत्कान्ता कीर्तनीया वर्णनीया या कीर्तिरेव सुधा तया । धवलकीर्तिः कुमुदकुन्दैरुपमिता ।

( ३ ) अमन्देति—तस्यां दमयन्त्या जन्मोत्सवे । अमन्दो बहुलो य आनन्दस्य निष्यन्दः प्रस्रवणं यत्र । अपास्तो दूरीकृतोऽन्यायाः क्रियायाः कर्मणः क्रमो यत्र । एतेन विगलितवेद्यान्तरत्वं प्रतीयते । एतादृशं जगत् पीतामृतमिव पीतममृतं येन तत् अभवत् ॥२५॥

(१)अथ वहोः कालादनुरूपप्रौढप्रहरणप्राप्तिप्रीतहृदयेनास्फोटितमिव सकलजगद्विजयव्यवसायसाहसिकेन कुसुमसायकेन, चिरादुचिताश्रयलाभमुदितमनसा स्फूर्जितमिव शृङ्गाररसेन, शचिकाशकुसुमहास्येन योग्यसहकारिकारणोपलम्भपूर्णमनोरथेन वल्गितमिव वसन्तमासेन, निजकर्मणः सफलतां मन्यमानेनोच्छ्वसितमिव मलयानिलेन, चिरकालोपलब्धश्लाघ्याधारतया हसितमिव रूपसंपदा, विकसितमिव लावण्यलक्ष्म्या, प्रनृत्तमिव समस्तस्त्रीलक्षणाधिदेवतया, कलकलितमिव कान्तिकलापश्रिया ॥ क ॥

किं वहुना—

(२)सर्गव्यापारखिन्नस्य वहोः कालाद्विधेरपि ।
आसीदिमां विनिर्माय श्लाघ्यः शिल्पपरिश्रमः ॥ २६ ॥

एवमस्याः सततविस्तीर्णस्वर्णपूर्णपात्रपूजितपूज्यद्विजन्मनि संपन्ने नामकर्मसमये संमान्य मान्यजनं जनेश्वरो वरप्रदानमनुस्मृत्य दमनकमुनेः 'दमयन्ती' इति नाम प्रतिष्ठितवान् ॥ ख ॥

क्रमेण च प्रचुरामृतसंसिक्ता इव सुकुमाराः प्रसर्तुमारभन्ताङ्गावयवपल्लवाः, चकार च (३)चञ्चच्चामीकररुचिरुचिराङ्गणमणिवेदिकासु कैश्चिद्दिवसैरनुच्चचरणप्रचारचारुचापल्यलीलाः, सहासमकरोत्परिजनं जनयन्ती वालकेलीः, स्वच्छन्दमानन्दयांचकार पितरं तरङ्गभङ्गिरङ्गितेन, जननीमजीजनज्जातविस्मयां स्मितमुग्धदर्शितदन्तकान्तिकुन्दपुष्पमनिष्पन्नाक्षरमल्पालपं जल्पन्ती ॥ ग ॥

किं वहुना—

अपि रेणुकृतक्रीडं नरेऽणुक्रीडयान्वितम् ।
तस्याः प्रौढं शिशुत्वेऽपि वयो वैचित्र्यमावहत् ॥ २७ ॥

अपीति ॥ रेणुना कृता क्रीडा यत्र । तथा 'कस्त्वां परिणेष्यति, त्वं कस्मै दातव्या' इत्याद्युक्तिभिर्नरे पुंसि विषये अणुक्रीडान्वितमल्पक्रीडाकरम् । तस्याः संबन्धि । वयः । शैशवेऽपि प्रौढं वैचित्र्यं दधौ । अपिर्विरोधार्थः । स च तुल्यार्थव्याख्यया ॥ २७ ॥

(१) अथेति—अनुरूपाणि अनुकूलानि यानि प्रौढानि आयुधानि तेषां प्राप्तिस्तया प्रीतं प्रसन्नं हृदयं यस्य । योग्यानां सहकारिकारणानां समुपलम्भेन प्राप्त्या पूर्णो मनोरथोऽभिलापो यस्य तेन वसन्तमासेन वल्गितमिवोद्गतमिव । कान्तिकमनीयायास्तस्याः कन्यायाः शृङ्गारव्यञ्जकत्वाद् वसन्तमासादिसमुद्दीपनविभावत्वेनोपमानत्वम् ।

(२) सर्गेति—सर्गव्यापारेण सृष्टिव्यापारेण खिन्नस्य खेदयुतस्य उत्कृष्टरचनाया अभावात् । विधेरपि ब्रह्मणोऽपि । इमां कन्यां विनिर्माय वहोः कालात् । शिल्पपरिश्रमो निर्माणश्रमः प्रशंसनीयो बभूव । अस्मात्कालात्पूर्वं रम्यवस्तुरचनाया अभावात् शिल्पश्रमो न श्लाघ्यो जातः । अधुना तु जातः ॥ २६ ॥

(३) चञ्चदिति—चञ्चन्ती दीप्यमाना या चामीकररुचिः सुवर्णकान्तिस्तया रुचिरा मनोरमा या अङ्गणमणिवेदिका मणिखचिता वेदिका तासु ।

एवमियमनवरतस्वैरविहाराहारिणि क्रमेणातिक्रामति शैशवे वयसि पितुर्नियोगाद्गुरूपदेशात्साधुवृद्धसंवासाद्बुद्धिविकासाच्च नातिचिरेण, प्राप्ता नैपुण्यं पुण्यकर्मारम्भेषु, जाता प्रवीणा वीणासु, निराकुला कुलाचारेषु, कुशला शलाकालेख्येषु, विशारदा शारिदायेषु, प्रवुद्धा प्रबन्धालोचनेषु, चतुरा चातुरानाथजनचिकित्सासु ॥ ख ॥

किं चान्यत् ।

अकरोदनालस्यं लास्ये, प्राप प्राधान्यं धन्योचितव्यवहारेषु, वैचित्र्यं चित्रेषु, चातुर्यं तौर्यत्रिके, कौशलं शल्योद्धारे, पाटवं पटहवादने, वैमल्यं नवमाल्यग्रथने, प्रागीत्यं गीत्याम् , प्राकाम्यं कामकथासु ॥ ग ॥

किं बहुना—

(१)न तत्काव्यं न तन्नाट्यं न सा विद्या न सा कला ।
यत्र तस्याः प्रवुद्धाया बुद्धिर्नैव व्यजृम्भत ॥ २८ ॥

(२)एवमस्याः शैशव एव निजजरठप्रज्ञाप्रज्ञातज्ञातव्यवस्तुविस्तरायाः क्रमेण तिलकभूतं नूतनचूतवनमिव वसन्तप्रवेशप्रथमपल्लवोल्लासेन, प्रत्यग्रघनसमयमहीमण्डलमिवामन्दविदलत्कन्दलकलापेन केसरिकिशोरकण्ठपीठमिव नवकेसराङ्कुरोद्गारेण, करिकलभकपोलस्थलमिव प्रथममदोद्भेदेन, निशावसानभस्तलमिव प्रभातप्रारम्भप्रभाप्रभावेण, सरःसलिलमिव विदलितकोमलकमलकान्तिसंतानेन, मनोहारिणा संसारसारभूतेनाभूष्यत वपुः कान्ततरतारुण्यावतारप्राक्प्रारम्भेण ॥ क ॥

ततश्च ।

(३)परिहरति वयो यथा यथाऽस्याः स्फुरदुरुकन्दलशालि बालभावम् ।
द्रढयति धनुषस्तथा तथा ज्यां स्पृशति शरानपि सज्जयन्मनोभूः ॥२९॥

---

अकरोदिति ॥ प्रगीता प्रसिद्धा तस्या भावः प्रागीत्यम् ॥ ग ॥

---

( १ ) न तदिति—यत्र प्रवुद्धाया धीमत्यास्तस्या दमयन्त्या बुद्धिर्मतिर्न व्यजृम्भत न विकासमभजत । तादृशं काव्यं कविकर्म, नाट्यमावस्थानुकृतिः, सा विद्या–अष्टादशभागमिता, कला च चतुःषष्टिभेदभिन्ना नास्ते । सर्वमपि तया विज्ञातव्यं ज्ञातमिति सारः ॥२८॥

( २ ) एवमिति—शैशव एव तस्याः वपुः कान्ततरं तारुण्यं यौवनं तस्यावतारः प्रादुर्भावस्तस्य प्राक्प्रारम्भेण प्रथमारम्भेणाभूष्यतेति प्रधानवाक्यम् । प्रत्यग्रो नवो घनसमयो वर्षाकालस्तत्र महीमण्डलमिव भूवलयमिव । अमन्दं विदलन् कन्दलकलापस्तेन विदलितानि विकचानि कोमलानि सुकुमाराणि कमलानि पद्मानि तेषां कान्तिसन्तानेन कान्तिकलापेन ।

( ३ ) परिहरतीति । यथा यथास्या दमयन्त्याः स्फुरन् विकसन् य ऊरुर्महान् कन्दलः कन्दस्तद्वच्छालत इति । वयोऽवस्था बालभावं शैशवं परिहरति । तथा तथा कामो धनुषो ज्यां प्रत्यञ्चां द्रढयति दृढां कुरुते । शरानपि बाणानपि स्पृशति । तारुण्ये सति कामाङ्कुरस्य प्रादुर्भाव इति फलितार्थः ॥ २९ ॥

अपि च ।

(१)मुञ्चन्त्याः शिशुतां भरादवतरत्तारुण्यमुद्राङ्कित-
स्फारीभूतनितान्तकान्तवपुषस्तस्याः कुरङ्गीदृशः ।
उन्मीलत्कुचकाञ्चनाब्जमुकुलं यूनां मुहुः पश्यतां
बाह्वोरन्तरमन्तरायसदृशा मन्ये निमेषा अपि ॥ ३० ॥

ततश्च ।

(२)तत्तस्याः कमनीयकान्तविजितत्रैलोक्यनारीवपुः
शृङ्गारस्य निकेतनं समभवत्संसारसारं वयः ।
यस्मिन्विस्मृतपक्ष्मपालिचलनाः कामालसा दृष्टयो
नो यूनां पुनरुत्पतन्ति पतिताः पाशे शकुन्ता इव ॥ ३१ ॥

अपि च ।

(३)आबध्नत्परिवेषमण्डलमलं वक्त्रेन्दुबिम्बाद्बहिः
कुर्वंश्चम्पकजृम्भमाणकलिकाकर्णावतंसक्रियाम् ।
तन्वङ्ग्याः परिनृत्यतीव हसतीवोत्सर्पतीवोल्बणं
लावण्यं ललतीव काञ्चनशिलाकान्ते कपोलस्थले ॥ ३२ ॥"

एतदाकर्ण्य राजा रञ्जितस्तत्कथया पुनरुदञ्चदुच्चरोमाञ्चकञ्चुकितकायस्तत्कालमेवान्तःस्फुरन्मन्मथमनोरथभरभज्यमानमानसस्तं हंसमपृच्छत् ॥

"पक्षिराज राजीववनावतंस हंस, पुनः कथ्यतां तस्याः संप्रति वयोवृ-

( १ ) मुञ्चन्त्या इति–शिशुतां शैशवावस्थां मुञ्चन्त्याः। यौवनप्रारम्भ इति भावः। अवतरत् प्रादुर्भवत् यत् तारुण्यं युवावस्था तदेव मुद्रा तयाङ्कितं चिह्नितं स्फारीभूतं स्फीतीभूतं नितान्तं कान्तं मनोहरं वपुः कायो यस्याः सा। कुरङ्गीदृशो मृगीक्षणायाः। तस्याः। दमयन्त्याः। उन्मीलन्तौ विकसन्तौ कुचावेवस्तनावेव, काञ्चनाब्जमुकुलौ सौवर्णपद्मकुड्मलौ यत्र तत्। बाह्वोरन्तरं भुजयोर्मध्यप्रदेशम्। कुचाविति भावः। मुहुः। पश्यतां विलोकयतां यूनां तरुणानां निमेषा अपि अन्तरायसदृशा कुचविलोकनविघ्नभूताः कर्मभूता मन्ये ॥ ३० ॥

( २ ) तत्तस्या इति—कमनीयं स्पृहणीयं, कान्तं रम्यं, विजितं निर्जितं त्रैलोक्यनारीणां त्रिलोकीस्थरमणीनां वपुः शरीरं येन तत्। तथा शृङ्गारस्यागारम्। संसारे सारभूतम्। तस्या दमयन्त्याः। तद्वयस्तारुण्यावस्था बभूव। यस्मिन्वयसि विस्मृतानि त्यक्तानीत्यर्थः। पक्ष्मपालीनां नेत्रलोमश्रेणीनां चलनानि स्फुरणानि याभिस्ताः। तथा कामालसा यूनां दृष्टय ईक्षणानि। पतिताः सत्यः, पाशे पतिताः शकुन्ताः पक्षिण इव पुनर्नो, उत्पतन्ति न निःसरन्ति ॥ ३१ ॥

( ३ ) आबध्नदिति वक्त्रेन्दुबिम्बाद्बहिर्मुखचन्द्रमण्डलाद्बहिः। परिवेषमण्डलं परिधिम्, आबध्नत् कुर्वदित्यर्थः। यथा चन्द्रमण्डले चन्द्रप्रभया परिवेषो जायते तथा मुखचन्द्रेऽपि कान्त्येति भावः। चम्पकानां जृम्भमाणा विकसन्ती या कलिका मुकुलस्तद्वत्कर्णावतंसक्रियां कर्णाभरणभूषाकर्म, कुर्वत्, चम्पकपुष्पं पीतं कपोलावपि सुवर्णप्रभौ. इति पीतत्वसाम्यादियमुक्तिः। एतादृशं तन्वङ्ग्याः कृशाङ्ग्या लावण्यं काञ्चनशिलावत् कान्ते रम्ये गण्डस्थले। परिनृत्यतीव हसतीव, उल्बणं प्रव्यक्तम्। उत्सर्पतीवोद्गच्छतीव। तथा ललतीव विलसतीव। "लड विलासे" इति भौवादिको धातुः। डलयोरभेदश्च। अत्रोत्प्रेक्षालङ्कारः ॥ ३२ ॥

त्तवृत्तान्तव्यतिकरः" ॥

इत्युक्तः पुनरेष तं बभाषे।

"देव, किमेकोऽस्मद्विधः पक्षी क्षीरतरङ्गधवललोचनां तां वर्णयेत् यस्याः सर्वदेवमय इवाकारो लक्ष्यते ॥ ख ॥

तथाहि।

सुतारा दृष्टिः, सकामाः कटाक्षाः, सुकुमाराश्चरणपाणिपल्लवाः, सुधाकान्ति स्मितम्, अरुणो दन्तच्छदः भास्वन्तो दन्ताः, सुकृष्णाः केशाः, प्रबुद्धा वाणी, (१)गौरी कान्तिः, गुरुः स्तनाभोगः, पृथ्वी जघनस्थली, सुरभिर्निःश्वासः, सुगन्धवाहः प्रस्वेदः, सश्रीकः सकलाङ्गभोगः ॥ क ॥

किं चान्यत्-

नक्षत्रमयीव निर्मिता विधिना ॥ ख ॥

तथाहि।

भद्रपदा ज्येष्ठा सुहस्ता पूर्वोत्तरा सार्द्रहृदया मूलं कंदर्पस्य ॥ ग ॥

किं बहुना।

(२)लावण्यातिशयः स कोऽपि मधुरस्ते केऽपि दृग्विभ्रमाः
सा काचिन्नवकन्दलीमृदुतनोस्तारुण्यलक्ष्मीरपि।
सौभाग्यस्य च विश्वविस्मयकृतः सा कापि संपद्यया
लग्नानङ्गमहाग्रहा इव कृताः सर्वे युवानो जनाः' ॥ ३३ ॥

सुतारेति। तारा कनीनिका देवी च। कामः अभिलाषः स्मरश्च। सम्यक् कामो येभ्यः। तुमः समश्च काममनसोर्मलोपः। सुकुमाराः कोमलाः। तथा महेन्द्रवत्कार्तिकेयोऽपि सुकुमारः। सुधावत्कान्तिरस्येति सुधाकान्ति शुभ्रं चन्द्रश्च। अरुण आरक्तो रविसारथिश्च। भास्वान् दीप्यमानः सूर्यश्च। कृष्णो मेचको विष्णुश्च। प्रबुद्धा व्युत्पन्ना। बुद्धः सुगतः गुरुर्विशालो बृहस्पतिश्च। पृथ्वी पृथुला भूश्च। सुरभिः सुगन्धिर्वसन्तश्च। गन्धवाहः परिमलवाही वायुश्च। श्रीः कान्तिर्लक्ष्मीश्च ॥ क ॥

भद्रेति ।। भद्रं पदं पादन्यासो यस्याः ज्येष्ठा प्रथमापत्यम्। शोभनौ हस्तौ यस्याः। पूर्वमुत्कृष्टमुत्तरं वचो यस्याः। सार्द्रमनिष्ठुरं हृदयमस्याः। कामस्य मूलं कारणम्। पक्षे भद्रपदा ज्येष्ठा हस्तः पूर्वा उत्तरा आर्द्रा मूलं नक्षत्राणि ॥ ग ॥

लावण्येति ।। नवकन्दलीवन्मृद्वी तनुर्वपुर्यस्याः ॥ ३३ ॥

(१) गौरीति—कान्तिर्गौरवर्णा। देवतापक्षे गौरी पार्वतीति ज्ञेयम्।

(२) लावण्येति—नवकन्दलीवन्मृद्वी तनुर्वपुर्यस्याः तस्याः। स कोऽप्यनिर्वचनीयो मधुरो लावण्यातिशयो लवणस्य भावो लावण्यं तदतिशयः सौन्दर्यातिरेकः। तथा ते केऽपि दृग्विभ्रमाः कटाक्षाः। तथा सा काचित् तारुण्यस्य लक्ष्मीः शोभा। अपि। विश्वेषां सर्वेषां विस्मयमाश्चर्यं करोतीति विश्वविस्मयकृत् तस्य। सौभाग्यस्य सा कापि सम्पत्। यया सम्पदा सर्वे युवानो जनास्तरुणाः। लग्नोऽनङ्ग एव काम एव महाग्रहो। राहुप्रभृतिग्रहो येषां ते तथैव कृताः ।। ३३ ।।

राजा—'ततस्ततः' ।

हंसः—'ततस्तस्याः पुनरिदानीं

(१)दूराभोगभरेण भुग्नगतिना श्लिष्टा नितम्बस्थली
धत्ते स्वर्णसरोजकुड्मलकलां मुग्धं स्तनद्वन्द्वकम् ।
आलापाः स्मितसुन्दराः परिचितभ्रूविभ्रमा दृष्टय-
स्तस्यास्तर्जितशैशवव्यतिकरं रम्यं वयो वर्तते ॥ ३४ ॥

तदेष तस्योः सकलयुवजनमनोमयूरवासयष्टेः समस्तसंसारसौन्दर्याधिदेवतायाः कथितो वृत्तान्तः ॥

किमन्यत् ।

(२)हरचरणसरोजाराधनावाप्तपुण्यः
परमसुकृतकन्दो वन्दनीयः स कोऽपि ।
अपि जयतु स यस्तां दुर्लभां लप्स्यतेऽस्मि-
न्निति कथितकथा सन्सोऽपि हंसो व्यरंसीत् ॥ ३५ ॥

इति श्रीत्रिविक्रमभट्टस्य कृतौ दमयन्तीकथायां हरचरणसरोजाङ्कायां तृतीय उच्छ्वासः समाप्तः ॥

---

इति विषमपदप्रकाशमेतं दमयन्त्यां तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥ १ ॥

इति श्रीचण्डपालविरचिते दमयन्तीकथाविवरणे तृतीय उच्छ्वासः समाप्तः ॥

---

( १ ) दूरेति—भुग्नास्खलिता गतिर्गमनं येन । दूराभोगभरेण विस्तृताभोगप्रदेशेन नितम्बस्थली नितम्बप्रदेशः । श्लिष्टा समालिङ्गिता । श्रोणीभारादलसगमनेति भावः । तथा मुग्धं सुन्दरं स्तनद्वन्द्वकं कुचद्वयम् । स्वर्णसरोजस्य काञ्चनपद्मस्य कुड्मलकलां मुकुलसुषमां धत्ते । स्मितेन मन्दहासेन सुन्दरा रमणीयाः, आलापा भाषणानि परिचितो विज्ञातो भ्रूविभ्रमो भ्रुवोर्विलासो याभिस्ताः दृष्टय ईक्षणानि । तर्जितो निराकृतः शैशवस्य बाल्यस्य व्यतिकरः सम्बन्धः समवायो वा येन तत् । रम्यं वयो तरुणावस्था वर्त्तते । अत्रोक्तानि सर्वाणि विशेषणानि तारुण्यारम्भसूचकानि ।

( २ ) हरेति—हरचरणसरोजयोराराधनेन सेवनेनावाप्तं समधिगतं पुण्यं सुकृतं येन सः । तथा परमसुकृतकन्दः पुण्यकन्दभूतः । स कोऽपि पुरुषो वन्दनीयः प्रणम्यः । किं च स जयतु यो जनस्तां दमयन्तीं लप्स्यते प्राप्स्यति । इत्येवं प्रकारेण कथिता कथा येन स हंसोऽपि व्यरंसीत् । तस्या वृत्तान्तकथनाद्विरेम इति भावः ॥ ३५ ॥

## चतुर्थ उच्छ्वासः ।

एवमेतदाकर्ण्य राजा तत्कालमाघूर्णितमाश्चर्येण, आकुलितमौत्सुक्येन, आमन्त्रितमुत्कण्ठया, कटाक्षितं कंदर्पेण, अभिवादितं रणरणकेन, ज्योत्कारितमाग्रहग्रहेण, पृष्टकुशलमकालतरलतया, स्वीकृतमस्वास्थ्येन, अवलोकितं चिन्तया चेतः स्वं स्वयमेव स्वस्थीकृत्य वितर्कितवान् ॥ ख ॥

प्रायः सैव भवेदेषा पान्थादश्रावि या मया ।
युगायितं विनिद्रस्य यत्कृते मे त्रियामया ।। १ ।।

तदेतन्मे

(१)तद्वार्तामृतपानार्थि भूयोऽपि श्रवणेन्द्रियम् ।
तृप्यते केनवानन्दकन्दे कान्ताकथानके ॥ २ ॥

तत्किमेनं पुनः पृच्छामि ॥ क ॥

नेदं नायकस्थानम् ॥ ख ॥

अतः संप्रति

(२)मण्डलीकृतकोदण्डः कामः कामं विचेष्टताम् ।
न व्यथिष्ये स्थितः स्थैर्ये धैर्यं धामवतां धनम्' ॥ ३ ॥

इति वितर्क्य विहसन्हंसमावभाषे—'साधु भोः सुभाषितामृतमहोदधे, साधु । श्रुतं श्रोतव्यम् । इदानीं भद्रभूयिष्ठो दिवसः । तद्वयं वयस्य, समासन्नांह्निकसमयाः समुचितव्यापारं साधयामः ।। ग ।।

भवतापि

(३)एताः सान्द्रद्रुमतलचलच्चक्रवाकीचकोराः

---

एवमेतदिति ॥ ख ।।

प्राय इति ।। यदर्थं मे मम विगतनिद्रस्य त्रियामया रात्र्या युगेनेवाचरितम् ।। या च पथिकान्मया श्रुता । सैवेयं हंसेनापि कथिता प्रायो भवेत् । युगं कृतयुगादि । त्रियामयेति त्रिसंख्यामितप्रहररात्रिवाचकत्वेन साभिप्रायम् । प्रायः शब्दो वितर्के ।।१।।

नेदमिति ।। नायकस्य ईदृशं स्थानं स्थितिरौचित्यं न भवतीत्यर्थः । यतो धैर्यं हि नायकपदं परमं वदन्ति ।। ख ।।

---

(१) तदिति—तस्या दमयन्त्या वार्तैवामृतं तस्य पानमर्थयत इति । श्रवणेन्द्रियम् आनन्दकन्दे कान्ताया कथैव कथानके कान्ताकथानके केन तृप्यते । अनेन पुनरपि तद्गुणश्रवणोत्कण्ठा प्रतीयते ॥ २ ॥

(२) मण्डलीकृतं सज्यीकृतं कोदण्डं कार्मुकं येन सः । कामः कामं यथेष्टं विचेष्टतां मत्पीडार्थमुद्युङ्क्ताम् । किन्तु स्थैर्ये स्थितोऽहं न व्यथिष्ये स्वधैर्यान्न प्रच्युतो भविष्यामि । 'व्यथ भयसंचलनयो, रिति भौवादिको धातुः । यतो हि धामवतां तेजस्विनां धैर्यमेव धनम् ॥ ३ ॥

(३) एता इति–सान्द्राः सघना ये द्रुमा वृक्षास्तेषां तलेषु अधः प्रदेशेषु चलन्त्यश्चक्र-

क्रीडावापीपरिसरभुवः स्थीयतां स्वेच्छयेति ।
यत्रोन्मीलत्कमलमुकुलान्याश्रयन्त्याः कुरङ्ग्यो
भृङ्गश्रेण्याः श्रवणसुभगं गीतमाकर्णयन्ति ॥ ४ ॥

अपिच

(१)अतिललिततरं तरङ्गभङ्गैरिदमपि तृड्भरवारि वारि वाप्याः ।
भ्रमदलिनिवहं वहन्ति यस्मिन्महिमकरं मकरन्दमम्बुजानि ॥५॥

त्वमपि भद्रे वनपालिके, (२)कृतकमलमालानितम्बकक्रीडमिममादाय भुक्तावसानास्थानगोष्ठीस्थितस्य मम समीपमेष्यसि' इत्यभिधाय राजा राजभवनमयासीत् ॥ घ ॥

गते च राजनि राजीविनीनां जीवितसमाः समास्वादयन्स्वादुकोमल मृणालकन्दलीः, दलयन्दलानि, कवलयन्बहलमधुरस्निग्धमुकुलानि, अनुशीलयञ्शीतलशैवलावलीः, विलासेन स हंसस्तरंस्तरङ्गान्तरेषु चिरं चिक्रीड ॥ क ॥

चिन्तितवांश्च 'तेन राज्ञा 'कृतकमलमालानितम्बकक्रीडमिममादाय मत्समीपमेष्यसि' इति श्लिष्टार्थमिवादिष्टा वनपालिका । तन्न युक्तमिह चिरं स्थातुमिति' ॥ ख ॥

इत्यस्थान एवाशङ्कमानः सह तेन राजहंसकदम्बकेनाम्बरतलमुदपतत् ॥ ग ॥

---

अतीति ॥ यस्मिन्वारिणि महिमकरं महात्म्यकरं भ्रमद्भृङ्गगणं मकरन्दं पद्मानि वहन्ति । तदिदं वाप्या वारि तरङ्गभङ्गैरतिचारुतरं वर्तते । किंविशिष्टम् । तृष्णातिशयं वारयतिछिनत्ति । पूर्ववृत्तक्रीडावापीभूकथनापेक्षयापिशब्दोऽत्र समुच्चये ॥ ५ ॥

चिन्तितवांश्चेति ॥ तेन राज्ञा इत्यमुना प्रकारेण श्लिष्टार्थमिव यथा भवति तथैव वनपालिकादिष्टा । इतीति किम् । यत् कृता कमलमालाया नितम्बके घनप्राये मध्यप्रदेशे क्रीडा येनेति राजाभिप्रायः । मालाशब्दगतस्त्रीत्वेन कमलमालायाः साक्षात्स्त्रीत्वाध्यवसायान्नितम्बशब्दः स्त्र्यवयवयोऽपि तदर्थमात्रे प्रयुक्तः । हंसेन त्वेवं प्रतीतम् । यथा कृतकं

---

वाक्याश्चकोराश्च यासु ताः । एताः क्रीडार्थं केलिनिमित्तं निर्मिता वा वापी दीर्घिका तस्याः परिसरभुवः प्रान्तस्थानानि सन्ति । अत्र स्वेच्छया स्थीयताम् । यत्र क्रीडावापीपरिसरभूषु कुरङ्ग्यः । उन्मीलन्ति विकसन्ति यानि कमलमुकुलानि कमलकोरकास्तानि आश्रयन्त्या उपदिशन्त्या भृङ्गश्रेण्या भ्रमरावल्याः श्रवणयोः कर्णयोः सुभगं सुन्दरम् । गीतं गानं शृण्वन्ति प्रदेशस्यास्य मनोविनोदोपयोगित्वं प्रत्याय्यते । मन्दाक्रान्तावृत्तम् ॥ ४ ॥

(१) अतीति । इदं वाप्याः तरङ्गभङ्गैर्वीचीकल्लोलैरतिमनोरमम् । तथा तृड्भरवारि तृषो भरमतिशयं वारयति तृड्भरवारि । 'ञितृष पिपासायाम्" इति दिवादिगणीयो धातुः । सम्पदादि क्विप् । अस्ति । यस्मिन् वारिणि । अम्बुजानि महिमकरं माहात्म्यकरं तथा भ्रमन् अलीनां भृङ्गाणां निवहो वर्गो यत्र तादृशं मकरन्दं वहन्ति दधति ॥ ५ ॥

(२) कृतेति—कृता कमलमालाया पद्मावल्या नितम्बेऽधःप्रदेशे क्रीडा केलिर्येन तम् । अत्र मालागतस्त्रीत्वेन तथा नितम्बपदेन च स्त्रीपुंव्यवहारो ध्वन्यते ॥

तत्र च व्यतिकरे दिवापि स्फारस्फुरत्तारामण्डलमिव, विकचनवकुव-लयवनगहनमिव, अन्तरान्तरोन्निद्रकुमुदखण्डमुड्डीनास्ते क्षणमशोभयन्त नभस्तलम् ।। ध ।।

अविलम्बिताश्च न चिरादवापुर्वैदर्भमण्डलमण्डनं कुण्डिनपुरम् ।।ङ ।।

अवतेरुश्च (१)चकितचलच्चक्रवाकालोक्यमानकृतान्धकारविभ्रमभ्रमद्भ्रम-रभरभज्यमानाम्भोजभाजि राजभवनासन्नकन्यान्तःपुरोद्यानक्रीडासरसि ।च।

सरभसप्रधावितेन सरस्तीरविहारव्यसनिना कन्यकाजनेन निवेदितां-स्तांनवलोकयितुमतिकौतुकेन दमयन्ती कन्यान्तःपुरात्पुराणमदिरारुणाय-ताक्षी क्षिप्रमाजगाम ।। छ ।।

आगत्य च (२)चटुलतरचरणचञ्चूप्रहारविदलितारविन्दकन्दलानु-त्तालबालनलिनीवनविहारिणस्तान्ग्रहीतुमेकैकशः सखीजनमादिदेश ।।ज।।

स्वयं च (३)चलवलयचारुरववाचालितप्रकोष्ठेन सविलासं विस्मयकरं करपल्लवेन तं राजपुत्री राजहंसमुच्चिक्षेप ॥ झ ॥

पाणिपङ्कजस्थित एव सोऽप्यभिमुखीभूय विभाव्य च चेतश्चमत्कारका-रिणमस्याः कान्तिविशेषमाशिषमदात् ॥ ञ ॥

(४)'कंदर्पस्य जगज्जैत्रशस्त्रेणाश्चर्यकारिणा ।
रूपेणानेन रम्भोरु दीर्घायुः सुखिनी भव ॥ ६ ॥

अपिच ।

(५)निर्माय स्वयमेव विस्मितमनाः सौन्दर्यसारेण यं
स्वव्यापारपरिश्रमस्य कलशं वेधाः समारोपयत् ।

---

कापटिकं वा । तथा अलमत्यर्थम् । आलानितं बद्धम् । तथा बकवत् क्रीडा यस्य । तादृशमिमं गृहीत्वा मत्समीपमायास्यसीति ॥ ख ॥

कंदर्पस्येति ।। रूपेणेत्युपलक्षणे तृतीया । रम्भावदूरू यस्याः । 'ऊरूत्तर—' इत्यूङि संबुद्धौ ह्रस्वत्वम् ॥ ६ ॥

निर्मायेति ।। दर्पमहंकारं पुरुषाः कं दधते । न कमपीत्यर्थः । स्त्रियः पुनः कंदर्पं

---

( १ ) चकितेति—चकिता अत एव चलन्त इतस्ततो गच्छन्तो ये चक्रवाकांस्तैर्विलो-क्यमानः, तथा कृतो योऽन्धकारस्य विभ्रमो भ्रान्तिस्तेन भ्रमन्तो ये भ्रमरास्तेषां भरस्तेन भज्यमानानि अम्भोजानि कमलानि वानि भजतीति । तथोक्ते ।

( २ ) चटुलेति—चटुलतराणां चरणचञ्चूनां प्रहारैर्विदलिता अरविन्दकन्दलास्तान् ।

( ३ ) चलेति । चलेन वलयेन यश्चारुरवो मधुरशब्दस्तेन वाचालितः प्रकोष्ठो यस्य स तेन ।

( ४ ) कन्दर्पेति—आश्चर्यकारिण विस्मयकारिण । कन्दर्पस्य कामस्य जगज्जैत्र-शस्त्रेण लोकजयनशीलशस्त्रभूतेन । अनेन रूपेण । दीर्घायुः । सुखवती च भव । "हे रम्भोरु" इति सम्बोधनम् ।। ६ ।।

( ५ ) निर्मायेति—वेधाः सौन्दर्यसारेण सौन्दर्यस्योत्कृष्टभागेन यं नलं स्वयमेव निर्माय

कंदर्पं पुरुषाः स्त्रियोऽपि दधते दृष्टे च यस्मिन्सति

द्रष्टव्यावधिरूपमाप्नुहि पतिं तं दीर्घनेत्रं नलम्' ॥ ७ ॥

दमयन्ती तु तस्मिन्क्षणे 'क्व संस्कृतवाचः पक्षिणो विवक्षितवाचश्च' इति मनसि विस्मयं भयं च, 'नामाप्याह्लादजननं नलस्य' इति वपुषि वेपथुं रोमाञ्चं च हृदयेऽनुरागमौत्सुक्यं च, समकालमुल्लोलायमानमुद्वहन्ती चिन्तयांचकार ॥ ग ॥

'सोऽयं यस्तेन पान्थेन यान्त्या गौरीमहोत्सवे ।

नलोऽप्यनल एवासीद्वर्णितो मे पुरः पुरा' ॥ ८ ॥

अथास्याः सखी परिहासशीला नाम नाम्नैव नलस्योद्भिन्नबहलपुलकाङ्कुरामिमामवलोक्य नर्मालापमकरोत् ॥ घ ॥

कोष्णं किं नु निषिच्यते तव बलातैलं सखि श्रोत्रयो-

रन्तस्तित्तिरिपक्षिपत्त्रमथवा मन्दं मृदु भ्राम्यति ।

येनाङ्गेषु निखातमन्मथशरप्रस्फारपिच्छच्छवि-

नीलीमेचकितोच्चकञ्चुकरुचं रोम्णां वहत्युद्गमः ॥ ६ ॥

दमयन्ती तु तस्याः सवैलक्ष्यस्मितमेवोत्तरं कल्पयन्ती शनैः शिरःकम्पतरलितावतंसोत्पला सलज्जा चलद्विलोचनान्तेन तामतर्जयत् ॥ क ॥

अवादीच्च तं राजहंसम् 'अहो महानुभाव, सर्वथाश्चर्यहेतुरसि ॥ ख ॥ तथाहि ।

द्रष्टव्यानुरूपं रूपम्, महाश्चर्यगर्भाः प्रपञ्चितवाच्या वाचः, सूचितसंस्कारातिरेको विवेकः, सौजन्याश्रयः प्रश्रयः, निष्कारणोपकारधात्री मैत्री ॥ ग ॥

तत्त्वमनेकधा जनितविस्मयो बहु प्रष्टव्योऽसि ॥ घ ॥

---

मन्मथं दधते । सकामा भवन्तीत्यर्थः । अपिः पुनरर्थे समुच्चये वा ॥ ७ ॥

सोऽयमिति ।। यो नलः सः कथमनलः । परिहारे त्वनलो वह्निः । स्मरसंतापहेतुत्वात् ॥ ८ ॥

कोष्णमिति ।। सखीत्यामन्त्रणे । न्विति वितर्के । तव कर्णयोर्मध्ये किं बलातैलं निषिच्यमानमस्ति । किं वा मृदुतित्तिरिपिच्छं मन्दं भ्रमदस्ति । येन हेतुना । अङ्गेषु शरीरावयवेषु । निमग्ना ये कामशराः तेषां प्रस्फाराणि पिच्छानि तद्वच्छविर्यस्य स तथोक्तो रोम्णामुद्गमो रोमाञ्चो नील्या ओषधिविशेषेण मेचकितस्य श्यामलितस्य उच्चकञ्चु-

---

विरचय्य विस्मितमनाः साश्चर्यमानसः सन् स्वव्यापारस्य स्वकर्मणः, परिश्रमस्य श्रमस्य कलशं समारोपयामास । यथा सुन्दरं मन्दिरं निर्माय पुनस्तस्य शिखरोपरि कशलं स्थाप्यते तद्वदिति भावः । यस्मिन्तले दृष्टे सति पुरुषा कंदर्पं गर्वं दधते । न कमपि गर्वमित्याशयः । स्त्रियश्च कन्दर्पं कामं दधते । तं द्रष्टव्यावधिरूपं रूपावधिभूतमिति यावत् । दीर्घनेत्रं दीर्घेक्षणं, दीर्घवक्षं वा तं पतिं प्राप्नुहि ॥ ७ ॥

किं तु प्रस्तुतं पृच्छामः ॥ ङ ॥

कथय। कोऽयमात्मरूपसम्भावितकंदर्पदर्पदावानलो नलो नाम ॥ च ॥

यस्यैतानि (१)मन्दरमथनक्षणक्षुभितक्षीरसागरतरङ्गभ्रमभ्रान्तिभाञ्जि भ्रमन्ति यशांसि' ॥ छ ॥

इत्येवमुक्तः सोऽपि 'सुन्दरि, यद्येवमुपविश्यताम्। अवधीयतां मनः। श्रूयतां सविश्रब्धम्' इत्यभिधाय कथयितुमारब्धान् ॥ ज ॥

'अस्ति समस्तसुरासुरलोककर्णपूरीकृतकान्तकीर्तिकुन्दकुसुमः, कुसुमायुधरूपरमणीयदेहप्रभः, प्रभावयुक्तो विप्रभावश्च, शुचिरनुपतापकारी च, घनागमसमयो न वारिबहुलश्च, शिशिरस्वभावो न जाड्ययुक्तश्च, रामः कुशलवयोरामणीयकेन, जनको वैदेहभागेन, नैषधः प्रजानां पतिः, विरञ्चिरिव नाभिभूतः समरे, वीरो वीरसेनो नाम ॥ क ॥

यस्य च बहुशोभयाङ्गप्रभया सह स्फुरत्युदारा मनोवृत्तिः, अखण्डनयाज्ञया सदृशी राजते राज्यस्थितिः, सज्जया सेनया सह श्लाघनीया कृपाणयष्टिः ॥ ख ॥

यश्च सशृङ्गारो नारीषु, वीरो वैरिषु, बीभत्सः परदारेषु, रौद्रो द्रोहिषु, सहास्यो नर्मालापेषु, भयानकः संग्रामाङ्गणेषु, सकरुणः शरणागतेषु ॥ग॥

---

कस्य कान्तिं दधाति। प्रस्फारत्वं पिच्छानामप्रवेशे हेतुः। अन्यथा शरेषु प्रविष्टेषु पिच्छान्यपि कथं न प्रविष्टानि तेन पिच्छच्छविरिति कविराचष्टे ॥ ९ ॥

अस्तीति ॥ प्रभावो माहात्म्यम्। विप्राणां भां तेजोऽवतीति। विरोधे विरूपेतार्थः। शुचिः पुण्यम्। विरोधे तु ग्रीष्मः। यद्विश्वप्रकाशः—'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः' इति। 'ग्रीष्मे हुतवहेऽपि' इति ॥ घनः प्रचुर आगमः सिद्धान्तो यस्य। वा समुच्चये। अरिः शत्रुः। विरोधे घनागमसमयो वर्षाकालः। स च वारिबहुलो भवति ॥ शिशिरः शीतो माघफाल्गुनौ च। जाड्यं मौर्ख्यं हिमं च। इत्युष्णवर्षाशीतकालव्यतिरेकः। तथा कुशलेन चतुरेण वयोवस्थासौन्दर्येण रामश्चारुः। तथा विदेहा देशास्तेषामयं वैदेहो भागस्तेन जनकाख्यनृपतिप्रतिमः। अन्यत्र रामो दाशरथिः। वै वितर्के। देहस्य भां कान्तिं गच्छति व्याप्नोति इति कृत्वा डप्रत्यये देहप्रभावेन शरीरकान्त्यनुहारिणा रामणीयकेन सौन्दर्येण। कुशस्य लवस्य च जनको जनयिता। नैषधो निषधदेशीयः प्रजापती राजा। समरे युद्धे न कदाचिदभिभूतः। विरञ्चिस्तु विष्णुनाभेर्भूतो जातः ॥ क ॥

यस्य चेति ॥ अत्र प्रथमातृतीययोः श्लेषः। बहुश इति भिन्नम्। अभया भयरहिता। तृतीयान्ते बह्वी शोभा यस्यां तया। तथा अखण्डो नयः षाड्गुण्यं यस्याम्। तृतीयायां न खण्डनमस्याः। तथा सच्छोभनो जयो यस्याः। सेनापक्षे सज्जया प्रवणया ॥ ख ॥

---

(१) मन्दरेति—मन्दरमथनक्षणे क्षुभितश्चालितः क्षीरसागरस्तस्य तरङ्गाणां वीचीनां भ्रमो भ्रमणं तस्य भ्रान्तिं भजन्तीति तानि।

यस्य च (१)चतुरुदधितटीटीकमानशरच्चन्द्रविशदयशोराशिराजहंसस्य, निस्त्रिंशता कृपाणेषु, कुचातुर्यं कलत्रेषु, कूपदेशसेवा पापर्धिकेषु, लुब्धकपर्यायः कैवर्तकेषु, तीक्ष्णता शस्त्रेषु, धर्मच्छेदो धनुर्विद्यायाम् ।। घ ।।

एवमस्य हरस्येव करस्थं कृत्वाशेषमण्डलमनवरतविख्यातविजयाभिनन्दिनः, सुन्दरकैलासनाभिरम्यवनान्तरेषु विहरतः, मदननिरुद्धनैषधीपीनोच्चकुचकुम्भावष्टम्भमसृणितवक्षःस्थलस्य सुखेनाभिक्रामन्ति दिवसाः ॥क॥

(२)कदाचिच्चतुरुदधिवेलावलयितवसुंधराविख्यातमपत्यमभिलषन्ननादरचरणाङ्गुष्ठनिष्ठ्यूतकैलासोन्मूलनागतपतद्दशवदनविरसविरुतविहसितामरमण्डलीमहितमहिमानमनवरतविरञ्चिरचितविचित्रनामसामवस्तुस्तुतिमनवरतसकललोककल्याणकामधेनुमनुपमवर्चसमर्चयांचकार भगवन्तमम्बिकापतिम् ।। ख ।।

अतिभक्तितोषितहरलब्धवरश्च निरूपमरूपयानुरूपया रूपवत्यभिधानयाप्रधानया प्रियया सह मकरकेतनकेलिफलमनुभवन्नतिचिरमासांचक्रे ।।ग॥

अतिक्रामति तु कियत्यपि समये संपन्नसत्वा समपद्यत रूपवती ।।घ।।

तेन च समस्तसंसारवस्तूद्धृतकान्तिकणकलितगर्भारम्भेण, नारायण-

---

यस्य चेति ।। निस्त्रिंशता खड्गत्वम् । कुचाभ्यामातुर्यं दुर्वहभरत्वात् । कूपप्रदेशस्य सेवामृगयाभ्यासेषु तथा लुब्धक इति 'पर्यायः एकार्थं शब्दान्तरम्' । तथा धर्मनामा धुभो यन्मयं धनुर्विधीयते । तस्य च्छेदः कर्तनम् । कृपाणादिष्वेव निस्त्रिंशतादीनीति परिसंख्योक्त्या न तस्येति शेषः । तस्य राज्ञो न । निस्त्रिंशता क्रूरकर्मत्वम् । कुत्सितं चातुर्यम् । तथा कुत्सित उपदेशो येषां तेषां दाम्भिकानां सेवा । तथा कुत्सितो लुब्धो लुब्धकः। तस्य पर्यायः परिणामः । तीक्ष्णता आयःशूलिकत्वम् । धर्मस्य पुण्यस्य च्छेदः ॥ घ ॥

एवमस्येति ।। करे रजभागे स्थितमशेषं मण्डलं देशम् । अनवरतप्रथितविजयैर्हृष्टस्य । कं जलम् । एला लता । असनः पीतमालः । तैः सुन्दरैरभिरम्येषु काननविशेषेषु । विचरतस्तस्य सकामनिषधस्त्रीपीनोच्चकुचकुम्भयोरवष्टम्भेन मसृणितं वक्षःस्थलं यस्य तथोक्तस्य सतः सुखेन यान्ति दिवसाः । विहरणकृतमिह हरेण सहौपम्यम् । तदा । करः पाणिः । शेषाख्यो नागः । तस्य मण्डलं कुण्डलाकारं वपुः । विजया गौरीसखी । नन्दी हरप्रतीहारः । कैलासो गिरिः । नाभिर्मुख्यार्थः ॥ क ॥

कदेति ।। निष्ठ्यूतं निरसनम् । 'निष्ठापितम्' इति पाठे तु निःशेषेण स्थापनम् ।

---

(१) चतुरुदधिरिति—चतुर्णामुदधीनां सागराणां तटीषु टीकमानो गच्छन् शरच्चन्द्रवत् शरदिन्दुवद् विशदो यो यशोराशिः कीर्तिव्रजो राजहंस इव यस्य स तस्य ।

(२) कदेति—अम्बिकापतिमर्चयांचकारेति प्रधानवाक्यम् । अनादरणे चरणाङ्गुष्ठेन पादाङ्गुष्ठेन निष्ठ्यूतो निरस्तः कैलासोन्मूलनार्थं कैलासोत्पाटनार्थमागतः पतंश्च यो दशवदनो रावणस्तस्य विरसरुतेन नीरसशब्देन विहसिता यामरमण्डली । देवमण्डली तया महितो महिमा यस्य तम् ।

नाभिरिव विरञ्चोत्पत्तिकमलकन्दबन्धेन, कल्पपादपलतेव पल्लवारम्भोच्छ्वासेन, मनाङ्मेदुरितोदरा रराज राजीवनयना राजपत्नी ॥ घ ॥

क्रमेण च मेचकोच्चचूचुककुचकुम्भकपोलिपाण्डिम्ना निह्नयन्ती मृगलाञ्छनच्छायमवाञ्छदच्छामृतपयः पिष्टमूर्तिमन्मधुसमयमदनमृगाङ्कमण्डलरसेनात्मानमालेप्तुम् ॥ क ॥

अग्रतः सखीजनविधृतमपास्य मणिमयमुकुरमण्डलमन(१)वरतनिशानिर्मलकरवालतलेष्वात्ममुखकमलमवलोकयांचकार ॥ ख ॥

निरस्य नीलोत्पलमजरठकण्ठीरवकण्ठकेसरस्तबकमकरोत्कर्णावतंसम् ॥ ग ॥

अतिबहलकुङ्कुमाङ्ककस्तूरिकापङ्कमपहाय मत्तमातङ्गमदकर्दमेन निजभुजशिखरयोर्विरचयांचकार विचित्रपत्रभङ्गान् ॥ घ ॥

एवमन्तःस्फुरद्गर्भानुरूपदोहदसुखमनुभवन्ती कदाचिदुच्चस्थानस्थिते सौम्यग्रहग्रामे, महाराजजन्मोचितेऽह्नि शुभसंभारकारणायां कालवेलायां जातप्राये प्रभाते प्रभाप्रतानजनितपरिवेषमशेषतेजस्वितेजःपुञ्जापहारिणमालोहितपादपल्लवोल्लसितपङ्कजच्छायम्, द्यौरिव रविमण्डलम्, उन्नमन्मेघमालेव विद्युल्लोलम्, अरणिरिव वितानवैश्वानरम्, नरपालप्रिया प्रीणितगोत्रं पुत्रमजीजनत् ॥ ङ ॥

तत्र च दिवसे

> सांशुकोन्नतवंशस्य तस्य राज्ञः पुरस्य च ।
> बभूव लक्ष्मीः सा कापि यया स्वर्गोऽपि निर्जितः ॥ १० ॥

---

अविरतम् । विचित्रनामभिर्भर्गभगवत्त्रिनेत्रादिभिः । सामवेदार्थैश्च । विरञ्चेन विरचितस्तुतिम् ॥ ख ॥

क्रमेणेति ॥ कुचकुम्भस्य चन्द्रमाः । मेचकचूचुकस्य लाञ्छनमुपमानम् ॥ अच्छममृतमेव यत्पयो नीरं तेन पिष्टो घृष्टो योऽसौ मूर्तिमतां मधुसमयमदनमृगाङ्कमण्डलानां रसः तेनालेप्तुमात्मानमियेष ॥ क ॥

एवमन्तरिति ॥ द्यौरपि प्रगेरविमण्डलं जनयति । तमपि दीक्षिततिकृतवेष्टनम् । तथा समस्तदीपप्रभृतितेजस्वितेजोमुषम् । पादाः किरणाः । पुत्रपक्षे आ ईषत् लोहितौ पादपल्लवौ तयोरुल्लसितपङ्कजवच्छाया यस्य । तथा विद्युतां लोलनं लोलो विलासः । मण्डलः पुंस्यपि ॥ ङ ॥

सांशुकेति ॥ राज्ञः पुरस्य च सा काचिदजनि शोभा । यथा स्वर्गच्छतीति कृत्वा स्वर्गो देवः स्वर्गलक्षणो लोकश्च जितः अंशुना रविणा सह सांशुक उन्नतो वंशो यस्य ।

---

(१) अनवरतेति—अनवरतं निरन्तरं निशानिर्मलः शाणसंस्कारेण प्रोज्ज्वलन् यः करवालः खड्गस्तस्य तलेषु । अनेन भाविनः सूनोः शूरत्वं प्रबोध्यते ॥

अपिच ।

सवृद्धबालाः कालेऽस्मिन्मुक्ताहारविभूषणाः ।
प्राप्ताःप्रीतिं पुरे पौरा वनेषु च तपस्विनः ॥ ११ ॥

सूतीगृहे च

अलंकृतनिशान्तेन तरुणारुणरोचिषा ।
प्रदीपानां प्रभा तेन प्रभातेन यथा जिता ॥ १२ ॥

चिरात्पल्लवितं राजवंशेन, समुच्छ्वसितं राज्यश्रिया, प्रीतं प्रणयिभिः, प्रनृत्तं पौरैः, प्रमुदितं बान्धवैः, विद्राणं द्रोहिजनैः, उन्नदितं वियत्यद्दष्टमङ्गलवादित्रैः, चित्रायितमतिबहलपरिमलपतत्पुष्पवृष्ट्या, विकसितं दिग्वधूवदनारविन्दैः, विलसितमतिसुरभिसुखस्पर्शसमीरणेन, स्वच्छन्दायितं वन्दीकृताराातिरमणीभिः, आढ्यायितमर्थिलोकेन ॥ क ॥

किं बहुना ।

अवृष्टिनष्टधूली(१)कमशरन्निर्मलाम्बरम् ।
अपीतमत्तलोकं च जगज्जन्मोत्सवेऽभवत् ॥ १३ ॥

भूते च त्रिभवभूयिष्ठे षष्ठीजागरणव्यतिकरे, अतिक्रान्तेषु च सूतकदिवसेषु नामकरणोचितेऽह्नि 'न लास्यति धर्मधनान्येष साधुभ्यः' इति ब्राह्म-

रवेर्वंशस्य च तुल्यमुदयनमिष्टम् । प्रगे तस्याप्युदितत्वात् । पुरं च सपताकोच्छ्रितवेणुकम् ।। १० ।।

सवृद्धेति ।। वृद्ध पितामहादिः बालः पुत्रादिः । ताभ्यां सह । मौक्तिकहारालंकरणाः पौराः । मनयस्तु सवृद्धकेशाः कूर्चादिरसंस्कारात् । तथा मुक्ता आहारा यैः । तथा व्यपेतभूषाश्च ।। ११ ।।

अलमिति ।। येन प्रभातेनेव प्रदीपानां प्रभा जिग्ये । अलंकृतं निशान्तं गृहं येन । तथा तरुणारुणो मध्याह्नार्कस्तद्वद्रोचिर्यस्य । अत एव दीपप्रभा निष्प्रभा । महात्मनां हि भूयिष्ठेन तेजसा दीपप्रभाप्यभिभूयते । प्रभातेन तु अलमत्यर्थम् । तरुणया नूतनया अरुणस्य रविसारथे रोचिषा । कृतो निशाया रात्रेरन्तो येन । यदि वा अरुणरोचिषा लोहितकान्तिना तरुणोपलक्षितेन प्रभातेन तत्समये हि दिनकरकरस्पर्शतस्तरवो रक्तीभवन्ति१२

चिरादिति ।। चित्रायितं भक्तिविशेषविन्यासायितम् । कुमारजन्मोत्सवे गुप्तीनां मोक्षणाद्वन्दीनां स्वाच्छन्द्यम् । आढ्यत्वे त्यागातिशयो हेतुः ॥ क ॥

अवृष्टीति ।। वृष्ट्या हि धूली नश्यति । शरदा घोरमलता । पानेनोन्मादाः । यच्चेदृशं तदन्तरेणापि जगदजायत स तदुत्पत्तिप्रभावः ॥ १३ ॥

भूतेचेति ।। प्रविश्येति । निमित्तात्सामुद्रिकलक्षणाज्जन्मलग्नाद्वा साधूनां धनाग्रहणे

(१) धूलिविनाशे वृष्टिर्निमित्तम् । तदभावेऽपि धूलिविनाशकार्यकथनाद्विभावनालङ्कारः ॥ १३ ॥

णाः प्रविश्य तस्य 'नलः' इति नाम प्रतिष्ठापयामासुः ॥ क ॥

क्रमेण च चतुरुदधिवेलावनविकासोचितकीर्तिकुन्दकन्दलैर्विश्वविश्वंभराभिलम्भलम्पाकैः कुमारसेवकैरिव सकलचक्रवर्तिचिह्नैरलंकृतावयवा विस्तरजटालवालः कल्पपादपाङ्कुर इव वर्धितुमारभत ॥ ख ॥

विरचितचूडाकरणादिसंस्कारक्रमश्च प्राप्ते विद्याग्रहणकाले निमित्तमात्रीकृतोपाध्यायः स्वयमेव समस्तानवद्यविद्याम्भोनिधेः परं पारमवाप ॥ग॥

तथाहि—

(१)प्रबुद्धबुद्धिर्बौद्धे, सविशेषशेमुषीको वैशेषिके, विख्यातः सांख्ये, रञ्जितलोको लोकायते, प्राप्तप्रभः प्राभाकरे, प्रतिच्छन्दकश्छन्दसि, अनल्पविकल्पः कल्पज्ञाने, शिक्षाक्षमः शिक्षायाम्, अकृतापशब्दः शब्दशास्त्रे, अभियुक्तो निरुक्ते, सज्ज्ञो ज्योतिषि, तत्त्ववेदी वेदान्ते, प्रसिद्धः सिद्धान्तेषु, स्वतन्त्रस्तन्त्रीवाद्येषु, पटुः पटहे, अप्रतिमल्लो झल्लरीषु, निपुणः पणवेषु, प्रवीणो वेणुषु, चित्रकृच्चित्रविद्यायाम्, उद्दामः कामतन्त्रे, कुशलः शालिहोत्रे, श्रेष्ठः काष्ठकर्मणि, सावलेपो लेप्ये, पण्डितः कोदण्डे, शौण्डः शारिषु, गुणवान्गणिते, बहुलो बाहुयुयुद्धेषु, चतुरश्चतुरङ्गद्यूतक्रीडायाम्, उपदेशको देशभाषासु, अलौकिको लोकज्ञाने ॥ घ ॥

---

अन्तर्मुखमभिप्रायमाश्रित्येत्यर्थः ॥ क ॥

क्रमेणेति ॥ कुमारसेवका युवराजानुचराः । तदुपमैः राजचिह्नै रेखाकृतैश्चक्रचापकुलिशादिभिर्भूपिताङ्गः । तथा विस्तरन्तो जटालाः स्वभावजटाबन्धा बालाः कचा यस्य । वृत्तचूडाकरणस्य हि केशा विजटीभवन्ति । कल्पवृक्षस्तु प्रसरन्मूलालवालः ॥ ख ॥

प्रबुद्धेति ॥ चित्रवृत्तलक्षणं छन्द । कल्पः पितृदेवताद्याराधनविधिशास्त्रम् । अकारादिवर्णजन्मस्थानानां बोधिका शिक्षा । अन्वयस्य प्रकाशकं निरुक्तम् । अतीन्द्रियशुभाशुभकर्मणां प्रकाशकं ज्यौतिषम् ॥ घ ॥

---

( १ ) प्रबुद्धेति—लोके आयतन्त इति लोकायताश्चार्वाकाः । यती प्रयत्ने । पचाद्यच् । लोकायतानामिदं लोकायतं शास्त्रम् । अत्र संज्ञापूर्वकत्वान्न वृद्धिः । तत्र लोकायते । प्राभाकरं मीमांसाशास्त्रम् । प्रभाकरनामा मीमांसाशास्त्रे निपुणो विद्वानासीत् । तेन तन्नाम्ना तच्छास्त्रमभिधीयते । शालिहोत्रेऽश्वचिकित्साशास्त्रे कुशलः । शालिहोत्रो नाम कश्चिन्मुनिरश्वपरीक्षादक्षो बभूव । तेनाद्यापि तन्नाम्ना तच्छास्त्रमुच्यते । यथोक्तं—

'पुरा सपक्षा हरयो विचेरुः खेचराः किल ।
गन्धर्वेभ्यः समुत्पन्नाः सदा स्वच्छन्दचारिणः ॥ १ ॥
तेजोवाय्वम्बुमृगजैलवैर्लक्षितलक्षणान् ।
वीक्ष्य शक्रं जगादेदं शालिहोत्रो महामुनिः ॥ २ ॥
छिन्धि पक्षानमीषां त्वं यथा स्युर्वाहनानि मे ।
इषीकास्त्रेण सोऽप्येषां पक्षांस्तत्प्रीतयेऽच्छिनत् ॥ ३ ॥
ततः प्रसादितस्तैस्तु प्रादाद्वरमिमं मुनिः ॥
युष्मत्पक्षोपमो वेगश्चरणानां भविष्यति ॥ ४ ॥ इत्यादि शालिहोत्रग्रन्थे ।

किं बहुना—

(१)रसे रसायने ग्रन्थे शस्त्रे शास्त्रे कलास्वपि ।
नले न लेभिरे लोकाः प्रमाणं निपुणा अपि ॥ १४ ॥

क्रमेण शैशवमतिक्रामतोऽस्य सेवकैरिवङ्गावयवैरप्यनुवृत्तिः कृता ॥क॥

तथाहि—

(२)श्रवणासक्तस्य लोचनद्वयमपि श्रवणसंमतिमकरोत् ॥ ख ॥

उन्नतस्वभावस्य नासावंशोऽप्युन्नतिं जगाम ॥ ग ॥

वक्रोक्तिकुशलस्य केशकलापोऽपि वक्रतां भेजे ॥ घ ॥

शङ्खनिर्मलगुणस्य कण्ठोऽपि शङ्खाकारमधारयत् ॥ ङ ॥

पृथुलमतेरंसकूटद्वयमपि पृथुलमभूत् ॥ च ॥

प्रमाणवेदिनो वक्षःस्थलमपि सुप्रमाणमजायत ॥ छ ॥

मध्यस्थस्य तस्य रोमराजिरपि मध्ये स्थिता शुशुभे ॥ ज ॥

सुवृत्तस्य बाहूरुयुगलमपि सुवृत्तमभवत् ॥ झ ॥

गम्भीरप्रकृतेर्नाभिरपि गम्भीरा व्यराजत ॥ ञ ॥

पल्लवसुकुमारहृदयस्य हस्तचरणौरपि पल्लवसौकुमार्यमङ्गीकृतम् ॥ ट ॥

अथ किं बहुना—

(३)सोष्णीषमूर्धा ध्वजचक्रपाणिरूर्णाङ्कविस्तीर्णललाटपट्टः ।

---

रस इति ॥ रसः पारदः । रसायनं जरामरणापह औषधयोगः । ग्रन्थः काव्यशास्त्रादिरचना । शस्त्रं खड्गादि । शास्त्रं व्याकरणतर्कादि । कला गीतनृत्यादयः । एतेषु निपुणा अपि सन्तो लोका नले राज्ञि प्रमाणमियत्तां न प्रापुः ॥ १४ ॥

श्रवणेति ॥ श्रवणे शास्त्राकर्णने आसक्तः । श्रवणसंगतिः कर्णसंगतिः ॥ ख ॥

पृथुलेति ॥ असंकूटेति कूटशब्दः शिखरार्थः ॥ च ॥

प्रमाणेति ॥ प्रमाणं तर्कशास्त्रं मानं च ॥ छ ॥

मध्येति ॥ मध्यस्थोऽकृतपक्षपातः । अन्यत्र मध्ये उदरे तिष्ठतीति ॥ ज ॥

सुवृत्तेति ॥ वृत्तं शीलं वर्तुलं च ॥ झ ॥

गम्भीरेति ॥ गम्भीरप्रकृतिरलक्ष्यकोपप्रसादः । निम्ना च गम्भीरा ॥ ञ ॥

सोष्णीषेति ॥ उष्णीषाकारं शारीरिकं लक्षणमुष्णीषम् । ऊर्णा भ्रूमध्ये शुभरो-

---

(१) रस इति—रसः शृङ्गारादिः पारदादिर्वा । पारदादिरसेन मोक्षप्राप्तिरिति रसेश्वरदर्शने विदितमेव । माधवीयसर्वदर्शनसंग्रहे च रसेश्वरदर्शनं विलोकनीयम् । तस्मिन् रसे । रसायने, ग्रन्थे, शस्त्रे, शास्त्रे, कलाश्चतुःषष्ठिः । तास्वपि । निपुणा अपि लोकाः । नले विद्यापारिमित्यं न लेभिरे ॥ १४ ॥

(२) श्रवणेति—शास्त्रश्रवणम् । यथा—"आत्मा वारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च" इति श्रुतिः ।

श्रोतव्यः श्रुतिवाक्येभ्यः मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः ॥ इति स्मृतिश्चात्रोपयुक्ता ।

(३) सोष्णीषेति—सोष्णीष उष्णीषाकारलक्षणसहितो मूर्धा शिरो यस्य सः ।

सुस्निग्धमूर्तिः ककुदुन्नतांसः कस्यैष न स्यान्नयनाभिरामः ॥१५॥

अपि च—

(१)आस्यश्रीः संनिभेन्दोः समदवृषककुद्बन्धुरः स्कन्धसंधिः
स्निग्धा रुक्कुन्तलानामनुहरति दृशोर्द्वन्द्वमिन्दीवरस्य।
स्थानं वक्षोऽपि लक्ष्म्याः, स्पृशति भुजयुगं जानुनी, वृत्तरम्ये
जङ्घे, क्षामोऽवलग्नः, किमु निषधपतेः श्लाघनीयं न तस्य ॥१६॥

अस्ति च तस्य नरपतिसूनोः समानशीलवयोविद्यालंकारकान्तिकलापपरिपूर्णदेहः शरीरमात्रद्वितीयोऽप्यद्वितीयहृदयमेकं जीवितमपर उच्छ्वासः सालङ्कायनसूनुः श्रुतशीलो नाम मन्त्री मित्रं च ॥ क ॥

एकदा तु (२)पूर्वदिग्वधूकुङ्कुमपङ्कपल्लवितवदनायमाने निरुद्धान्धतमसे सौगन्धिकबन्धुनि बन्धूककुसुमारुणे वियति तरतीव तरुणतरे तरणिमण्डले, मण्डयति कुसुम्भकुसुमकेसरप्रकरायमाणे गगनाङ्गणमम्भोजमुकुलनिद्रामुषि रोचिषां चये, चलिते च विचारतुमुपवनतरुराजिकर्णोत्पले निद्राविरामविधुतपक्षे पक्षिकुले, कृतप्राभातिककर्मणः सभाङ्गणमण्डपमध्यवर्तिनो दत्तसेवावसरस्य राज्ञः प्रविष्टे मन्त्रिणि सालङ्कायने, प्रणामपर्यस्तकर्णोत्पलधवलितसभाङ्गणे यथासनमुपविष्टे प्रस्तुतसेवालापरञ्जितराजनि राजन्यचक्रे, प्रक्रान्ते शास्त्रीयविनोदे, श्रुतशीलेन सममन्यैश्च क्रीडासहायैरनुचरैरनुगम्यमानो नलः सेवासुखमनुभवितुमागतवान् ॥ ख ॥

आगत्य च क्षितितलमिलन्मौलिमण्डलः प्रणम्य पितुः पादारविन्दद्वयमदूरदत्तमासनं भेजे ॥ ग ॥

मावर्तः ॥ १९ ॥

अस्तीति ॥ अपर उच्छ्वास इति । न परोऽस्मादित्यपर उत्कृष्टः ॥ क ॥

ध्वजं चक्रं च पाणौ यस्य सः। ऊर्णाङ्कयुतो विस्तीर्णश्च ललाटपट्टोऽलिकपट्टो यस्य। सुस्निग्धो मसृणा मूर्त्तिराकारो यस्य। ककुदवदुन्नतावंसौ यस्य। एतादृशो नलः कस्य नयनाभिरामो न स्यात्। सर्वेषामेव स्पृहणीयमूर्तिरित्याशयः ॥ १९ ॥

( १ ) आस्येति—इन्दोः संनिभा समाना वदनद्युतिः। समदो यो वृषः। तस्य ककुद्वत्, बन्धुरो मनोरमः। स्कन्धसंस्था। कुन्तलानां केशानां रुक्कान्तिः स्निग्धा मसृणा। तथा दृशो रुक् कान्तिः। इन्दीवरस्य नीलकमलस्य द्वन्द्वं युगलमनुहरति अनुकरोति। वक्षस्थलमपि लक्ष्म्या आस्पदम्। भुजयुगं करयुगलम्। जानुनी कर्मणी स्पृशति। वृत्ते रम्ये च जङ्घे। अवलग्नो मध्यदेशः क्षामः कृशः। निषधाधिपतेस्तस्य किमु न श्लाघनीयम्। सर्वमेव श्लाघ्यमिति भावः। अत्र श्लोके सामुद्रिकशास्त्रानुसारेण प्रत्यवयवश्लाघा विहिता कविना वास्तविकी ॥ १६ ॥

( २ ) पूर्वेति—पूर्वदिग्वधूकुङ्कुमपङ्केन पल्लवितं संजातपल्लवं वदनमाननं तदिवाचरति तस्मिन्।

उपविष्टे च तस्मिन्ननभिवादनादुत्पन्नमन्युरीष(१)त्कोपकम्पितकरपरामृष्टकूर्चाग्रिमग्रन्थिरग्रणीर्मन्त्रिमण्डलस्य भ्रूभ भीषणया शोणकोणान्तरतरत्तरलतारया दृशाऽभिमुखमस्य सालङ्कायनः प्रणयपरुषाक्षरमभाषत ॥ क ॥

(२)'कुमार, राजहंसोऽपि 'अहंसरूपः' इति मा स्म मोहवान्भूः ॥ ख ॥

अनुभवति चमूढः शस्त्रसंघात इव कोशशून्यताम् ॥ ग ॥

अविभवः पुरुषो मेष इव कम्बलस्योपयोगं गच्छति ॥ घ ॥

प्रद्युम्नजातोऽपि बाणयुद्धव्यतिकरकारिण्या सदोषया यौवनावस्थया निरुद्धोऽनिरुद्ध इव को नाम न क्लेशमनुभवति ॥ ङ ॥

तत्तात, सुविषमेघवर्त्तिनि विद्युद्विलास इवास्थिरे स्थितस्तारुण्ये मा स्म विस्मर स्मयेन विनयम् ॥ च ॥

---

उपविष्ट इति ॥ आत्मनोऽप्रणामाद्विदितविनयाकौशलं नलं प्रीतिभाक् पैतृको मन्त्री शिक्षाबुद्ध्या परुषवर्णमवादीत् ॥ क ॥

कुमारेति ॥ कुमारेत्यामन्त्रणे । राजमुख्योऽपि संस्त्वं सरूपो रूपवानहमित्यमुना प्रकारेण मोहवान् मा स्म भूः मोहं मागाः । रूपमदो हि नीचचिह्नम् । यश्च राजहंसः स कथमहंसस्वरूप इति विरोधद्योतकोऽपिशब्दः ॥ ख ॥

ननु यदि रूपादहंकाराद्वा नृपो मूढः स्यात्तत्को दोष इत्याशङ्क्याह—अनुभवतीति ॥ चकारो यौगपद्ये । यदैव कुतो मुह्यति तदैव कोशेन गञ्जेन शून्यतां व्यतिरेकमनुभवति । यथा चम्वा स्वसेनया ऊढो धृतः शस्त्रनिचयः प्रत्याकारशून्यतामायाति ॥ ग ॥

भ्रष्टकोशस्यापि किं तदाह—अविभवेति ॥ निर्धनः पुमान् अज इव बलस्य सैन्यस्य शक्तेर्वा कमुपयोगं साफल्यं याति न कमपीत्यर्थः एतेन निष्कोशस्याबलित्वमिति ख्यापितम् । अजस्तु अवेर्मेण्ढाद्भवति स्म । तथा कम्बलस्याच्छादनविशेषस्योपयोगं याति॥घ॥

तस्मादबलस्य का कथेत्याह—प्रद्युम्नेति ॥ यतः प्रद्युम्नजातोऽपि प्रकृष्टौजःपुञ्जोऽपि । बाणैः शाब्दैर्यद्युद्धं कोलाहलस्तत्संपर्ककारिण्या । सह दोषैरिति दोषान्वितया । तारुण्यावस्थया । निरुद्ध आत्मवशीकृतः को नाम क्लेशं दुःखं नानुभवति । सर्वोऽप्यनुभवत्येवेत्यर्थः । नामाभ्युपगमे । द्युम्नं द्रव्यमपि । वणधातुः शब्दार्थो घनन्तः । प्रद्युम्नः कामः । तस्माज्जातोऽनिरुद्धाभिधो बाणाख्येन दैत्येन समं युद्धसंबन्धविधायिन्या यौवनेऽवतिष्ठत इति कृत्वा तारुण्ये स्थितया उषया उपाख्यया पत्न्या सदा निरुद्ध आत्मीकृतो दुःखमनुभूतवानित्यागमः । युद्धव्यतिकरोऽनङ्गसूनोः क्लेशानुभवहेतुः ॥ ङ ॥

तत्तातेति ॥ तदित्युपसंहारे । तातेति प्रणयपूर्वामन्त्रणे । तस्माद्वत्स । सुष्ठ्वतिशयेन । विषमे । तथाऽघवर्त्तिनि पापं कारयितरि । अस्थिरे चञ्चले । तथा विशेषेण द्योतन्त इति विद्युतो रोचमाना विलासाः शृङ्गारादयो यस्मिन् । तथाविधे तारुण्ये स्थितः सन्स्म-

---

(१) ईषदिति—ईषत्कोपकम्पितः करस्तेन परामृष्टः स्पृष्टः कूर्चानां मुखस्थकेशानामग्रिमग्रन्थिर्येन सः ।

(२) कुमारेति—अत्र सर्वं टीकाकृतैव विशदीकृतमिति ज्ञेयम् ।

अविनीतोऽग्निरिव दहति ॥ क ॥

अजातनयश्छाग इव नाभिनन्द्यते जनेन ॥ ख ॥

किं च ब्रूमः—

सुसहायशून्यस्य भवतो यस्यामीमांसाभियोगा राक्षसा इव, अन्यायाः पारदारिका इव, अयोगक्रिया लोहकारा इव, अश्रुतागमाः शोकवेगा इव सहायाः ॥ ग ॥

न च ते दुःशिक्षितनृपकलभव्याकरणमार्गेषु निपुणा नर्तकीव मित्रमण्डली ॥ घ ॥

तदायुष्मन्नहितया प्रकृत्या भुजङ्ग इव भयाय लोकस्य ॥ ङ ॥

येन गवण विनयं मा स्म विस्मार्षीः। विद्युद्विलासोऽपि दृष्टु विपं जलं यत्रेति कृत्वा सजले मेघे वर्तते। तथा अस्थिरो लोलः। तथाविधे ॥ च ॥

विनयविस्मृतौ दूपणमाह—अविनीत इति ॥ अविनयी पुमानग्निरिव दाहमुत्पादयत्यात्मनः परस्य वा। अविरूर्णायुस्तेन नीतो यथाग्नितस्तन्नेतारं दहति। ज्वलन्ती हि गड्डरिका स्वीकृता दहतीति लोकोक्तिः। अथवा अविरग्निवाहनम् ॥ क ॥

नन्वात्मदाहकाः पतिविपत्तौ स्त्र्यादयः परदाहकाः कामत्रिपुरान्तकप्रभृतयश्च श्रूयन्ते। ततश्चाविनयाद्दाहात्मकमपि मां जनः स्तोष्यतीति निरस्यन्नाह—अजातेति ॥ न जातो नयो यस्य स छाग इव न स्तूयते जनेन। स्तुतिमपि न प्राप्नोतीत्यर्थः। छागस्त्वजायास्तनयः सुतः ॥ ख ॥

नन्वात्मनः स्वामी याहक्ताहग्वा भवतु चेत्सुसहायः। तदपि त्वयि नास्तीत्याविष्कुर्वन्नाह—सुसहायेति ॥ यस्य ते ईदृशाः सहायाः। न मीमांसाभियोगो विचारोत्साहो येषाम्। राक्षसास्तु मांसेऽभियोगो येषां ते। अमी इति तद्विशेषणम्। न विद्यते न्यायो येषामित्यन्याया न्यायरहिताः। उपमाने तु अन्यामन्यसंबद्धामयन्ते गच्छन्तीत्यन्यायाः। परस्त्रीरता इत्यर्थः। अलब्धलाभो लब्धपरिरक्षणं रक्षितविवर्धनं च योगः। तस्य क्रिया नास्ति येषां ते तथोक्ताः असंबद्धकर्माणो वा। पक्षे अयो गच्छतीत्ययोगा लोहगता क्रिया येषाम्। तथा न श्रुत आगमः शास्त्रं यैस्ते। शोकप्रसरस्तु अश्रुताया नयनजलत्वस्यागमो येषु ॥ ग ॥

एवं सहायसंपदं निषिध्य मित्रमण्डलीमवद्ययन्नाह—न चेति ॥ दुःशिक्षितेति नृपकलभेति चामन्त्रणम् ॥ ते तव मित्रमण्डली न च व्याकरणमार्गेषु कुशला। शब्दतत्त्वावबोधे हि नीतिशास्त्राधिगमः। नीत्यवगमे हि कृत्याकृत्यविमर्शनम्। तस्मात्संपदः। न च तन्नैपुण्यं भवन्मित्रमण्डल्यामस्तीति भावः। नर्तकीपक्षे दुःशिक्षितनृपकलेति संबोधनम्। सा च भरतोक्तेषु करणमार्गेषु भव्या प्रशस्ता ॥ घ ॥

तदेति ॥ तदित्युपसंहारे। आयुष्मन्नित्यामन्त्रणे। अहितया हितेतरया। प्रकृत्या अविनयादिस्वभावेन। अयुक्तसहायमित्रलक्षणया चामात्यादिकया युक्तः संबद्धो भवांल्लोकस्य भयहेतुः। भुजङ्गस्तु अहेर्भावोऽहिता तया दशनलक्षणया प्रकृत्या युक्तः ॥ ङ ॥

उग्रसेनः कंसानुरागं जनयेत् ॥ क ॥
अमृतमथनोद्यतहरिबाहुपञ्जर इव मन्दरसानुगतः को न घृष्यते ॥ख॥
शुनीमिवास्थिरतां परिहर ॥ ग ॥
कुशीलताग्राही मा स्म तैलिक इव केवलं खलोपभोगाय भूः ॥ घ ॥
आवर्जय गुणान् ॥ ङ ॥
निर्गुणे धनुषीव सुवंश्येऽपि कस्याग्रहो भवति ॥ च॥
अभ्यस्य कलाः ॥ छ ॥
निष्कलो वीणाध्वनिरिव प्रशस्यते न पुरुषः ॥ ज ॥
त्यज जाड्यम् ॥ झ ॥
जाड्येयोगेन हिमानी दूष्यतां यति ॥ ञ ॥

दुष्टप्रकृतिर्नृपश्चेल्लोकस्य भयाय ततः किमित्याशङ्क्याह—उग्रेति ॥ उग्रा सेना यस्य स कं प्राणिनं सानुरागं कुर्यात् । न कमपीत्यर्थः विरागहेतुरेवेति भावः । उचितपरिवारो हि जनानुरागाय । परिवारो हि लोकस्योपद्रवं रक्षणं वा कुरुते । उग्रसेनो दैत्यः स कंसासुरस्यानुरागं जनयतीत्यागमोक्तोल्लिङ्गनम् ॥ क ॥

चेदमी विरुद्धबुद्धयः सहायादयः । पृथ्वी वा मयि मन्दानुरागा । ततः किं ममेति निरस्यन्नाह—अमृतेति ॥ मन्दो रसः प्रीतिर्येषां तैर्मन्दानुरागया पृथ्व्या चानुगतः को न घृष्यते । उपमाने तु पुरा देवैः दैत्यैरमृतायाम्भोधिर्ममन्थे । तत्र च मुख्यो बलिष्ठश्च विष्णुः । तस्य भुजपञ्जरो मन्दरनाम्नो गिरेर्मन्थानभूतस्य सानूनि तटानि गतः प्राप्तः सन्घृष्टः ॥ ख ॥

शुनीमिति ॥ तस्मादस्थिरतां चञ्चलत्वं त्यज ॥ शुनी त्वस्थिरता ॥ ग ॥

कुशीलतेति ॥ कुत्सितं शीलं लौल्यादिलक्षणं यस्य स कुशीलः, तस्य भावः कुशीलता । तां गृह्णातीत्येवंशीलस्तथोक्तस्त्वं केवलं दुर्जनानामुपभोगाय मा स्म भूः । कुशीलो हि दुर्जनानामेवोपयोगी न साधूनाम् । तैलिकस्तु कुशीलक्षणां लतां गृह्णाति । खलः पिण्याकः स एवोपयोगस्तस्य । अयोविकारः कुशी ॥ घ ॥

अकृत्यानि परिहार्य कृत्यमुपदिशन्नाह—आवर्जयेति ॥ ङ ॥

सुवंशत्वादेवास्माकं लोकग्रहो भविष्यतीति न विमृश्यं यतः—निर्गुणा इति ॥ गुणानामेवाग्रह आदरो जनस्य न केवलं कुलीनानाम् । वेणुसंभूतस्य धनुषोऽपि गुणेन ज्यया आ आभिमुख्येन बाणाकर्षणाय ग्रह आग्रहः ॥ च ॥

अभ्यस्येति ॥ कला विद्वत्तादिका तामप्यभ्यस्य । अस् दैवादिको लुसहिप्रत्ययः।छ।

निष्कल इति ॥ वीणाध्वनिस्तु निष्कलः कलयितुमशक्यः ॥ ज ॥

आवर्जितशौर्यादिगुणोऽभ्यस्तसप्ततिकलः पुरुषो यः स्तब्धः स नश्यते इत्याह—त्यजेति ॥ झ ॥

जाड्येति ॥ हि यस्माज्जाड्ययोगेन मानी स्तब्धः पुमान्दूष्यत्वमाप्नोति । हिमानी हिमसंहतिः । सापि जाड्यताऽतिशैत्याद् दूष्येत्यर्थान्तरम् ॥ ञ ॥

मा स्म मुखरो भूः ॥ क ॥
कर्णाटचेटीमिव मुखरतां न शंसन्ति साधवः ॥ ख ॥
भज माधुर्यम् ॥ ग ॥
धवलबलीवर्दपङ्क्तिरिव समाधुर्या वाणी मनो हरति ॥ घ ॥
वर्जय वैपरीत्यम् ॥ ङ ॥
विपरीतं शवमिव को न परिहरति ॥ च ॥
कमलदीर्घाक्ष, शिक्षाक्रमेऽस्मिन्नपरमप्यभिधीयसे ॥ छ ॥
मा गाः स्त्रियाः श्रियो वा विश्वासम् ॥ ज ॥
अधिकमलवसतिरनार्यसंगता स्त्री श्रीश्च कं न प्रतारयति ॥ झ ॥

---

जाड्यपरित्यागे किं पितृमन्त्रिमुखरस्तर्हि स्यामित्येतदपि निषिध्यन्नाह—मा स्मेति॥ मुखरो वाचालोऽपि माभूः ॥ क ॥

कर्णाटेति ॥ यस्मान्मुखरस्य भावं मुखरतां वाचालतां साधवो न स्तुवन्ति । कर्णाटचेटी तु मुखे रतं छरतं यस्याः ॥ ख ॥

धवलेति । यस्माद्या वाणी सह माधुर्येण सा मनोहारिणी । न च वाचालतायां वाचो माधुर्यम् । वृषश्रेणी तु समा अविषमा । धुर्या धूर्वाहिनी । धुरं वहतीत्यर्थे 'धुरो यड्ढकौ' इति यत् । अनः शकटम् । अर्णी वा । अक्षाग्रकीलिकामिव हरति वहतीत्यर्थः । वा अथवार्थे ॥ घ ॥

वर्जयेति ॥ पूर्वोक्तादस्मदुपदेशाद्विपरीत्यमन्यथाभावं त्यज ॥ ङ ॥

यतः—विपरीतेति ॥ विपरीताचारं को न परिहरति । शवं तु विभिः पक्षिभिः परीतं व्याप्तम् ॥ च ॥

अविनीतानामावर्जितगुणानामभ्यस्तकलानामपि प्रायः प्रभवन्ति व्यसनानि, रक्षितव्यप्रमादाश्च । व्यसनेषु स्त्रीष्वत्यासक्तिर्महद्व्यसनम् । द्रव्यशरीरयोः क्षयहेतुत्वात् । स्त्रीव्यसने हि राजयक्ष्मोद्भवः । ततः स्त्रीव्यसनं लक्ष्मीप्रमादं च परिहारयन्नाह—कमलेति ॥ रूपवान्भवान् सर्वस्त्रीप्रियः स्यादतस्ताऽ विश्वासकरणं तव तत्कमलदलेत्यामन्त्रणेनाभिहितम् ॥ छ ॥

मागा इति ॥ स्तृणाति दुर्विनीता सती आत्मनः परस्य वा गुणगणं प्रच्छादयतीति स्त्री । यस्यां तु सतीधर्मयोगादस्यार्थस्यान्यथात्वम् । तत्राबृणोति कल्याणपरंपराभिः स्वकुलं पतिकुलं चेत्यर्थः । तस्या दुर्विनीतायाः स्त्रिया अबलाया विश्वासं विश्रम्भं मा व्राजीः । स्वलोभात्स्वभावाद्वा ता अतीवानुरागं दर्शयन्ति । परं परिणामे विरुद्धा एवेति भावः । तथा विश्वस्मिन्सर्वत्र निक्षेपस्य योग्येऽयोग्ये वा आस उपवेशनं स्थापनं विश्वासः । तं श्रिया लक्ष्म्या मा गाः । धनार्थे हि पितरः पुत्रेभ्यः पुत्राश्च पितृभ्यो द्रुह्यन्तीति । तस्माद्य एवाद्रोहण उपधाशुद्धश्च तत्रैवासौ निक्षेपणीयेति भावः ॥ ज ॥

किमिति स्त्रिया न विश्रम्भणीयम् । श्रीश्च सर्वत्राप्यनिधेयेत्याह—अधीति ॥ अधिको योऽसौ मलः पापं तस्य वसतिरास्पदम् । तथा अनार्यैरसाधुभिः कृतमैत्रीका स्त्री कं

या कालकूटद्वितीया नीरोषितापि नार्द्रहृदया भवति । स्वीकृतापि विवाहेन कंसानलङ्घनचापलेनोद्वेजयति ॥ क ॥

अस्याः कारणेऽभ्रान्तः समस्तोमन्दरागः सदालोकः, लोलनेत्रीकृता घृष्टा भुजङ्गमण्डली, प्राप्तो जलधौ राजकुमारपराभवम् ॥ ख ॥

पुरुषं न वञ्चयति । सर्वमपि प्रलम्भयतीत्यर्थः । श्रीस्तु अधिकमलं पद्मे वसतिर्यस्याः । कमलं हि तरणशीलम् । सा च तेनाविनाभावसंबद्धा । ततः पद्मासना श्री कं पुरुषं न प्रकर्षेण तारयति । किंविशिष्टा । न नारी अनारी अमानुषी । तथा मो विष्णुः । तत्संगता असंगता ॥ न ॥

या कलेति ॥ या स्त्री अकालेऽकस्माद्यत्कूटं कपटं द्वितीयं यस्याः । तथा नीरोष्यते स्मेति निरोषिता प्रसादितापार्द्रहृदया स्निग्धहृदया न भवति । तथा विवाहेनोपयामेन सानलमग्निसाक्षिकं स्वीकृतापि सा स्त्री कं पुरुषं घनेन लौल्येन नोद्वेजयति । श्रीपक्षे कालकूटं विषं द्वितीयमस्याः । तदनन्तरमुत्पन्नत्वात् । तथा नीरे जले उषिता । जलधिपुत्रीत्वात् । परं नार्द्रहृदया । किं तु निर्जलवक्षाः । दैवतानुभावाज्जलेन तद्वक्षो वैसदृश्यं न नीतमिति भावः । तथा आप्नोत्यवश्यमित्यापी स्मृतमात्रागामुको यो विः पक्षी गरुडलक्षणः स वाहो वाहनं यस्य । तथा कंसासुरस्य न अलङ्घनमनलङ्घनम् । अर्थात्कंसस्य लङ्घनं मारणात्मकम् । तथाभूतं चापलं यस्य । अर्थाद्विष्णुस्तेन स्वीकृता । तथा उश्च अश्च वा शिवविष्णू उत्कृष्टौ वौ यस्य स उद्वः (ईश्वरो विष्णुश्च यस्य प्रसन्नः) तस्मिन् जयति । अथवा या श्रीविष्णुना स्वीकृतापि सती नीरे उषिता । कालकूटद्वितीयापि सती घनस्य मेघस्य चापलेन विलसितेन कंसमेव जगत्संतापकारित्वादनलमुद्वेजयति पीडयति अर्थाच्छमयितरि विवाहे गरुडवाहने आर्द्रहृदया न न भवति । भवत्येवेत्यर्थः । या किल कालकूटद्वितीया सा कथमिवार्द्रहृदयेति विरोधोद्भावनयापिशब्दो भिन्नक्रमे । आर्द्रशब्दोऽत्र स्निग्धार्थः । यदि वा विवाहो विष्णुस्तेनापि श्रीः स्वीकृता । तत उपादेयेत्यर्थः । अपिरत्रापि भिन्नक्रमे ॥ क ॥

अस्या इति ॥ अस्याः स्त्रिया हेतोर्लोकः समस्तोऽप्यमन्दरागो दृढानुरागः सन्सदा भ्रान्तः । तथा भुजङ्गानां विटानां मण्डली चपलाक्षीकृता सती घृष्टा विप्रलब्धा । तथा जडा धीरस्येति जडधीर्जडबुद्धिः । राज्ञः सकाशात् कुत्सितो योऽसौ मारः पञ्चबिल्वादिबन्धनेन विगोप्यहिंसा स एव पराभवस्तं प्राप्तः । अथवा राज्ञस्तथा कुत्सिताच्च मारात् स्मरात्पराभवं प्राप्नोति कुबुद्धिः । "अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा । नादण्ड्या नाम राज्ञोऽस्ति धर्माद्धि चलितः स्वकात्" इति स्मार्ताः । ततः स्वपितुरपि राज्ञः सकाशाद्राजकुमारस्यान्यायवतः परिभवो युज्यत एव । पक्षे अस्याः श्रियो निमित्ते । मन्दरोऽगः पर्वतः । अभ्रमाकाशमन्तोऽस्येत्यभ्रान्तो व्योमावसानः । सन् शोभन आलोकोऽस्येति सदालोकः । सम्यगस्तः क्षिप्त इत्यर्थः । संपूर्वादस्यतेः क्तः । यद्वा सम्यगस्तः सन्नप्य भ्रान्तः क्षुब्धोऽभ्रान्तः ( अर्थान्तरे भङ्गित्वेन न दोषः ) । तथा अलोलनेत्रं लोलनेत्रं कृता भुजंगमण्डली वासुकिप्रभृतिनागमण्डली । नेत्रं मन्थानरज्जुः । तथा जलधिरब्धिः पराभवं मन्थनलक्षणं प्राप्तः । राजकुमारेत्यामन्त्रणे ॥ ख ॥

अनयावष्टब्धः को न गुरुवारणयोग्यो भवति, को न वाजिपृष्ठमरोहति, कः (१)कंकणन्नवञ्चनातः प्रकटयति, कः कण्ठे हारावमोचनं न कुरुते, को न काञ्चनशृङ्खलामनुभवति । कुरङ्ग इवान्धीभूतः को वागुरावञ्चनं करोति, कः कार्मुकनिर्मुक्तशिलीमुख इव न वैलक्ष्मागच्छति ॥ क ॥

कस्य न पराभूतिर्भवति । कस्य नापूर्वं यशः समुच्छलति ॥ ख ॥

किमतोऽप्यस्याः परमुच्यते ॥ ग ॥

यादवप्रियं शार्दूलमिव शूरं महत्तरं भयान्नोपसर्पति । सुनयनादेवरं

---

अनयेति ॥ अनया स्त्रिया आश्रितः कः पुरुषो गुरूणां वारणे निषेधे । वा अथवार्थः । आजिः कलहः वञ्चनाया वञ्चनातः ( पञ्चम्यास्तसिल् ) प्रतारणात् । कं सुखं वञ्चनाकृतं सुखमित्यर्थः । कणन् शब्दायमानः । को नप्रकटयति । कण्ठे गलान्तः हा इति य आराव-स्तस्य मोचनम् । कांचनेति कांचिदर्थे । शृङ्खलां बन्धनम् । गुरौ गुरुविषये अञ्चना पूजा । कुरङ्गपक्षे वागुराया मृगजालिकाया वञ्चना । पराभवादेः प्रागवस्थाया विसदृशो लक्ष्यत इति विलक्षः । तस्य भावो वैलक्ष्म् । धनुर्मुक्तबाणस्तु वै स्फुटं लक्षं वेध्यमायाति । पक्षे अनया लक्ष्म्या । गुरुर्महान् वारणो गजः । वाजिपृष्ठं तुरङ्गपृष्ठम् । कंकणं हस्तसूत्रम् । नवमविच्छायम् । चः समुच्चये । नेति निषेधे । अतोऽस्या इत्यर्थः । हारस्य मुक्तासरस्य । अवमोचनं बन्धनम् । काञ्चनस्य शृङ्खलामाभरणविशेषम् । अगौरवाह नीचे । अन्धीभू-तो निर्विवेकः । अपि तु सविवेकः सन्गुरूनेव पूजयति । वै स्फुटम् । लक्षं शतसहस्रं ना-प्नोति ॥ क ॥

कस्येति ॥ स्त्रीवशगस्य पराभूतिः पराभवः । प्रतिषेधवाची अः पूर्वो यस्माद्यशःश-ब्दस्वरूपात्तदपूर्वं यशोऽयश इत्यर्थः । पक्षे परा प्रकृष्टा भूतिरुन्नतिः । अपूर्वमुत्कृष्टं यशः ।ख।

स्वस्थावस्थायां स्त्रैणानि वञ्चनाकूटराजपराभवादीन्यभिधाय संप्रति परं परिणामे यत्स्यात्तदाह—यादवेति ॥ दवमुपतापं प्रीणाति दवप्रियं रागिणम् । अथवा दुनोतीति दवः कुतश्चिद्वैगुण्यादुपतापजनको यः प्रियः कान्तस्तं शूरं विक्रान्तं महत्तरं वृद्धं भयान्न समीपे व्रजति । अगमने वार्धकं भये च शूरत्वं हेतुः । शार्दूलपक्षे दवः काननम् । सुनयेति नयप्रवर्तनप्रोत्साहनायामामन्त्रणम् । नादे शब्दे, वरं प्रियंवदं, बलेन शक्त्या भद्रं, दृष्ट्वापि प्रणश्यति । प्रियमिति शेषः । सिंहस्तु नादे शब्दे वरः सिंहनादस्य प्रतीतत्वात् । तथा वह्दे घनप्रदे । अवे रक्षकेऽपि चक्षुर्नयनं न पातयति । संमुखमपि नालोकत इत्यर्थः । यदि वा वेपतेऽवश्यमिति वेपीति चक्षुर्विशेषणम् । पक्षे यादवा यदुवंश्यास्तेषां प्रियः शूरनामाद्य-पुरुषस्तं भयात्स्थितिलङ्घनलक्षणात् नोपसर्पति न तत्समीपे व्रजति । एतेन श्वशुरो वध्वा न स्पृश्यते इति स्थितिरुक्ता । शोभने नयने यस्याः सा देवरं गदनामानं कृष्णस्य गदाग्र-जत्वात् । बलभद्रमपि ज्येष्ठसंबन्धेन प्रतीतं वीक्ष्य प्रकर्षेण पलायते स्पर्शभयात् । तथा

---

( १ ) कमिति—कं, कणन्, वञ्चनातः, इतिः कङ्कणम् , नवम् , च, न, अतः इति च मतद्वये पदविभागः ।

सिंहमिव बलभद्रं दृष्ट्वा प्रपलायते । न वसुदेवेऽपि चक्षुः पातयति ॥ क ॥

केवलमनवरतशिक्षितवैदग्ध्यकलापराधात्मिकात्रपापरा परिहृत्य गुणिनो गुरून्परपुरुषे मायाविनि कृतकेशिवधे धृतमन्दरागे रागं बध्नाति ॥ ख ॥

तदायुष्मन्नतिगम्भीरगुहा गिरीन्द्रभूरिव हृदयहराश्रेयोऽर्थिनां शरणं न स्त्री श्रीर्वा ॥ ग ॥

---

वसुदेवः कृष्णस्य पिता ॥ क ॥

यदीदृशे परमोपकारिणि न प्रेमवती स्त्री, तदान्यत्र कस्मिन्नपि गुणिनि प्रेमबन्धं विधास्यतीति निरस्यन्नाह—केवलेति । नूयते इति नवं प्रशस्यं न नवमनवमप्रशस्यं रतं यस्याः । केवलं बीजक्षयहेतुत्वात् । नहि तस्याः संततिः । रतं च संतत्याः फलम् । तथा विशेषेण दग्धो विदग्धः । तस्य भावो वैदग्ध्यं संतापस्तस्य कला वैदग्ध्यकला शिक्षिता यया । पश्चात्कर्मधारयः । अपराधा एवात्मा स्वरूपं यस्याः । तथा न त्रायते नरकाद् अत्रं तथाभूतं यत्पापं कमप्युपसर्गं राति ददातीत्यत्रपापरा । गुरून् पित्रादीन् गुणिनः सगुणांश्च ग्राह्यपुरुषान् परिहृत्य परस्याः पुरुषेऽन्यनारीकान्ते मायाविनि कापटिके कृतके कृत्रिमे अशिवमकल्याणं दधातीत्यशिवधे मन्दरागे क्षणप्रेमण्यनुरज्यते । परपुरुष इत्यत्र सर्वनामत्वाद्वृत्तौ पूर्वपदस्य पुंवत्त्वम् । पक्षे अनवरतं शश्वच्छिक्षितो वैदग्ध्यकलापो दक्षतातिशयो यया सा चासौ राधात्मिका । राधा च कृष्णपत्नी । सापि श्रिया एव भेदः । त्रपापरा सलज्जा सती । गुणिनो गुरूञ्छूरादीन्यदूनामादिपुरुषान् परिहृत्य परपुरुषे मुरारौ रागं प्रीतिं बध्नाति । किंभूते । माया त्रिलोकीनिर्माणलक्षणा वामननृसिंहमहिलात्वादिलक्षणा वा विद्यते यस्य । तथा कृतः केशिनोऽश्वरूपस्य दैत्यस्य वधो येन । तथा धृतो मन्दरनामाऽगोऽद्रिर्येन ॥ ख ॥

एवमुक्तकपटानामनार्द्रहृदयत्वादिदोषान्वितानां स्त्रीणां विश्वासं विश्रम्भं श्रीणां च विश्वासं यत्र तत्र निक्षेपं सर्वथा परिहरन्सर्वोऽप्यायुष्मानित्यायुष्मन्निति संबोधनेनाभिहितम् । तदित्युपसंहारे । श्रेयोर्थिनां स्त्री न रक्षित्री । कीदृशी । हृदयं चेतो हरति मोहकारिणी । एतेन क्षयहेतुत्वमुक्तम् । तथा अतिगमतिशयेन बिभेतीति भीर्भीरुः स्त्रीस्वभावत्वात् । अथवा भीर्भयहेतुत्वात् । दुष्टाशयत्वात् । तथा न गौर्वाग्यस्य सोऽगुस्तं जहाति अगुहा । य एव मायामयं वक्तुं वेत्ति क्षणमपि तमेव श्रयतीत्यर्थः । अथवा गौर्धेन्वर्थः । तच्चोपलक्षणम् । तेन निर्धनं विहाय धनिनमेवाश्रयतीति । यदि वा नतौ नम्रतायां गम्भीरा गौर्वाग्यस्य तमपि जहातीत्यर्थः । न च भवादृशाश्चाटूनि कुत्रापि वक्तुं प्रभविष्णवः । सर्वोन्नतत्वात् । यदि वा अतिगमतिशयं भियं राति ददातीति भीरा गौर्यस्य तमतिगम्भीरगुं जहाति । हिमाचलभूरपि अतिगम्भीरा गुहाः पाषाणसन्धयो यस्याम् । श्रीश्चाश्रेयोऽर्थिनां न शरणम् । किंतु श्रेयोऽर्थिनाम् । कीदृशी हृत्स्वान्तं तथाऽयं शुभकर्म हरति । तत्प्राप्त्या शुभकर्मणो भुक्तत्वत् । यदुक्तं नैषधे—'पूर्वजन्मविभवव्ययसृष्टाः संपदोऽथ विदश्च विसृष्टाः' इति । गौरी अपि हृदये हरो यस्याः । तथा नतिगम्भीरः प्रणामप्रगल्भो गुहः कार्त्तिकेयो यस्याः । तत्पुत्रत्वात् ॥ ग ॥

शृङ्गारप्रधानास्तात, गाव इव विचारिताः सरसा भवन्ति न स्त्रियः ।क।
तदेताः कन्दर्पकण्डूकषणविनोदमात्रोपकारिण्यो नात्यन्तविश्वासयोग्याः सर्वथा विश्वस्तं विश्वासमिव नरं कुर्वन्ति स्त्रियः ॥ ख ॥

श्रियोऽपि दानोपभोगाभ्यामुपयोगं नयेत् । न लोभं कुर्यात् । बहुलोभानुगतः किरणकलापोऽपि संतापयति जनम् ॥ ग ॥

अतः पुत्र; प्राप्स्यसि नचिरान्निजकुलकमलराजहंसीं राज्यश्रियम् ॥ अनवरतं कृतयशोदानन्देहि नारायण इव त्वयि चिरं रंस्यते खल्वियं लक्ष्मीः ॥ घ ॥

पाहि प्रजाः ॥ प्रजापो ब्राह्मण इव क्षत्रियोऽपि न लिप्यते पातकैः ॥ ङ ॥

---

अधुना दुःस्त्रियः सर्वथा परिहार्यं साध्व्या अप्यत्यन्तविश्वासप्रतिषेधद्वारेण 'सेवेत विषयान्काले मुक्त्वा तत्परतां वशी । सुखं हि फलमर्थस्य तन्निरोधे वृथा श्रियः' इति पूर्वकविकथितमनुगामुकोऽस्त्यासक्तिं च निषेधयन्नाह—शृङ्गारेति ॥ रूक्षशिक्षावचोभिरास्माकीनैरसौ विमनस्को भविष्यतीति चित्ते धारयन् कृत्यं चोपदिशन् तातेति कोमलमामन्त्रयति। शृङ्गारो रसः प्रधानं यासु । तथा विचारिता विवेचिता गावो गिर एव सरसाः प्रीतिहेतवो भवन्ति । अथवा गावो विशेषेण चारिता दत्तास्वादवत्तृणकवलाः । तथा शृङ्गस्याग्रमग्रं प्राधानं यासु तास्तथोक्ताः । तथा सरसाः सदुग्धाः । स्त्रियस्तु शृङ्गारो मण्डनं प्रधानं यासाम् । विचारिताः स्तृणन्ति दुःशीलाः सत्यो गुणगणं छादयन्तीति तत्त्वतो विमृष्टाः सत्यो न सरसाः । किंतु वैराग्यहेतवः ॥ क ॥

तदेता इति ॥ तत्तस्माद्धेतोरेताः स्त्रियो नात्यन्तं विश्रम्भार्हाः । कियदेवेत्यर्थः । तत्र हेतुमाह—कंदर्पेत्यादि । सर्वथा विश्रब्धं नरं स्त्रियो विगतश्वासमिव कुर्वन्ति । तत् साध्व्योऽपि नात्यन्तं विश्रम्भार्हाः । तथा च चाणक्यः—'अन्तर्गृहगतः स्थविरस्त्रीपरिशुद्धां देवीं पश्येत् । अपरिशुद्धां न कांचिदभिगच्छेत्' । श्रूयते हि—देवीगृहगतो भ्राता भद्रसेनं जघान मातुः शय्यान्तर्गतश्च पुत्रः कारूषम्' इत्यादि ॥ ख ॥

स्त्रीणां दोषान्कण्डूविनोदमात्रफलं चाभिधाय संप्रति श्रीणां फलमाह—श्रियोऽपीत्यादि ॥ लोभे दूषणमाह—बह्विति । लोभेनानुगतः । करौघस्तु बहुलः प्राज्यः । तथा भानुं रविं गतो भानवीय इत्यर्थः ॥ ग ॥

यदि लोभवता मया संतप्यते जनस्तत्किमित्याशङ्क्याह—अत इति ॥ अत एतस्माज्जनाच्छ्रियमाप्स्यसि। जनानुरागप्रभवा हि संपदः । अथवा एतस्मात्पूर्वोक्तादस्मदुपदेशात् । प्राप्य च श्रियं निरन्तरं कृतं यशो येन तद्दानं देहि धर्मादिपात्रेषु श्रियं नियुङ्क्ष्वेति भावः । खलु निश्चितमियं लक्ष्मीः पात्रेषु व्यवकलयति त्वयि विष्णाविव बहुकालं सहर्षं स्थास्यति । विष्णौ कीदृशि । कृतो यशोदाख्याया जनन्या आनन्दो येन तस्मिन् । हि स्फुटम् ॥ घ ॥

बलादपि प्रजाभ्यो वित्तमादाय पात्रेषु मयोपकरणीयमिति मा कृथा हृदि तदाह—पाहीति ॥ पालय प्रजाः यस्मात्प्रजां पाति यः क्षत्रियः स न पापी । ब्राह्मणस्तु प्रकृष्टो

मा च वृद्धिं प्राप्य गुणेषु द्वेषं कार्षीः । व्याकरणे हि वृद्धिर्गुणं बाधते, न सत्पुरुषेषु ॥ क ॥

वत्स, मा चवं चेतसि कृथाश्छन्दसोऽयम् । छान्दसश्च गुरुर्वक्रस्वभाव एव भवति तत्किमनेनेति । यस्माच्चतुरानन्दिपदः पुण्यश्लोको भवान् । अ-तोऽङ्गभावं यान्ति ते वक्रोक्तयोऽपि गुरवः । सरलतया लघवोऽप्यन्तरङ्गा भवन्ति । किंतु ते ह्यवसाने कुटिलतामपि दर्शयन्ति ॥ ख ॥

तत्किं बहुना—

तथा भव यथा तात त्रैलोक्योदरदर्पणे ।
विशेषर्भूषितस्तैस्तैर्नित्यमात्मानमीक्षसे ॥ १७ ॥

किं चान्यत्—

बिभर्ति यो ह्यर्जुनवारि पौरुषं करोति नम्रे च न वा रिपौ रुषम् ।
न तेन राज्ञा सहसागराजिता भवेन्मही किं सहसागरा जिता ॥ १८ ॥

---

जपो यस्य स प्रजापः । जपनं जापः ॥ ङ ॥

मा चेति ॥ वृद्धिं राज्यादिसमृद्धिम् । गुणेषु पाण्डित्यादिषु । हि यस्याद्गुणबा-धिका वृद्धिरिति वैयाकरणसमयः ॥ क ॥

इदानीं शिक्षामभिधायात्मनोपदिष्टे आदरपरं कुमारं कुर्वन्मृदुवचोभिः प्रोत्साहयन्नाह वत्सेत्यादि ॥ छन्दो वेदः छन्दःशास्त्रं च । गुरुस्तत्वोपदेष्टा छन्दोदृष्टलघुद्वितीय आका-रादिश्च । यस्मात्कारणाद्भवान्पुण्यश्लोकः पवित्रयशाः । तथा चतुरानानन्दयति तथावि-धं पदं राज्यलक्षणं यस्य । अतो वक्रवचसोऽपि गुरवः । तेन च अङ्ग, तव भावं भावनां यान्ति । त्वयि भावितात्मानो भवन्तीत्यर्थः । अङ्गेति कोमलामन्त्रणे । सरलतया एकमा-र्गतया लाघवो लघुवृत्ता अप्यन्तरङ्गाश्चेतोभिप्रेताः स्युः । परं तेऽन्ते कौटिल्यमपि प्रका-शयन्ति । अथ च पुण्यः श्रेयान् श्लोकः पद्यम् । तदा चत्वारि आनन्दीनि पदानि पादा यस्य ते प्रसिद्धा गुरवो वक्राकृतयोऽङ्गभावमवयत्वं यान्ति । श्लोकस्येति शेषः । सरलतया ऋजुतया लघवो लेखाकृतयोऽन्तरङ्गा मध्यगताः स्युः । परमन्ते पादान्ते कुटिला अपि स्युः । 'वा पादान्ते त्वसौ ग्वक्र' इति वचनात् ॥ ख ॥

तथेति ॥ ताततेति कोमलामन्त्रणे । तथा तेन प्रकारेण भव यथा तैरस्मदुपदिष्टैः प्रजात्राणादिभिर्विशेषैरुपलक्षितमात्मानं भुव्युषितः पृथ्वीस्थित एव त्रैलोक्यमेव योऽसौ द-र्पणस्तत्र नित्यमविनश्वरं पश्यसि । अन्योऽपि तैस्तैराकल्पविशेषैर्मण्डितमात्मानं दर्पणे पश्यतीति । यशोऽर्थमेव प्रयतितव्यमिति भावः ॥ १७ ॥

बिभर्तीति ॥ अर्जुनमेव वृणोत्याच्छादयति वारयति वेत्येवंशीलं निजप्रकर्षेण तच्चरित्रा-पह्नवकारि पौरुषं यो राजा धत्ते । अथवा नम्रे रिपौ शत्रावपि रुषं कोपं न च नैव करोति । धर्मविजयत्वात् । तेन राज्ञा अगराजिता । अष्टसंख्यकुलाचलालंकृता । तथा सहसागरा ससमुद्रा सहसा बलेन किं मही न जिता भवेत् । जितैवेति भावः ॥ १८ ॥

अपि च—

'किं तेन जातु जातेन मातुर्यौवनहारिणा ।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा' ॥ १६ ॥

एवमुक्त्वा विश्रान्तवाचि वाचस्पतिसमे मन्त्रिणि राजापि प्रेमार्द्रया दृशा नलमवलोक्य वक्तुमारभत ॥ क ॥

'तात, युक्तमुक्तोऽसि सालङ्कायनेन । कस्यान्यस्य निर्यान्ति वदनारविन्दादेवंविधाः पदे पदेऽर्थसमर्था मृद्व्यो मृष्टाः श्लिष्टाश्च वाचः ॥ ख ॥

तद्दर्शितस्तवानेन निर्वापितदेहः स्नेहः । स्वीकृतस्त्वं मनसा समस्तसाम्राज्यभारोद्वहनधुर्यतां प्रति । तेनायमनुशास्ति ॥ ग ॥

युज्यते चैतत् ॥

तथाहि—

(१) संग्रहं नाकुलीनस्य सर्पस्येव करोति यः ।
स एव श्लाघ्यते मन्त्री सम्यग्गारुडिको यथा ॥ २० ॥

किं च—

न पश्यसि सांप्रतमिदमस्माकमतिभीरुभूपालमण्डलमिव वलिभिराक्रान्तम्, अशेषमङ्गम्, अतिजीर्णशीर्णकर्पटमिवावरीतुं न शक्यते । क्वाप्युपरिपतितभ्रूचक्रा भीरुभटपेटीव नष्टा दृष्टिः ॥ घ ॥

ये हितवर्गोपदेशिनो मुख्यास्तेऽपि सालङ्कायनप्रभृतयो मन्त्रिण इव विरलीभूता दन्ताः । (२)शब्दशास्त्रे हि राजादीनामदन्तता श्लाघ्यते ।

किमिति ॥ मातुर्जनन्यास्तारुण्यमुषा तेन जातेन किम् । किमपि नेत्यर्थः । यो जातु कदाचिदपि स्वस्यान्वयस्याग्रं नारोहति । अग्रे गण्यतां न यातीत्यर्थः । ध्वजपक्षे वंशो वेणुः ॥ १९ ॥

संग्रहमिति ॥ न निषेधे । अकुलीनस्यानभिजातस्य । सर्पस्य तु नाकुर्वल्मीकस्तत्र लीनस्य । कर्मणामारम्भोपायः पुरुषद्रव्यसंपत्, देशकालविभागो विनिपातप्रतीकारः, कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः गारुडादिविषयश्चेति योगान्मन्त्रिणावमात्याहितुण्डिकौ ॥ २० ॥

नेति ॥ वलयस्त्वक्शैथिल्यानि । बलिनो बलवन्तश्च । आवरणं संव्यानम् । अङ्गपक्षे संवरणम् । निःसौष्ठवादशक्यम् । उपरिपतितं शैथिल्यात्स्रस्तं भ्रूचक्रं यस्याम् । भीरुनाहलमण्डलीपक्षे तु प्रतिभटानामिति शेषः । भीरवो हि वैरिणि विलोकयति पलायन्ते । पेटशब्दः संघाते त्रिलिङ्गः ॥ घ ॥

य इति हितवर्गं हितसमूहमुपदिशन्ति मुख्याश्च प्रधानभूताः सालङ्कायनप्रभृतयोऽमात्या यथा विरलीभूता विरला इव केचित् । न सर्वे तथाविधाः। तथा ये दन्ताः हि स्फुटं

(१) संग्रहमिति—योऽनभिजातस्य राज्ञः संग्रहं न कुरुते स एव मन्त्री श्लाघनीयः । यथा गारुडिक आहितुण्डिको बिलेशयस्य सर्पस्य संग्रहं विधत्ते तद्वत् ॥ २० ॥

(२) शब्देति—व्याकरणे 'राजाहःसखिभ्यष्टच्' एतेनादन्तता अकारान्तत्वं भवति ।

नान्यत्र ॥ क ॥

तदिदानीं मम वन्यश्वापदमिव विषयविमुखं मनो वनाय धावति । कृतं च यन्मनुष्यजन्मनि क्रियते ॥ ख ॥

तथाहि—

(१) एताः प्राप्य परोपकारविधिना नीताः श्रियः श्लाघ्यता-
मापूर्वापरसिन्धुसीम्नि च नृपाः स्वाज्ञां चिरं ग्राहिताः ।
भूभारक्षमदोर्युगेन भवता जाता वयं पुत्रिण-
स्तत्सं प्रत्युचितं यदस्य वयसस्तत्कर्म कुर्मो वने ॥ २१ ॥

इत्यभिधाय तत्कालमेव मौहूर्त्तिकानाहूयादिदेश—'कथ्यतां यौवराज्याभिषेकोत्सवाय दिवसः' इति ॥ ग ॥

अथ कथयामासुस्तेऽपि—'देव, श्रूयतामनवद्यतनमेव राज्याभिषेकयोग्यमहः । केन्द्रस्थानवर्त्तिनः सर्वेऽप्युच्चग्रहाः, पुण्यो मासः, पूर्णा तिथिः, श्लाघ्यो योगः, प्रशस्तो वारः, शुभं नक्षत्रम् , कल्याणी वेला, विधीयतां यद्विधेयम्' इत्यभिधाय स्थितेषु तेष्वनन्तरमेव 'सुश्रोणि, श्रूयतां यदस्माभिः श्रुतमाश्चर्यम् ॥ घ ॥

(२) उचितमुचितमेतद्धैर्यधाम्नां नृपाणां
वयसि कटुनि कान्तालोचनानां तृतीये ।
इति रभसमिवास्य प्रस्तुतं श्लाघमानो
वियति पटुरकस्मादुत्थितस्तूर्यनादः ॥ २२ ॥

---

तवर्गमुपदिशन्त्युच्चारयन्ति । तवर्गस्य दन्त्यत्वात् । तथा मुखे भवा मुख्याः । तेऽप्यविरला विरलाः सम्पन्ना विरलीभूताः । बलिग्रस्तानां हि मांसमुक्ता दन्ता विरलाः स्युः । मुख्या श्चतुःसंख्या राजदन्ताः । 'राजाद्यः—' इति सूत्रोक्ता राजादयः ॥ क ॥

तदिति ॥ विषया इन्द्रियार्था देशाश्च ॥ ख ॥

एता इति ॥ यथाक्रमं धर्मार्थकाममोक्षाणामुपन्यासः ॥ २१ ॥

अथेति ॥ केन्द्रस्थानं शुभस्थानम् ॥ ग ॥

उचितेति ॥ कटुत्वमत्राप्रियत्वमेव ॥ २२ ॥

---

(१) एता इति—एताः श्रियः प्राप्य समधिगम्य परोपकारविधिना परोपकारेण श्लाघ्यतां श्लाघनीयताम् । नीताः प्रापिताः । पूर्वापरसिन्धुसीमानमभिव्याप्य नृपा राजानश्चिरं स्वाज्ञां स्वसमादेशं ग्राहिताः । भूभारक्षमौ राज्योद्धरणयोग्यो दोर्युगो भुजयुगो यस्य तेन । भवता वयं पुत्रिणः पुत्रवन्तो जाताः । तत् तस्मात् साम्प्रतम् । अस्य वयसो यदुचितं वने तत्कर्म कुर्मः ॥ २१ ॥

(२) उचितमिति—धैर्यधाम्नां धैर्यवतां नृपाणां राज्ञामेतदुचितम् । तृतीये वयसि । कीदृशे—कान्तालोचनानां रमणीनेत्राणां कटुनि अप्रिये । इति रभसमिव । अस्य प्रस्तुतं कर्म श्लाघ्यमानः प्रशंसन् । इति वियति, अकस्मात् पटुस्तूर्यनादो वाद्यध्वनिरुत्थितः ॥ २२ ॥

अपि च—

(१) उपरि परिमलान्धैः सस्वनं संचरद्भिर्मधुकरनिकुरम्बैश्चुम्ब्यमाना भरेण।
अविरलमधुधारासारसंसिक्तभूमिः सदसि सुरविमुक्ता प्रापतत्पुष्पवृष्टिः॥२३॥

(२) अवतेरुश्च तत्कालमेवाम्बरतलादुल्लसद्ब्रह्मकान्तिकलापपवित्रीकृताष्टदिग्भागभूमयः सकलसागरसरित्तीर्थाम्बुपूर्णकमण्डलुमृत्कुशकुसुमौषधिरुद्धपाणयो दर्शनादेवापनीतसमस्तकलिकल्मषाः केऽपि कुतोऽपि ब्रह्मर्षयः॥क॥

सहर्षेण सविनयेन सपरिवारेण च (३)चलत्कर्णोत्पलगलद्बहलरजःपुञ्जपिञ्जरितकपोलपालिना पृथ्वीपालेन प्रणम्य कृतातिथेयाः समुचितान्यलंचक्रुरासनानि॥ख॥

कृतकुशलप्रश्नालापाश्च प्रस्तुतकुमाराभिषेकस्य नरपतेः स्वस्वकमण्डलुवारीणि दर्शयामासुः॥ग॥

(४) इदं मन्दाकिन्याः सलिलमवगाहागतमरु-
त्पुरन्ध्रीणां पीनस्तनशिखरभुग्नोर्मिवलयम्।
इदं कालिन्द्याश्च प्रविकसिततीरद्रुमलता-
पतत्पुष्पैरन्तःसुरभिततरङ्गं नृप पयः॥२४॥
(५) इदं गोदावर्यास्त्रिनयनजटाखण्डगलितं
महाराष्ट्रीनेत्रैः कृतकुवलयं मज्जनविधौ।
इदं चापि प्रेङ्खन्मुनिजनविकीर्णार्धकमलं
पयो विन्ध्यस्कन्धस्थलविलुलितं नार्मदमपि॥२५॥युग्मम्।

---

(१) उपरीति—उपरि परिमलान्धैर्मकरन्दान्धैः सस्वनं सशब्दं सञ्चरद्भिर्विचरद्भिर्मधुकरनिकुरम्बैर्भ्रमरवृन्दैः। भरेणातिशयेन चुम्ब्यमाना चूष्यमाना। अविरलं निरन्तरं मधुधारासारेण मधुधारापातेन संसिक्ता भूमिः यया सा। सुरविमुक्ता देवत्यक्ता पुष्पवृष्टिः कुसुमवृष्टिः सदसि प्रापतत्॥२३॥

(२) अवतेरुरिति—उल्लसन् प्रकाशमानो यो ब्रह्मकान्तिकलापस्तेन पवित्रीकृताः पावनीकृता अष्टदिग्भागभूमयो यैस्ते। सकलानि सागरसरित्तीर्थाणि तेषामम्बुना पयसा पूर्णानि कमण्डलुमृत् कुशः कुसुमानि औषधयस्ताभी रुद्धः पाणिर्येषां ते॥१९॥

(३) चलदिति—चलत्कर्णोत्पलं तेन गलद्बहलरजःपुञ्जो बहलपरागसङ्घः। तेन पिञ्जरिता पिङ्गला कपोलपालिर्गण्डपालिर्येन तेन।

(४) इदमिति—अवगाहाय स्नानायागता मरुतो देवास्तेषां रमणीनाम्। पीनस्तनानां पीवरकुचानां शिखरैरग्रभागैर्भुग्न ऊर्मिवलयो वीचीसमूहो यस्य। इदं मन्दाकिन्या गङ्गायाः सलिलम्। प्रविकसिता विकसितास्तीरस्थद्रुमास्तटवृक्षा लता वल्लयश्च ताभ्यः पतन्ति पुष्पाणि कुसुमानि तैरन्तःसुरभिता सुगन्धितास्तरङ्गा यस्य तत्। इदं कालिन्द्याः पयो वर्त्ततेऽभिषेकार्थम्॥२४॥

(५) इदमिति—मज्जनविधौ स्नानकाले। महाराष्ट्रीनेत्रैर्महाराष्ट्रस्त्रीनयनैः। कृतकुवलयं विहितकमलम्। त्रिनयनः शिवस्तस्य जटाखण्डात् गलितं पतितम्। इदं गोदावर्याः सरितो नीरं वर्त्तते। प्रेङ्खन्तो ये चलन्तो ये मुनिजनास्तैर्विकीर्णानि विक्षिप्तानि अर्धकमलानि

इतश्च—

तदेतत्पुण्यानां परममवधिं प्राप्तमुदधेः
पयः प्रक्षाल्याङ्घ्री शयनसमये शार्ङ्गधनुषः ।
विहारायोन्मज्जद्वरुणवनितावृन्दवदनैः
क्षणं यत्रोत्फुल्लन्नवकमलखण्डश्रियमधात् ॥ २६ ॥

राजा तु तत्कालमुन्मीलद्बहलपुलकाङ्कुरकोरकितदेहः किमप्यद्भुतरसेनावेशित इव विधूय शिरश्चिन्तयाञ्चकार ॥ क ॥

'नूनमयमस्मद्गृहे हरिहरब्रह्मणामन्यतमः कोऽप्यवतीर्णो भविष्यति । यतः । क्वायं शिक्षाक्रमः, क्वेयमस्माकमाकस्मिकी यूनोऽस्याभिषेकाय बुद्धिः, क्व चानुकूलकालसंपत्तिः, क्व चामी समस्ताभिषेकोपकरणपाणयो महामुनयः ॥ ख ॥

सर्वथा नमोऽस्तु घटितदुर्घटाय वेधसे । यस्यायमेवमद्भुतो व्यापारः, इत्यवधारयन्नुत्थाय गृहीत्वा तानि तीर्थोदकानि कृत्वा कनककुम्भेषु (१)-तात्कालिकास्फालितमृदङ्गझल्लरीरवरभसोल्लास्यविलासिनीवृन्दैरानन्द्यमानो मङ्गलोद्गारमुखरपरिजनपरिवृतः सह सालङ्कायनेन 'सहस्रं समास्तात एवानुपालयतु राज्यम्' इत्यभिदधानमनिच्छन्तमपि नलं बलान्निवेश्याभिषेकपट्टे स्वयमेवाभिषेकमकरोत् ॥ ग ॥

परिधाप्य च मङ्गलाभरणवाससी सिंहासनमारोप्य पुत्रप्रेम्णा पुरः स्थित्वा कनकदण्डपाणिः क्षणं प्रातिहार्यमन्वतिष्ठत् ॥ घ ॥

सालङ्कायनोऽप्यतिस्नेहेनास्योपरि लम्बितमुक्ताकलापमास्रवत्सुधाधारमिन्दुमण्डलमिव कनकदण्डमापाण्डुरमातपत्रमधारयत् ॥ ङ ॥

सामान्तचक्रं च (२)चलच्चामीकरचारुचामरकलापव्यापृतकरपल्लवमस्याग्रे विनयमदर्शयत् ॥ च ॥

मुनयोऽप्युच्चारयांचक्रुश्चतुर्वेदप्रशस्तमन्त्रान् । उत्थाय च गृहीत्वाक्षताञ्शिरसि विकिरन्तोऽस्य पुनरिदमवोचन् ॥ छ ॥

---

तदेतदिति ॥ शयनसमये युगान्ते शार्ङ्गधनुषो विष्णोः सम्बन्धिनौ चरणौ प्रक्षाल्य पुण्यानां परमसीमानं गतमुदधेः समुद्रस्य तदेतत्पयो वर्तते । यत्र विहाराय क्रीडार्थमुन्मज्जन्ति यानि वरुणवधूवृन्दवक्त्राणि तैः कृत्वा विकसदम्भोजखण्डशोभां क्षणं दधौ ॥ २६ ॥

सर्वथेति ॥ घटितं योजितं दुर्घटं शिक्षाप्रक्रमादिलक्षणं येन तस्मै वेधसे नमः ॥ग॥

---

यस्मिंस्तत् । विन्ध्यस्कन्धस्य विन्ध्याचलोपरिभागस्य स्थलेषु विलुलितं विकीर्णम् । इदं नार्मदमपि नर्मदायाः पयो वर्त्तते ॥ २५ ॥

(१) तात्कालिकेति-तात्कालिस्तत्काले आस्फालितो मृदङ्गो झल्लरी च तयो रवः शब्दस्तेन रभसोल्लास्या वेगेन नृत्यन्त्यो विलासिन्यस्तासां वृन्दैः ।

(२) चलदिति-चलन्तश्चामीकरचारुचामरकलापाः सुवर्णसुन्दरचामरनिवहास्तेषु व्यापृताः आसक्ताः करपल्लवाः भुजकिसलया यस्य तत् ।

(१)'याः स्कन्दस्य जगाद तारकजये देवः स्वयंभूः स्वयं
स्वःसाम्राज्यमहोत्सवेऽपि च शचीकान्तस्य वाचस्पतिः।
ताभिस्तेऽद्य विरञ्चिवक्त्रसरसीहंसीभिराशास्महे
वैदीभिर्वसुधाविवाहसमये मन्त्रोक्तिभिर्मङ्गलम्,॥ २७॥
अन्यदपि तत्र दिवसे शृणु समाकर्ण्यतां यदद्भुतमभूत्॥ क॥
(२) दिशः प्रसेदुः सुरभिर्ववौ मरुद्दिवो निपेतुः सुरपुष्पवृष्टयः।
कृताभिषेकस्य नलस्य निस्वनाननाहता दुन्दुभयोऽपि चक्रिरे॥ २८॥
अन्तरिक्षे च कोऽप्यदृश्यमान एवाशीःश्लोकद्वयमपठत्॥
'अहीनां मालिकां बिभ्रत्तथापीताम्बरं वपुः।
हरो हरिश्च भूपेन्द्र करोतु तव मङ्गलम्॥ २९॥
अपि च—
लीलया मण्डलीकृत्य भुजंगान्धारयन्हरः।
देयाद्देवो वराहश्च तुभ्यमभ्यधिकां श्रियम्,॥ ३०॥
इत्याशास्य विश्रान्तायां वियद्वाचि स्थित्वा च किंचित्कृतोचितापचितिषु गतेषु क्षणादन्तर्धानं मुनिषु 'समुच्छ्रीयन्तां वैजयन्त्यः, वध्यन्तां तोरणानि, सिच्यतां चन्दनाम्भोभिः पन्थानः, मण्डयन्तां मसृणमुक्ताफलक्षोदरङ्गा-

अहीति॥ शिवोऽहीनां सर्पाणां स्रजं तथा तेन प्रकारेण हताम्बरं ताण्डवादिष्वतिविततमूर्तित्वाद्व्याप्ताकाशम्। अथ च पराचीनावस्थायां दिगम्बरत्वोदिताम्बरं गतवस्त्रम्। यद्वा आ समन्तात्पीतं ग्रस्तमतिविततया छन्नमम्बरमाकाशं येन। तथाविधं वपुर्नित्यं बिभ्रत्। हरिश्च विष्णुर्वनमालीति ख्यातत्वात्। अहीनां पूर्णामेव मालिकाम्। तथा पीताम्बरं हारिद्रवसनं वपुर्बिभ्रत्। राजेन्द्र, तव मङ्गलं करोत्वित्यर्थः। न केवलं व्याप्तपृथ्वीकम्। हताम्बरमपीत्यपिशब्दार्थः। अष्टमूर्तिर्हि भगवान्। यदाह मल्हणः 'उर्वीसमीरयजमानजलानलार्कसोमाम्बरादिभिः' इति॥ २९॥
लीलयेति॥ लीलयावज्ञया भुजङ्गान्सर्पान् मण्डलीकृत्य हरः। भुजं मण्डलीकृत्य गां वसुधां धारयन् वराहश्च तुभ्यं समधिकां श्रियं देयात्। अत्र वराह इति नरवराहमूर्तिर्नरसिंहवद्भुजमण्डलीकरणानुरोधाज्ज्ञेयः॥ ३०॥

(१) या इति—देवः स्वयम्भूर्विधिः स्कन्दस्य कुमारस्य तारकजये तारकासुरविजये। याः आशिषो जगादावोचत्। तथा वाचस्पतिर्बृहस्पतिः। शचीकान्तस्येन्द्रस्य। स्वःसाम्राज्यस्य स्वर्गाधिपत्यस्य महोत्सवे महे जगाद। अद्य ते तव वसुधाविवाहसमये राज्याभिषेककाले। विरञ्चिवक्त्राण्येव ब्रह्माननान्येव सरस्यस्तत्र हंसीभिर्विरटाभिः। वैदीभिर्वेदोक्ताभिर्मन्त्रोक्तिभिः। मङ्गलं कल्याणमाशास्महे वदामः॥ २७॥
(२) दिश इति—तत्राभिषेककाले दिश आशाः प्रसेदुः। प्रसन्ना बभूवुः। मरुद्वायुः सुरभिः सुगन्धो ववौ प्राचरत्। दिवः सकाशात् सुरपुष्पवृष्टयो देवकुसुमवर्षाः निपेतुः। अनाहता अप्रेरिता दुन्दुभयोऽपि कृताभिषेकस्य जाताभिषेकस्य नलस्य निस्वनान् जयशब्दान्। चक्रिरे विहितवत्यः॥ २२॥

वलीभिः प्राङ्गणानि, क्रियन्तां कुसुमप्रभाकरभाञ्जि चत्वराणि, पूज्यन्तां द्विजन्मानो देवताश्च, दीयन्तां दानानि, गीयन्तां मङ्गलानि, विसृज्यन्तां वन्दिवन्द्यः, मुच्यन्तां पक्षिणोऽपि पञ्जरेभ्यः' इति श्रूयमाणेषु परितः परिजनालापेषु लास्योन्मादिनि मृदुमङ्गलोद्गारमुखरे संचरति पुरपथेषु पौरनारीजने स दिवसः संप्राप्तस्वर्गसुखस्येव भुक्ताशेषभुवनस्येवास्वादितामृतरसस्येवानुभूतपरमानन्दस्येव राज्ञः कृतकृत्यतां मन्यमानस्यातिक्रान्तवान् ॥ क ॥

एवमतिक्रामत्सु केषुचिद्दिवसेषु, जरठीभूते महोत्सवव्यतिकरे, गतवति यथायथमामन्त्रिताथाते समस्तसामन्तलोके, यौवराज्यरञ्जिते च परितः परिजने जनेश्वरो रिपुपयोधिवडवानलं नलमावभाषे ॥ ख ॥

(१) 'तात, किमपि ब्रूमो यदि न खिद्यसे। संप्रति प्रियं सख्यं श्रेयस्करमस्माकमैणम्, न स्त्रैणम्। आभरणाय योग्या जटाभाराः, न हाराः। साहाय्याय साधवो बुधाः, न बान्धवाः। शयनायोचिता कुशपूलिका, न तूलिका। क्रीडायै वरा वेगवन्तो निर्झरप्रवाहाः न वाहाः। प्रार्थनीयाश्च हरप्रसादाः, न प्रासादाः ॥ ग ॥

तदायुष्मन्नेष दृष्टोऽस्यापृष्टोऽस्याश्लिष्टोऽसि क्षमितोऽसि दुरुक्तमुक्तः' इत्यभिधायोत्सङ्गमारोप्य च तत्कालगलद्बहलबाष्पाम्बुप्लवप्लाविते वक्षसि निधाय परिष्वज्य च पुनः पुनः पुलककोरकितभुजलताभ्यामन्तर्मन्युभरनिरुध्यमानोत्तरमजस्रमास्रवदश्रुक्लिन्नकपोलमाविर्भवन्मोहमूर्छान्धकारकुञ्चितलोचनमिममाघ्राय मूर्ध्नि वनाय वनितासहायः प्रतस्थे ॥ घ ॥

प्रस्थिते च तस्मिन्परिहृतराज्ये राजनि, रजनीवियुज्यमानचलच्चक्रवाकीष्विव कृतकरुणाक्रन्दासु प्रजासु, प्रतिभवनमुच्चलितेषु जरत्पौरजनेषु, 'कल्याणिन्, एष पितृप्रणयप्रणामाञ्जलिरस्य क्रमागतकर्मकारिणः श्रुतशीलस्य कृतापराधस्यापि त्वया सहनीयाः कतिपयेऽप्यस्मदनुकम्पयाऽपराधाः। पश्य। पयोराशेर्नोद्वेगाय मृगाङ्कस्य मीलयन्तोऽपि कमलाकरान्कराः। किं न सहन्ते सुमनसोऽपि भ्रमरभरभञ्जनानि' इत्यभिधाय समर्प्य च स्वसुतमुच्चलिते च प्रेम्णानुगतभूभुजि भुजायामनिर्जितसाले सालङ्कायने, बालमत्स्य इव शुष्यत्सरःसलिलसंतापवेपिताङ्गः, करिकलभ इव वियुज्यमानयूथपतिः, पतद्बहलबाष्पबिन्दुसंदोहैर्वक्षसि विधीयमानहारः 'हा तात' इति ब्रुवन्नलो न लोचने तं दिवसं समुदमीलयत् ॥ ङ ॥

केवलममन्दमन्यूद्गारगद्गदया गिरा पुनः पुनरिमं श्लोकमपठत् ॥ च ॥

तातेति। स्त्रीणामिदं स्त्रैणम्। 'स्त्रीपुंसाभ्यां नञ्स्नञौ' इति नञ् ॥ ग ॥

तदेति। अन्तर्मध्ये मन्युभरेण दैन्यातिशयेन निरुद्धमानमुत्तरं यस्य ॥ घ ॥

(१) तातेति—अत्र कविः वानप्रस्थं प्रस्तौति राज्ञः। ऐणं मार्गं मृगसमूह इति यावत्।

(१) तत्तातस्य कृतादरस्य रभसादाह्वाननं दूरत-
स्तच्चाङ्के विनिवेश्य बाहुयुगलेनाश्लिष्य संभाषणम् ।
ताम्बूलं च तदर्धचर्वितमतिप्रेम्णा मुखेनार्पितं
पाषाणोपम हा कृतघ्न हृदय स्मृत्वा न किं दीर्यसे' ॥ ३१ ॥

एतच्चाकर्ण्य दमयन्ती चिन्तितवती—'अहो, स्नेहवानार्द्रहृदयः खल्व-सौ महानुभावः । तत्सर्वथास्मत्प्रीतिपात्रं भवितुमर्हति' इत्यवधारयन्ती पुनः पप्रच्छ ॥ क ॥

'हुं हंस, ततस्ततः' ॥ ख ॥

सोऽपि राजहंसः कथामुपसंहर्तुमिच्छन्निमं श्लोकमुच्चारयांचकार ॥ ग ॥
'सुन्दरादरि, ततश्च—

(२) किमपि परिजनेन स्वेन तैस्तैर्विनोदैः
पितृविरहविषादं सोऽथ विस्मार्यमाणः ।
गमयति परिवर्त्तं वासराणामिदानीं
हरचरणसरोजद्वन्द्वदत्तावधानः ॥ ३२ ॥

इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हर-
चरणसरोजाङ्कायां चतुर्थ उच्छ्वासः समाप्तः ॥

---

हुं हंसेति । हुमित्यव्ययं प्रश्ने ॥ ख ॥

इति विषमपदप्रकाशमेतं दमयन्त्यां तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥

इति चण्डपालविरचिते दमयन्तीकथाविवरणे चतुर्थ उच्छ्वासः समाप्तः ॥

---

( १ ) तदिति—कृतो विहित आदरो येन तस्य तातस्य पितुः। रभसात् वेगेन दूरतस्तत्। आह्वाननं समाह्वानम् । अङ्के उत्सङ्गे विनिवेश्य तथा बाहुयुगलेन भुजद्वयेन समालिङ्ग्य तत् पूर्वानुभूतं सम्भाषणं संलपनम् । अतिप्रेम्णा स्नेहेन । मुखेन वदनेनार्पितं दत्तम् । अर्धचर्वितं तत् ताम्बूलम् । स्मृत्वा । हे पाषाणोपम प्रस्तरसम । कृतघ्न ? हृदय । किं न दीयसे । इति हा कष्टम् ॥ ३१ ॥

( २ ) किमिति—अथ स नलः स्वेन परिजनेन सेवकवृन्देन तैस्तैर्विनोदैः पितृविरहवि-षादं जनकवियोगदुःखं विस्मार्यमाणः। इदानीं वासराणां दिनानां परिवर्त्तं गमयति । कीदृशः सः । हरिचरणसरोजद्वन्द्वे दत्तमवधानं येन सः ॥ ३२ ॥

## अथ पञ्चम उच्छ्वासः ।

अथ विश्रान्तवाचि वाचस्पताविवोच्चारितानष्टविस्पष्टवर्णो वर्णितनिषधराजे राजहंसे 'अहं सेवार्थी' इत्यभिधायोपरुध्यमाना कृतोत्तरासङ्गेन द्विजन्मना श्रुतानुरागेण । 'वत्से, चिरान्मिलितासि' इत्युक्त्वैवाश्लिष्टा हृदये प्रवृद्धया चिन्तया । 'पुत्रि, कथंकथमपि दृष्टासि' इति संभाष्येवालिङ्गिता सर्वाङ्गेषूत्कम्पजनन्या रोमाञ्चावस्थया । 'तरुणि, त्यज्यतामिदानीं शैशवव्यवहारः, इत्यभिधायेव मुग्धे स्पृष्टा प्रमुखेण मुखे वैवर्ण्येन । 'मुग्धे मुच्यतां स्वच्छन्दभावः' इत्यनुशास्येव आहिता निजाज्ञां गुरुणा मकरध्वजेन दमयन्ती । तथापि तृणमिव महानुभावतामवलम्ब्यानुपलक्षितावस्थमवतस्थे ॥ क ॥

तां च तथा बलात्सरलीभवन्निश्वाससूचितान्तर्मन्मथव्यथावेगाम्, अकाण्डकुण्ठितधैर्यासिधारां, हृत्पुण्डरीके मनोरथानीतनलावलोकनार्थमिवान्तर्मुखीभूतचक्षुर्व्यापाराम्, आकस्मिकस्मरापस्मारेण दाम्यन्तीं दमयन्तीमवलोक्य तदिङ्गिताकारकुशला परिहासव्यसनिनी परिहासशीला नाम सखी 'महानुभाव, नास्माकमद्यापि तद्गुणश्रवणाय श्राम्यति श्रोत्रेन्द्रियम् । न तृप्यति प्रश्नरसायनाय जिह्वा । न सन्तुष्यति विशेषज्ञानाय शेमुषी । नानुरागायोपरमते मनः । तत्कथं कृतवानसि गीतस्येव विस्वरम्, वाद्यस्येव वितालम्, लास्यस्येवान्यथापदप्रचारम्, अत्यन्तरसविच्छेदकारिणं कथाप्रक्रमस्य विरामम्, एतत्परमपि पिपासया पयः पातुमुद्यतस्येवाविरतायां तृषि वारिधारानिवारणम् । इयं सा भुञ्जानस्यार्धतृप्तिः, सोऽयमप्राप्तरतस्य रिरंसाव्याघातः । तन्न युक्तमिवान्तरे विरन्तुम् । निष्कारणोपकारिन्, प्रवर्त्यतां पुण्यराशेस्तस्य स्वरूपाख्यानामृतप्रपामण्डपो, निर्वान्तु च चिरकालमनङ्गग्रीष्मोपतप्ता एवंविधन्यकाः प्रसारितश्रवणाञ्जलयः'

---

अथेति । अनन्तरं । स्तुतनले हंसे सेवितुकामोऽहमित्युक्त्वैव कृत उत्पादित उत्तरस्यां दिशि विषये आसङ्ग आसक्तिर्येन । नलाधारत्वादुत्तरस्याः । तथा द्वाभ्यां (तस्मिन्स्मितमुखे यूनि यूपदीर्घभुजद्वये १ उ. ६९ श्लो.) येनोदीच्याभ्वगेनोक्तं तस्मादेकस्मात् द्वितीयाद्धंसाजन्मोत्पत्तिर्यस्य स तथाभूतः । श्रुतादाकर्णनाद्योऽनुरागः प्रेमबन्धः । तेनोपरुध्यमाना व्याप्यमाना । कृतवैकक्षकेणाध्ययनानुरागेन विप्रेण दाक्षिण्यं नीयमानेत्यर्थान्तरम् । एवंभूता दमयन्ती प्रकर्षेण वृद्धिं गतया चिन्तया पुत्रि चिरान्मिलिता त्वमित्युक्त्वेव चित्तेऽवष्टब्धा । तथा उत्कम्पं जनयतीति उत्कम्पजनन्या । प्रमुखेण प्रधानेन । गुरुणा दुर्वहभारेण । अर्थान्तरे तु प्रवृद्धया जरत्या । उद्गतकम्पया जनन्या मात्रा । प्रकृष्टं मुखं यस्य तेन प्रमुखेन । गुरुणा आचार्येण ॥ क ॥

तां चेति । दाम्यन्तीं गृह्यमाणां स्मरणपरवशामित्यर्थः । तदिङ्गिताकारेत्यत्रेङ्गितं चेष्टितम् । आकारो मुखरागादिः । वारिधारया विधारणं विच्छेदः । 'निवारणम्' इति वा

इति दमयन्तीमधन्यत्वेन कटाक्षयन्ती तं राजहंसमालापयाञ्चकार ॥ क ॥

सोऽपि 'सुन्दरि, किमन्यत्तस्य समस्तस्त्रीहृदयप्रासादप्रतिष्ठापितप्रतिमस्याद्यापि प्रशस्यते ॥ ख ॥

यत्र श्रूयमाणे न मधुरो वेणुवीणाक्वणः, दृष्टे नाभिरामः कामः । संभाषिते न सारा सरस्वती, परिचिते न श्लाघ्यममृतम् , अभ्यस्ते नानन्दीन्दुः, प्रसादिते न प्रशंसास्पदं धनदः ॥ ग ॥

किं वहुना—

(१) भवति यदि सहस्रं वाक्पटूनां मुखानां निरुपममवधानं जीवितं चापि दीर्घम्।
कमलमुखि तथापि क्ष्मापतेस्तस्य कर्तुं सकलगुणविचारः शक्यते वा न वेति॥१॥

अपि च—

(२) संसाराम्बुनिधौ तदेतदजनि स्त्रीपुंसरत्नद्वयं
नारीणां भवती नृणां पुनरसौ सौभाग्यसीमा नलः ।
सा त्वं तस्य कुरङ्गशावनयने योग्यासि पृथ्वीपते-
रेतत्ते कथितं किमन्यदधुना यामो वयं स्वस्ति ते ॥ २ ॥

अन्यच्च—

(३) चन्द्रमुखि, महानाम्नि सुसंधिकृति सुसमासाख्याततद्धिते सत्कारके

---

पाठः । रिंसायां सत्यां व्याघातोऽन्तरायः । 'रतिव्याघातः' इति पाठे तु स्पष्टमेव ॥ क ॥

यत्रेति । श्रूयमाणे नेत्यादौ सप्तम्यन्तान्वयः । अभ्यस्ते परिशीलिते ॥ ग ॥

संसारेति । स्वस्तियोगे त इति चतुर्थ्यन्तम् ॥ २ ॥

चन्द्रेति । चन्द्रमुखीति संबोधनम् । नाम प्रातिपादिकं तद्विषयं प्रकरणमपि नामेत्युपचारे सति महदिति विशेषणस्य सफलत्वम् । नाममात्रस्य महच्छब्देन व्यवच्छेद्या-

---

(१) भवतीति—यदि वाक्पटूनां वचनदक्षाणां मुखानां वदनानां 'सहस्रं' भवति । तथा निरुपमं विसदृशमवधानं चित्तैकाग्र्यं स्यात्। जीवनं च दीर्घं चिरकालं भवति । हे कमलमुखि पङ्कजानने ? तथापि तस्य क्ष्मापते राज्ञः सकलानां सर्वेषां गुणानां विचारः समालोचनं कर्तुं शक्यते वा न वेति संशय एवास्माकम् ॥ १ ॥

(२) संसारेति-संसार एवाम्बुनिधिः समुद्रस्तस्मिन् । तदेतत् । स्त्रीपुंसरत्नद्वयमजनि अजनिष्ट । जनी प्रादुर्भावे । 'दीपजनबुध' इत्यादीना च्लेश्चिणादेशः । किं तद् रत्नद्वयमिति व्याचष्टे—नारीणां रमणीनां मध्ये भवती दमयन्ती।रत्नमुत्तमा। तथा नृणां नराणां मध्ये । असौ नलः सौभाग्यसीमा सौन्दर्यस्य परमावधिभूतः । कुरङ्गस्य शावः पोतस्तद्वन्नयने यस्यास्तत्संबुद्धौ । अत्र शावकग्रहणं चापल्यद्योतनार्थम् । सा स्त्रीणां मध्ये रत्नभूता त्वं तस्य पृथ्वीपते रत्नभूतस्य नलस्य योग्यासि पाणिपीडने समुचितासि । इत्येतत्ते कथितमुक्तम् । अधुनान्यत्किं, ते स्वस्ति कल्याणमस्तु वयं च यामः ॥ २ ॥

(३)चन्द्रेति–व्याकरणपक्षे–नाम प्रातिपदिकम्, सन्धिः पञ्चसन्धिः, समासस्तत्पुरुषादि, आख्यातं क्रिया तद्धितप्रत्ययादिः । कारकं कर्तृकर्मादि । परिभाषा–आधुनिकः संकेतः। परिरभाषादिविवरणं परिभाषेन्दुशेखरग्रन्थे विलोकनीयम् । बलाबलविचारः पूर्वत्रासिद्धमित्यादिसूत्रबोधित उत्सर्गापवादविचारः इत्यादि विज्ञेयम् ।

परिभाषाकुशले बलाबलविचारिणि विचार्यमाणे व्याकरणे प्रेष्यमाणे च दूते नापशब्दसम्बन्धो भवति । तत्प्रेष्यतां तथाविधस्तस्यान्तिकं कोऽपि दूतः॥क॥

'न च बृहत्यासंपदान्विते जगत्याख्याते सत्कृतगुरुगणे शार्दूलविक्रीडिताडम्बरिणि पुण्यश्लोके पर्यालोच्यमाने छन्दसि प्रार्थ्यमाने च तस्मिन्निषधेश्वरे वृत्तभङ्गो भवति' इत्यभिधाय गन्तुमुदचलत् ॥ ख ॥

उच्चलितं च तं परिहासशीला पुनर्बभाषे ॥ ग ॥

(१) 'महानुभाव, यथेयमनुरागकन्दलैरालापैस्त्वयोक्ता, तथा सोऽपि स्पृहणीयोक्तिभिरभिधातव्यः । यतो न ह्येकहस्ततलेन तालिका वाद्यते, न चैकं तप्तमतप्तेनापरेण लोहं लोहेन संधीयते, नाप्येकं रक्तमरक्तेनान्येन वस्त्रमपि वाससा संयोजितं शोभां लभते । केवलं वियुगलमेव भवति' इति ॥ घ ॥

एवंवादिनीं दमयन्ती परिहासशीलामलपत् ॥ ङ ॥

'सखि, किमस्य निष्कारणवत्सलस्यैवमभ्यर्थ्यते ॥ च ॥

यस्यास्मासु निरपेक्षः पक्षपातः, स्वभावजं सौजन्यम् , अकृत्रिमः स्नेहभावः, अनुपचरितमुपकारित्वम् , अपरिचया प्रीतिः अनभ्यासं सौहार्दम् , अदृष्टपूर्वा मैत्री ॥ छ ॥

---

भावात् । सुष्ठु सन्धिर्वर्णसंश्लेषः कृत्संज्ञकप्रत्ययश्च यत्र । समासस्तत्पुरुषादिः । आख्यातं क्रिया । तद्धितोऽणादिः । कारकमपादानादि । परिभाषा न्यायसूत्राणि । बलाबलं पूर्वापरविधीनां बाधस्थितिः । अपशब्दोऽसाधुशब्दः । दूतपक्षे । नाम संज्ञा । सुष्ठु सन्धिं पणबन्धं करोतीति क्वौ सप्तमी । सुष्ठु समासेन संक्षेपेणाख्यातं कथितं तस्मै हितं येन तस्मिन् । सत्कारके सत्क्रियाजनके । परितो भाषाः संस्कृतप्राकृताद्याः कर्णाटादिदेशभाषा वा तासु दक्षे । बलाबलं शक्त्यशक्ती । अपशब्दोऽपवादः ॥ क ॥

ननु यद्यहं दूतं प्रेषयिष्यामि । तदा 'स्वच्छन्दचारिणीयम्' किंवदन्ती भविष्यतीत्याशङ्क्याह–न चेति ॥ बृहतीजगतीशब्दौ छन्दोजातिवचनौ तृतीयान्तौ ख्यातपदेन प्रसिद्धार्थेन योज्यौ । तथा सङ्गतैः पदैरन्विते । अथवा छन्दसि कथम्भूते । पदान्विते कथं यथा भवति बृहत्यासं बृहत्यां जातौ आसोऽवस्थानं यस्येति पदान्वयक्रियाविशेषणम् । यदिवा बृहत्या जात्या हेतुभूतया याऽसौ सम्पच्छोभा तयान्विते । पक्षे बृहत्या गुर्व्या सम्पदा श्रियान्विते । जगति लोके आख्याते कीर्तिते । गुरवो विपरीतलकारादयः । आचार्याश्च । शार्दूलविक्रीडितं छन्दोनाम, सिंहविलसितं च । श्लोकः पद्यं यशश्च । वृत्तं पद्यं शीलं च । इह यद्यपि श्लोकोऽनुष्टुप्छन्दो लोके प्रसिद्धम् । तथापि केचित्सर्वमपि पद्यं श्लोकमाहुः ॥ ख ॥

यस्येति ॥ पक्षो मित्राद्यवष्टम्भः पक्षती च । अभ्यासः सामीप्यम् ॥ छ ॥

---

(१) महानुभावेति–यथेयमनुरागकदन्लैः प्रेमाङ्कुरभूतैरालापैस्त्वयोक्ता तथैव प्रियोक्तिभिर्नलोऽपि वक्तव्यः । न ह्येकहस्तस्य तलेन तालिका वाद्यते, एकं तप्तं लोहं लोहेनापरेणातप्तेन संधीयते । न च रक्तवस्त्रमरक्तवस्त्रेण संबद्धं सत शोभां लभते । अतस्त्वया यथेयं दमन्ती समुत्कण्ठीकृता, तथैव नलोऽपि विधेय इति सारः ॥

तदेवंविधो निर्निमित्तबन्धुः किमभ्यर्थ्यते । केन याच्यन्ते चन्द्रचन्दनसज्जानाः परोपकाराय । किन्तु कतिपयमुहूर्त्तमैत्रीरञ्जितास्मन्मनसो दुस्त्यजस्याकाण्ड एवास्य गन्तुमुत्सहमानस्य किं ब्रूमः । मा गा इत्यशकुनम् , गच्छेति निष्ठुरता, यदिष्टं तद्विधीयतामित्यौदासीन्यम् , आदर्शनात्प्रियोऽसीति क्रियाशून्यालापः, कस्त्वमेवंविधो दिव्यवाक्पद्धिरत्नमित्यप्रस्तुतप्रश्नः, केनार्थीत्यप्रक्रान्तम् , किं ते प्रियमाचरामीत्युपचारवचनम् , कृतोपकारोऽसीति प्रत्यक्षस्तुतिः ॥ क ॥

तन्न जानीमः कल्याणबन्धो, किमुच्यसे । वरमदर्शनमेव भवादृशाम् , न तु (१)लूयमानाङ्गावयवदुःसहो दर्शनव्याघातः । वरमनास्वादितमेवामृतम् , न तु सकृत्पीत्वा पुनरलाभदुःखम् ॥ ख ॥

अतः पार्थ्यसे भूयो दर्शनार्थम्, इयं भविष्यति भवत्प्रियस्य कस्याप्युपायनमात्रमस्मदनु(२)स्मरणनाटकसूत्रधारी हारलता' इत्यभिधाय नलमुररीकृत्य 'महानुभाव, द्वाभ्यां श्रुतोऽसि पान्थादस्माद्राजहंसाच्च, द्वाभ्यामुह्यसे वाचा हृदयेन च, द्विकालं स्मर्यसे दिवा नक्तं च, द्वयी गतिरस्माकमिदानीं त्वं वा मृत्युर्वा' इति द्विसंख्यसंदेशार्थमिव द्विगुणीकृत्योन्मुच्य च स्वकण्ठकन्दलादुत्कण्ठितामिव स्वां मूर्त्तिमतीं तस्य मुक्तावलीं गले व्यलम्बयत्॥ग॥

सोऽपि 'सुन्दरि, सोऽयं स्कन्धीकृतो मया मुक्तावलीच्छलेन तस्य पुरो भवद्वर्णनाभारः" इत्यभिधाय सह तेन विहंगमगणेनोत्पपात ॥ घ ॥

उत्पतिते च नभस्तलम् 'आगच्छत, संपद्यन्तां सफललोचनाः, पश्यतापूर्वं स्त्रीरत्नम्' इति चलत्पत्त्रपल्लवव्याजेन दूराद्दिक्पालानिवाह्वयति (३)तीव्रब्रध्नमयूखसंतप्तां दिवमिवोपवीजयति, दिक्कुञ्जरनिरुद्धावकाशा आशा इवाश्वासयति, पक्षिमण्डले तस्मिन्विस्मयोन्मुखी सा भूपालपुत्री निर्निमेषं निक्षिप्य चक्षुश्चिरमूर्ध्वैवावतस्थे ॥ ङ ॥

चिन्तितवती च—

(४) 'तात तावन्ममाप्येवं न विधत्से प्रजापते ।
पक्षौ पक्षिवदुड्डीय येन पश्यामि तन्मुखम् ॥ ३ ॥

---

सोऽपीति ॥ स्कन्धीकृतोऽङ्गीकृतः ॥ घ ॥

उत्पतित इति ॥ दिक्पालानाह्वयतीत्यनेन भाविदिक्पालागमनं सूच्यते ॥ ङ ॥

---

(१) लूयमानेति—लूयमानानि उत्पाट्यमानानि यानि अङ्गावयवानि तद्वद् दुःसहः ।
(२) अस्मदिति—अस्माकमनुस्मरणं ध्यानं तदेव नाटकं तस्य सूत्रधारी प्रारम्भकर्त्री ।
(३) तीव्रेति—तीव्रास्तीक्ष्णा ब्रध्नस्य सूर्यस्य मयूखाः किरणास्तैः संतप्ताम् ।
(४) तातेति—हे तात प्रजापते । ममाप्येवं पक्षौ कथं न विधत्से कुरुषे । येन कारणेन पक्षिवत्पक्षधारिवत् उड्डीयाकाशमार्गेण गत्वा तन्मुखं पश्यामि ॥ ३ ॥

अपिच—

(१) उड्डीय वाञ्छितं यान्तो वरमेते विहङ्गमाः।
न पुनः पक्षहीनत्वात्पङ्गुप्रायं कुमानुषम् ॥ ४ ॥

इति चिन्तयन्ती गतेष्वपि तेषून्मुखी तां दिशमनुविस्मयविस्फारलोचना निस्पन्दतया काष्ठकल्पामवस्थां दधाना चिरात्सखीभिः सम्बोध्य स्वगृहमनीयत ॥ क ॥

(२) ततः प्रभृति च तस्याः सरलीभवन्ति निश्वासा न हासाः, स्खलन्ति वाचो न शुचः, वर्धते तन्द्रा न निद्रा, द्रवति स्वेदाम्भो न स्तम्भः, मन्दायते स्वरो न स्मरः, वाञ्छा चन्दनाय न स्पन्दनाय, सन्तापशान्तये तद्गुणादानं न स्नानम्, प्रीयते हारो नाहारः, सुखायाङ्गे लगन्नुद्यानप्रभञ्जनो न जनः ॥ख॥

पठति च मुहुर्मुहुरिमं श्लोकम् ॥ ग ॥

(३) विश्राम्यन्ति न कुत्रचिन्न च पुनर्मुह्यन्ति मार्गेष्वपि
प्रोत्तुङ्गे विलगन्ति नान्तरतरुश्रेणीशिखापञ्जरे।
खिद्यन्ते न मनोरथाः कथममी तं देशमुत्कण्ठया
धावन्तः पथि न स्खलन्ति विषमेऽप्यास्ते स यस्मिन्प्रियः ॥ ५ ॥

तेऽपि राजहंसाः शशाङ्कधरेषु, सप्रपञ्चपञ्चाननेषु, शिवरूपेषु, वनेषु,

---

उड्डीयेति ॥ यद्यपि मनोरपत्यं स्त्री मानुषी पुमान्मानुष इति 'स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः' इति लिङ्गविवचनान्मानुषशब्दस्य स्त्रीपुंसत्व वृत्तिता, तथापि नपुंसकत्वमपि। लिङ्गस्य लोकाश्रयत्वात्। तथाच भवभूतिः—'अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः। कालेनावरणात्ययात्परिणते यत्स्नेहसारस्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हि तद्दुर्लभम्' ॥ ४ ॥

तत इति ॥ प्रभञ्जनो वात एवाङ्गे लगन्सुखाय न परिजनः ॥ ख ॥

विश्राम्यन्तीति ॥ मनसि रथा इव मनोरथाः सङ्कल्पाः। विश्रामादयो रथधर्माः॥५॥

तेऽपीति ॥ हंसा वनेषु सरोजलेषु च विरहन्तो नगादिप्रदेशान् व्यतिक्रामन्तो निषधोद्यानमापुः। कीदृक्षु वनेषु। शशा अङ्के यस्यास्तथाभूता धरा भूमिर्येषु। तथा सच्छद्मानः

---

(१) उड्डीयेति-उड्डीयोड्डीनं विधाय वाञ्छितं समीहितं देशं यान्तो गच्छन्त एते विहंगमाः पक्षिणो वरमुत्कृष्टाः। पुनः पक्षरहितत्वात्पङ्गुप्रायं पङ्गुः श्रोणो जङ्घाहीन इतियावत्। तत्समं कुमानुषं न वरमिति स्पष्टम् ॥ ४ ॥

(२) तत इति—अत्र विराहण्यवस्था वर्ण्यते।

(३) विश्राम्यन्तीति—अमी मम मनोरथाः समीहितानि। कुत्रापि न विश्राम्यन्ति श्रान्तिमाप्नुवन्ति पुनर्मार्गेष्वपि न मुह्यन्ति मोहं लभन्ते तथा प्रोत्तुङ्गे उच्चैस्तरे। अन्तरे मध्ये यास्तरुश्रेण्यो वृक्षावलयस्तासां शिखैवाग्रभाग एव पिञ्जरं तस्मिन्। न विलगन्ति। विषमे निम्नोन्नते पथि मार्गे न स्खलन्ति नाहता भवन्ति। यस्मिन् देशे स मम प्रियो नल आस्ते तं दयितं देशं समुत्कण्ठया धावन्तो मनोरथाः कथं न खिद्यन्ते इति वैचित्र्यं भाति ॥ ५ ॥

सुशोभां कौमुदीं दधत्सु, शश्वदनुकृतसामुद्रवृद्धिषु, चन्द्रमण्डलरूपेष्विव सरःसलिलेषु विहरन्तस्तुहिनाद्रिकुञ्जानिव सत्त्रिपथगान्नगनगरग्रामाग्रहार-पत्तनप्रदेशानुल्लङ्घयन्तः कतिपयदिवसैरासेदुरुद्यानं निषधायाः ॥ क ॥

क्रीडितुमारभन्त च स्वच्छन्दम् ॥ ख ॥

अथ तेषामन्यतमामवलोक्य क्रीडातडागपङ्कजपञ्जरे राजहंसीमागत्य त्वरया हंसदर्शनोत्सुकं सरोरक्षिका राजानं व्यजिज्ञपन् ॥ ग ॥

'देव, हंसवार्त्तामनुदिनं पृच्छति देवस्तदद्य काचित् ॥ घ ॥

(१)कुरुते नालकवलनं दूरं विक्षिपति गर्भजम्बालम् ।
त्वदरिवधूरिव राजन्नुद्यानसरोगता हंसी ॥ ६ ॥

अपि च—

(२)अभिलषति नालमशनं स्वपिति नवाम्भोजपत्रशयनेऽपि ।
नीरागमना नृपते तव रिपुवनितायते हंसी ॥ ७ ॥

राजापि तस्याः श्लिष्टार्थमिदमार्यायुगलमवधारयन्स्तोक(३)स्मितसु-

पञ्चाननाः सिंहा येषु । शिवस्तु शशाङ्कं चन्द्रं धरति । तथा सह प्रपञ्चैः पृथङ्मार्गागमोपदेशलक्षणैवर्त्तन्ते तथाभूतानि पञ्चसंख्यानि आननानि वक्त्राणि यस्य । सरोजलेषु कीदृक्षु । कुमुदानामियं कौमुदी शोभा ताम् । चन्द्रमण्डले तु कौमुदी चन्द्रिका ताम् । तद्विशेषणं सुशोभामिति । अनुकरणमनुहरणम् । चन्द्रपक्षे अनु पश्चात्कृता सामुद्री वृद्धिर्येन । चन्द्रोद्गमो हि जलधिविवृद्धये । न विद्यन्ते नावो यत्र तदनु, अनु यथा भवति एवं कृतवृद्धिषु । पुरोत्पीडे हि न केऽपि नावं क्षिपन्तीति । नगनगरप्रदेशान् । कीदृशः । सत्त्राणि ब्राह्मणादीनां भोजनानि यज्ञा वा विद्यन्ते येषु । ते च ते पन्थानश्च सत्त्रिपथास्तान्गच्छन्ति प्राप्नुवन्तीति सत्त्रिपथगास्तान् । हिमाद्रिनिकुञ्जांस्तु सह त्रिपथया गङ्गया ( तस्य द्वित्वम् ) ॥ क ॥

कुरुत इति ॥ राजन् नृप, उद्यानतडागगता हंसी नालस्य बिसकाण्डस्य कवलनं ग्रासं कुरुते । तथा गर्भे मध्ये यो जम्बालः कर्दमस्तं च दूरं परिक्षिपति । वधूस्तु उद्यानेन पलायनेन सरोगता रोगवत्ता यस्याः । यथा अलकस्य वलनं न कुरुते । गर्भजातं बालं दूरे क्षिपति । भीत्या हि गर्भः पतति ॥ ६ ॥

अभिलषतीति ॥ नालं कमलकाण्डमशनमाहारं वाञ्छति । स्वपित्यपि नूतनाब्जपत्रशय्यायाम् । नीरे आगमनं यस्याः । रिपुवनिता तु नीरागं वैराग्योपेतं मनो यस्याः । अत एवालमत्यर्थमशनं नाभिलषति । नापि कमलदलतल्पे शेते । वा अथवार्थे ॥ ७ ॥

( १ ) कुरुत इति—अत्र हंसीरिपुवध्वोः साम्यम् । तत्र तडागगता हंसी कमलनालग्रासं कुरुते । तथा जम्बालं शैवालं दूरमुत्क्षिपति । रिपुवधूश्च केशप्रसाधनं न कुरुते । गर्भस्थितं बालं च पातयति । तथा सरोगिणी चेति द्वयोः साम्यम् ॥ ६ ॥

( २ ) अभिलषतीति—हंसीपक्षे कमलनालभोजनं कमलदलेषु शयनं जलगमनं च वर्णितम् । रिपुवनितापक्षे नातिभोजनं कमलदलतल्पं नीरागमनस्त्वं च ॥ ७ ॥

( ३ ) स्तोकेति—स्तोकमीषत् स्मितं तदेव सुधा तया धवलितः सितीभूतोऽधरपल्लवो यस्य ॥ ८ ॥

याधवलिताधरपल्लवः 'लवङ्गिके, यथा कथयसि तथा तेऽप्यागता हंसाः कथमन्यथा तस्याः खल्वेकाकिन्याः संभवः' इति तद्वार्त्तया यावदास्ते ॥ क॥

तावन्नीलोत्पलदलदीर्घलोचना चन्द्रमुखी वन्धूककुसुमकान्तदन्तच्छदा नीलांशुकपटीं परिदधाना पक्वकलममञ्जरीगौराङ्गी प्रकाशहासा हंसरनुगम्यमाना मूर्त्तिमती शरदिव वनपालिका प्रविश्य 'देव, सोऽयं कथमप्यागतो रणरणककारणमपराधी विहंगः' इत्यभिधाय तं राजहंसमुभयकरकमलाञ्जलिगतमुत्फुल्लपाण्डुपङ्कजार्घमिव पुरः पादारविन्दयोर्निधाय राज्ञः प्रणाममकरोत् ॥ ख ॥

राजापि 'सारसिके, साधु कृतम् । तत्क्रियतामशून्यः स्वाधिकारः। गम्यतामिदानीं 'यथास्थानम्' इत्यभिधाय तुष्टिप्रदानपरितोषितां तां लवङ्गिकासहितां विसृज्य, विरलीकृतपरिजनः प्रत्युज्जीवनौषधमिव प्राणरक्षान्तरमिव स्वस्थीकरणमणिमिवाश्वासनाभेषजमिवाह्लादनकन्दमिव तमग्रेस्थितमान(१)न्दनिःस्पन्दपक्ष्मपालिना चिरं चक्षुषाऽवलोक्य बहु मानयन्मुग्धस्मितेन स्वागतमपृच्छत् ॥ ग ॥

सोऽपि 'देव' दर्शनामृतमनुभवतो ममाद्य स्वागतम्' इत्यभिधायोपश्लोकयांचकार ॥ घ ॥

देव—

प्रसृतकमलगन्धं नीरसंसक्तकण्ठं
धृतकुवलयमालं जातभङ्गोर्मिकं च ।
त्वयि कृतरुषि भीतास्तावदास्तां तडागं
निजमपि च कलत्रं शत्रवो नाद्रियन्ते ॥ ८ ॥

तावदिति ॥ यावत्तद्वार्त्तयास्ते नृपस्तावत् । शारदुपमा वनपालिका प्रविश्य देवेत्यभिधाय तं राजहंसं राज्ञः पादयोर्निधाय प्रणामं चकार । नीलोत्पलदलादीनि लोचनादीनामुपमानानि । दन्तच्छद ओष्ठः । नीलमंशुकं वासस्तस्य पटी उत्तरीयम् । परिपाके हि शालिर्गौरः स्यादतस्तन्मञ्जरीवद्गौरमङ्गं यस्याः । प्रवृद्धाः काशाः काशपुष्पाण्येव हासो यस्याः ॥ ख ॥

प्रसृतेति ॥ प्रसृतः कमलानामाब्जानां गन्धो यत्र । तथा नीरेण संसक्तो युक्तः कण्ठः पालिप्रान्तो यस्य । तथा धृता कुवलयानां नीलोत्पलानां माला येन । तथा जाता उत्पन्ना भङ्गास्तरङ्गा ऊर्मयः कल्लोला यत्र । एतच्चतुष्टयमपि तडागादरहेतुः । देव, त्वयि रुष्टे यद्भीताः शत्रवस्तडागमेवंविधं नाद्रियन्ते । यावत्कलत्रमपि । तत्किंविशिष्टम् । प्रसृतः के मूर्ध्नि मलगन्धो यस्या । स्नानाभावात् । तथा निर्गतो रसो वक्त्रामृतकला शृङ्गारादिर्वा यत्र । तथा सक्तोऽन्तर्लग्नः कण्ठो यस्य । तथा धृता कुत्सितवलयानां सुवर्णाद्यभावात्काचादिवलयानां माला येन । तथा जातभङ्गा भग्ना ऊर्मिका अङ्गुलीयकं यस्य ॥ ८॥

(१) आनन्देति—आनन्देन हर्षेण निःस्पन्दा निश्चला पक्ष्मपालिर्नेत्रपक्ष्मपङ्क्तिर्यस्य तत् ॥

किं चान्यत्--

असमहरिततीरं विस्रजम्बालशेषं
स्फुटकुमुदपरागोल्लाससंपद्वियुक्तम् ।
वयमिह बहुशोकं दृष्टवन्तो वनान्ते
त्वदरियुवतिलोकं ग्रीष्ममासे सरश्च' ॥ ९ ॥

राजापि 'श्लेषोक्तिनिधे, तथा गृहीत्वास्मन्मनो गतवानसि, यथा सुख-संवित्तिशून्याः संतापारम्भिणो रणरणकाङ्कुरप्ररोहकाः कथमप्यस्माकमेतेऽ-तिक्रान्ता दिवसाः ॥ क ॥

तत्कथय । का नाम्नाभिनन्दनीया सा दिक्, यस्यां विहारमकरोः । के ते सफलचक्षुषो जनाः, यैश्चिरमालोकितोऽसि । के लब्धसुभाषितामृतरसास्वादाः, यैः संभाषितोऽसि । के प्राप्तप्राणितव्यफलाः, यैः सह गोष्ठीमनुष्ठितवानसि॥ख॥

स्पृहणीयसंगम, गते त्वयि तर्कशास्त्रमिव प्रस्तुतपरमोहम्, व्याकरण-मिव भूतनिष्ठमिदमस्माकमासीन्मनः ॥ ग ॥

तदेह्येहि' इत्यभिधाय स्वयं करकमलतलेनोत्क्षिप्य सस्नेहं परामृशत्॥घ॥

सोऽपि 'एष महान्प्रसादो यदेवमनुकम्पतेऽस्मान्देवः' इत्यभिधाय गम-नादारभ्य दमयन्तीदर्शनालापव्यतिकरमशेषं हारलतार्पणपर्यन्तमाचचक्षे ॥ङ॥

आख्याय च चरणेनैकेन ग्रीवाग्रादाकृष्य तां तथास्थितामेव मुक्तावली-मिदमवादीत् ॥ च ॥

(१)'उन्मादिनी मदनकार्मुकमण्डलज्या सौभाग्यभाग्यपरवैभववैजयन्ती ।

असमेति ॥ हरिततेः सिंहपद्धतेः सकाशादीरः क्षेपस्त्रासो हरिततीरः, असमो हरित-तीरो यस्य । अथवा मा लक्ष्मीस्तया सह समं, न सममसममश्रीकम् । यथा हरितती-र्वानरपङ्क्तीरीरयति क्षिपति । पश्चात्कर्मधारयः । तथा विगतस्रजं विगतमालम् । तथा बा-लशेषं हतभर्त्रादित्वात् । तथा स्फुटं कु कुत्सा यस्य तं स्फुटकुम् । तथा उद्गतोपरागस्य रागाभावस्योल्लासो यस्य । स चासौ संपद्वियुक्तश्च । अथवा स्फुटा कुत्सितोदरभरणादि-मात्रजा मुद्यस्य स स्फुटकुमुत् । तथापगतो रागोल्लासो यस्य । स्फुटकुमुच्चासावपरागो-ल्लासश्च स्फुटकुमुदपरागोल्लासः. स चासौ संपद्वियुक्तश्च । बहुः शोको यस्य । ईदृशं त्वद-हितस्त्रीजनमपश्याम । ग्रीष्मे सर इव । तदपि कीदृक् । समं हरितं तीरं यस्य तत्समह-रिततीरं, न समहरिततीरमसमहरिततीरं, विषमं शुष्कं च तीरं यस्येत्यर्थः । तथा विस्रं आ-मगन्धिको जम्बालः कर्दम एव शेषो यत्र । तथा विकसितकुमुदरेणूल्लाससमृद्धिरहितम् । नास्ति कं जलं यत्रेत्यकम् । बहुश इति क्रियाविशेषणम् ॥ ९ ॥

स्पृहेति ॥ प्रकृतोत्कृष्टमोहं मनः, शास्त्रं तु प्रस्तुतः परम ऊहो वितर्को यत्र । भूता

(१) उन्मादिनीति—हे नरनाथ ! उन्मादिनी प्रमत्तताविधायिनी । मदनस्य कामस्य कार्मुकमण्डलं धनुर्मण्डलं तस्य ज्या प्रत्यञ्चा । सौभाग्यं सुभगत्वं भाग्यं दैवं च तयोः परम-तिशये वैभवं तस्य वैजयन्ती पताका । तथा कुलधनमेषा सा मुक्तावली मुक्ताहारः । तस्याः दमयन्त्या भुजेव हस्त इव तव कण्ठग्रहं समाश्लेषं वा करोतु ॥ १० ॥

मुक्तावली कुलधनं नरनाथ सैषा कण्ठग्रहं तव करोतु भुजेव तस्याः ॥१०॥

अपिच—

(१)प्रेमप्रपञ्चनवनाटकसूत्रधारी मूर्त्ता मनोभवनृपस्य नियन्त्रणाज्ञा ।
तस्याः स्वयंवरपरिग्रहहेतुरेषा हारावली हृदि पदं भवतः करोतु' ॥ ११ ॥

राजा तु तामादाय निरूप्य च चिरं चिन्तयांचकार ॥ क ॥

'आनन्दिसुन्दरगुणामलकोपमानमुक्ताफलप्रचयमद्भुतमुद्वहन्ती ।
एषा च सा च नयनोत्सवकारिकान्तिश्चेतोहरा हृदि पदं न करोति कस्य'॥१२॥

इति चिन्तयन्द्विगुणामेकगुणीकृत्य पुनः सस्पृहमैक्षत ॥ ख ॥

हंसस्तु विहस्य परिहासमकरोत् ॥ ग ॥

(२)'तया दत्ता मयानीता स्वयमाह्लादिनी त्वया ।
इत्यनेकगुणाप्येषा कथमेकगुणीकृता' ॥ १३ ॥

राजापि परिहासेनान्तःसूत्रं दर्शयन् 'पक्षिपुंगव, किं न पश्यस्येकगुणै-वेयम् ॥ घ ॥

अथवा—

(३)कः करोति गुणवान्गुणसंख्यां श्लाघ्यजन्ममहसः स्फुटमस्याः ।
कुम्भिकुम्भपरिणाहिनि तस्याः स्वैरमास्यत यया कुचयुग्मे' ॥ १४ ॥

इत्यभिधाय नीत्वा च निजकण्ठकन्दलम्, 'इहास्ते सा तव पूर्वप्रणयि-नी' इत्यन्तःस्थितां दमयन्तीं दर्शयितुमिव हृन्मध्यवर्तिनीं तामकरोत् ॥ ङ ॥

---

संजाता निष्ठा क्लेशो यत्र मनसि, व्याकरणे तु भूतेऽतीतकाले निष्ठासंज्ञः प्रत्ययो यत्र ॥ग॥

आनन्दीति ॥ गुणस्तन्तुः शौर्यादिश्च । आमलकोपमानानां मुक्ताफलानां मौक्तिकानां प्रचयं समवायम् । अद्भुतमाश्चर्यकारिणम् । वहन्ती । दमयन्ती तु मलात्पापान्मालिन्याद्वा, कोपात्क्रुधो, मानाद्गर्वात्साद्वयाद्वा मुक्ता अष्टा । तथाद्भुतं चित्रं फलानां प्रचयं वहन्ती परिणेतुरिति शेषः । चेतोहरा मनोज्ञा । अन्यत्र चेतसि हरोऽस्याः । एवंभूतेयं मुक्तावली सा च कस्य हृदि वक्षसि चेतसि च, पदमवस्थानं न करोति, सर्वस्यापि करोत्येवेत्यर्थः ॥ १२ ॥

तया दत्तेति ॥ गुणाश्चारुतादयस्तन्तुसरिका च ॥ १३ ॥

कः करोतीति ॥ परिणाहो विशालता ॥ १४ ॥

---

( १ ) प्रेमेति—प्रेमप्रपञ्चः प्रीतिविस्तृतिरेव नवनाटकं तस्य सूत्रधारी । मनोभवः काम एव नृपस्तस्य मूर्त्ता शरीरिणी नियन्त्रणाय नियमनार्थमाज्ञा । तस्याः स्वयंवरे परिग्रहो ग्रहणं तस्य हेतुर्निमित्तम् । एषा हारावली भवतो हृदि पदं स्थानं करोतु ॥ ११ ॥

( २ ) तयेति—तया दमयन्त्या दत्ता मया चात्रानीता स्वयमाल्हादिनी आनन्दिनी । इत्यनेकगुणाप्येषां त्वया कथमेकगुणीकृतेति विरोधः ॥ १३ ॥

( ३ ) क इति—श्लाघ्यं जन्मनैव महस्तेजो यस्याः सा । अस्याः मुक्तावल्याः को गुणी गुणानां संख्यां कुरुते । यया मुक्तावल्या तस्या दमयन्त्याः कुम्भिकुम्भवत् गजगण्डस्थलवत् परिणाहिनि विशाले कुचयुग्मे स्तनप्रदेशे स्वैरं स्वेच्छया । आस्यत स्थितम् ॥ १४ ॥

कृत्वा च किंचिदनुच्चस्मितं मधुरमधुरया वाचा 'विहंगपुंगव, पुनः कथ्यतां कीदृशी सा, कीदृग्रूपा, किं च वयः, कीदृशी लावण्यसंपत्, को विनोदः, कीदृशं वाग्वैदग्ध्यम्, किं प्रियम्, का गोष्ठी इति श्रुतामप्यपूर्वामिव तद्वार्तामादरेण पृच्छन्नागच्छंश्च चटुलकरकृतशरसंधानस्यान(१)वरतविरचिताद्भुतभ्रमणकर्मकार्मुकवलयस्य लक्ष्यतां मकरकेतोरविदितापक्रमानतिवह्वन्वेलालवानवतस्थे ॥ क ॥

स्थिते च विभूष्य मध्यमं नभोभागं भगवति भासुरभासि भास्वति, श्रवणपुटपथमवतरति च प्रहरावसानप्रहारभांकारिभेरीरवे, 'वयस्य, विश्रम्यतामिदानीममन्द(२)मन्दारतरुपरिकरितरोधसि मन्दिरोद्यानारविन्ददीर्घिकायामेवं प्रार्थ्यसे च न गन्तव्यमविसर्जितेन त्वया पूर्ववत्, इति नियम्य तं राजहंसं स्वयमप्याह्निकायोदतिष्ठत् ॥ ख ॥

एवं च—

(३)शिथिलितसकलान्यव्यापृतेस्तस्य राज्ञः
परिहृतनिजबन्धोर्यान्ति हंसेन सार्धम् ।
दिनमनु दमयन्तीवृत्तवार्ताविनोदै-
रविदितपरिवर्त्ता वासराः शारदीनाः ॥ १९ ॥

(४)एकदा प्रस्फुरत्प्रभातारम्भप्रभया प्रभिद्यमाने नवनीलाञ्जनिकाकुसुमकान्तिनि तमसि, विलीनलाक्षाम्भोभिरिव सिच्यमानायां शनैः शचीदयितदिशि मन्दमुन्मिषत्कमलमुकुलोच्छलच्चटुलालिचक्रवालकलकलेनोन्निद्रितेन

शिथिलितेति ॥ दिनमनु दिनं लक्षीकृत्य । एतेन रात्रिनिषेधः । पक्षिणो हि निशि नीडे निलीयन्ते । तापहेतवोऽपि दिवसा हंसवार्त्तया अविदितपरिवर्त्ताः । शरदि भवं शारदं रूपमुष्णत्वातिशयादि तद्विद्यते यस्यासौ शारदी इनो येषु ते शारदीनाः ॥ १९ ॥

एकदेति ॥ नीलाञ्जनिका तापिच्छः ॥ क ॥

(१) अनवरतेति—अनवरतं निरन्तरं विरचितं विहितमद्भुतं विस्मयावहं भ्रमणकर्म येन तादृशं कार्मुकवलयं धनुर्मण्डलं यस्य तस्य ।

(२) अमन्देति—अमन्दा बहवो ये मन्दारतरवस्तैः परिकरितं परिकर इवाचरितं राधो वेला यस्याः सा तस्याम् ।

(३) शिथिलितेति—शिथिलिता स्वल्पीकृता सकला समग्रा अन्या व्यापृतिर्व्यापारो येन तस्य । तथा परिहृता त्यक्ता निजबन्धवा येन तस्य राज्ञः । हंसेन सह दिनमनु दमयन्तीवृत्तान्तविनोदैरविदितोऽज्ञातः परिवर्त्तो येषां ते शारदीना वासरा शारत्कालीना दिवसा यान्ति ॥ १९ ॥

(४) एकदेति—तमसि विलीने, सति चारुणोदये, मन्दमुन्मिषन्ति विकसन्ति कमलानि पद्मानि तेषां मुकुलानि कुड्मलास्तेभ्य उच्छलतां निर्गच्छतां चटुलालीनां चलभ्रमराणां चक्रवालानि वृन्दानि तेषां कलकलेन कलरवेण । चलन्त्यः चञ्चूकोटयस्ताभिर्यत्कण्डूयनं गात्रविघर्षणं तस्य विरामेऽवसाने धुताऽकम्पिताः पक्षरोमराजयो येन तेन । हंसकदम्बकेन युतो हंसो राजानमुवाच ॥

तन्द्रामुद्रितोन्मिषच्चक्षुषा चलच्चञ्चूकोटिकण्डूयनविरामधुतपक्षरोमराजिना राजहंसकदम्बकेनानुगम्यमानो विहाय विहंगमः सरस्तीरम्, उपसृत्य किंनरमधुरगीतध्वनिविनिद्रितमावश्यकावसाने राजानम्, इदमवदीत् ॥ क ॥

'देव, विज्ञापयामो देवस्य दर्शनम्, अनालेप्यं चन्दनम्, अस्पर्शं कर्पूरपांसुपटलोद्धूलनम्, अपातव्यममृतम्। अनास्वाद्यं रसायनम्, अलेह्यं मधु। कुतः किलैतदनुभवतामस्माकमपि वर्षसहस्रेणापि परितोषः। किं तु तिरयति स्वातन्त्र्यं प्राणिनां परपरिग्रहो दुस्त्यजाश्च जलजन्मनोऽपि जन्मभूमयो भवन्ति। अवगमिष्यति च विश्रब्धमेतत्सर्वमपि देवो यादृशा येन च जन्मान्तराराधनोपरोधेन प्रेषिता वयम्। अनवसरः खल्वयमस्य कथाप्रक्रमस्य। तथादिशतु देवोऽस्मान्गमनाय। न च प्रस्तुतानुचरालापेषु वयं विस्मरणीयाः। किमन्यज्जन्म च जीवितं च तदेव श्लाघ्यं मन्यामहे, यत्र प्रगल्भेन भवादृशा अनुस्मृतिं कुर्वन्ति। तदेष प्रस्थानप्रार्थनाप्रणामः' इत्युक्तवन्तमिममवनिपालः कथमपि विसर्जयामास ॥ ख ॥

गते च तस्मिन्नविस्मरणीयोपकारे कादम्बकदम्बकेश्वरे, श्रवणप्रणालिकया प्रविश्य मानसं सरस्तरलयन्त्यां विदर्भराजहंससुतायां, प्रहरति प्रत्यङ्गमनङ्गधानुष्के, समीपवनविकासिकुन्दमकरन्दास्वादमदमेदुरगिरां गच्छति श्रवणपथमतिमधुरे मधुलिहां झंकारे, आकर्णपूरीकृतकार्मुकगुणे रणरणकाद्दम्भिणि तत्रावसरे ॥ ग ॥

(१)आविर्भूतविषादकन्दमसमव्यामोहमीलन्मन-

---

देवेति ॥ आस्तां मनुष्याणाम्, अस्माकमपि पक्षिजातीयानामपीत्यपिशब्दार्थः। तिरयति तिरस्करोति ॥ ख ॥

गते चेति ॥ तस्मिन्हंसवृन्दनेतरि। श्रवणमाकर्णनमेव प्रणाली जलमार्गस्तया। कृत्वा मानसं चेत एव सरस्तडागम्। अथ च मानसाख्यं देवतडागं कर्मतापन्नम्। विदर्भराज एव हंसस्तस्य पुत्र्यां तरलयन्त्यां सत्याम्। तथा प्रवणीकृतधनुर्गुणे अनङ्गधनुर्धरे। तथा मधुलिहां मधुरगिरां झंकारे कर्णे गच्छति औत्सुक्यकारिणि चावसरे सति। 'हंसो विहंगभेदे स्यान्निर्लोभनृपतावपि' ॥ ग ॥

आविरिति ॥ उत्कण्ठितस्य नृपतेस्तत्स्थानकमवस्थान्तरं जातम्। यत्र (स्थानके)

---

(१) आविरिति—आविर्भूत उत्पन्नो विषादस्य दुःखस्य कन्दोऽङ्कुरो यत्र तत्। असमो विषमो यो व्यामोहो विचित्तता तेन मीलन्मनो यत्र तत्। चिन्तयोत्तानिते निमेषशून्ये नेत्रे यस्मिंस्तत्। निःश्वासेनोष्मश्वासेन दग्धोऽधरोष्ठो यस्मिन् एतादृशं स्थानमुत्सुकस्योत्कस्य नृपतेस्तत्स्थानं जातम्। यस्मिन्पञ्चम राग एव कोकिलोच्चरितरागविशेष एव प्रेयान् प्रियः। शेषाः सर्वे रसा रिपवः शत्रवः ॥

कोकिलः पञ्चमस्वरं नदति। यथाह नारदः—

"षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम्।
अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम् ॥

श्चिन्तोत्तानितनिर्निमेषनयनं निःश्वासदग्धाधरम् ।
जातं स्थानकमुत्सुकस्य नृपतेस्तत्तस्य यस्मिन्नभू-
त्प्रेयान्पञ्चमराग एव रिपवः शेषास्तु सर्वे रसाः ॥१६॥

ततश्च वृश्चिकदंशदुःसहव्यथामवस्थामनुभवन्निव, कण्टकैश्चरणमर्मणि विध्यमान इव, मुहुर्मुहुर्मुर्मुरपुञ्जराजीवाङ्गानि धारयन्नुग्रग्रीष्मानिलोल्लोलैरालिङ्ग्यमानो, मनागपि न क्वापि शर्म लेभे ॥ क ॥

तथाहि—

(१) श्च्योतच्चन्द्रमणिप्रणालशिशिराः सौगन्ध्यरुद्धाम्बरै-
र्निर्गच्छन्नवधूपधूमपटलैः संभिन्नवातायनाः ।
सौधोत्सङ्गभुवो विकीर्णकुसुमाः पूर्णेन्दुरश्मिश्रिया
रम्यायां निशि नो हरन्ति हृदयं हृद्यं किमुद्वेगिनाम् ॥ १७ ॥

अपि च—

(२) हृद्योद्यानसरस्तरङ्गशिखरप्रेङ्खोलनायासिताः
संभोगश्रमखिन्नकिंनरवधूस्वेदोदबिन्दुच्छिदः ।
सायं सान्द्रविनिद्रकैरववनान्यान्दोलयन्तः शनै-
रङ्गेऽङ्गारसमाः पतन्ति पवनाः प्रालेयशीता अपि ॥ १८ ॥

---

पञ्चमे पञ्चमाख्ये रागविशेषे रागो रसवत्ता स एव प्रियः । शेषास्तु रसा विषयानुरागा रिपवः ॥ १६ ॥

ततश्चेति ॥ तापातिरेकात्प्रतिक्षणं क्षणमात्रशुष्कत्वान्मुर्मुरः पुञ्जो येषां तानि मुर्मुरपुञ्जानि, तथाभूतानि राजीवानि येष्वङ्गेषु तानि । मुर्मुरस्तुषवह्निः । यद्विश्वप्रकाशः—'मुर्मुरस्तुषवह्नौ स्यान्मन्मथे रविवाजिनि' ॥ क ॥

श्च्योतदिति ॥ क्षरच्चन्द्रकान्तप्रणालशीताः । सुगन्धितनभोभिर्धूपधूमैर्मिश्रगवाक्षाः । कीर्णपुष्पाः । प्रासादभूमयः परिपूर्णचन्द्रेण रमणीयायामपि रात्रौ चेतो हरन्ति । उद्वेगायेत्यर्थः । राज्ञ इति शेषः । युक्तं चैतत् । दुःखितानां किं हृद्यम् । न किमपीति भावः ॥१७॥

हृद्योद्यानेति ॥ रम्यतडागोर्मितरलनेन खेदिताः । तथा किंनरीस्वेदजलबिन्दुमुषः । वनानि कम्पयन्तः । शनैरङ्गे लगन्तो हिमसमा अपि वायवोऽङ्गारा इव पतन्ति ॥१८॥

---

पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् ।
अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः" ॥

(१) श्च्योतदिति—उद्वेगिनां किमपि सुखकरं न भवतीति व्याचष्टे—स्रवच्चन्द्रकान्तमणिशीतलास्तथा नवधूपधूमसौगन्ध्यावृता विकीर्णकुसुमाः सौधोत्सङ्गभुवोऽपि पूर्णचन्द्रयुतायां रम्यायां रात्रवपि न सुखयन्ति ॥ १७ ॥

(२) हृद्येति—हृद्योद्याने रम्यारामे सरसस्तरङ्गाः सरोवीचयस्तेषां शिखरेषु प्रेङ्खोलनेन प्रस्खलनेनायासिताः । संभोगश्रमेण खिन्ना श्रान्ता या किन्नरी तस्याः स्वेदोदबिन्दून् प्रस्वेदोदकबिन्दून् छिन्दन्ति इति तथोक्ताः । तथा सायं सान्द्रविनिद्रकैरववनानि आन्दोलयन्तश्चालयन्तः । प्रालेयशीताअपि हिमशीतला अपि पवनाः । अङ्गेऽङ्गारसमाः पतन्ति ॥१८॥

तदाप्रभृति चास्य प्रायः प्रीतिरभूद्दाक्षिणात्यजनेष्वेव, पुलकमकरोन्नामापि विदर्भदेशस्य, श्रुतापि श्रवणयोः सुखमजीजनद्दक्षिणा दिक् ॥ क ॥

किं बहुना—

(१)लिप्तेवामृतपङ्केन स्पृष्टेवानन्दकन्दलैः ।
आसीद्दिग्दक्षिणा तस्य कर्णयोर्मनसो दृशोः ॥ १९ ॥

दमयन्त्यपि हंसदर्शनदिवसादारभ्य भ्रमद्भृङ्गकुलकलकलोन्नादितपर्यन्तेषु, प्रत्यग्रोल्लूनपुष्पपल्लवास्तरणेषु, विचलद्विनोदविहंगेषु विहरति नासन्नोद्यानलतामण्डपेषु, न च विकचकुवलयकह्लारकुशेशयसारवारिणि रणच्चटुलचञ्चरीकचक्रवाकचक्रे क्रीडति क्रीडासरसि, न च स्पृशति पाणिनापि माणिक्यमालामण्डनानि, न च रचयति रुचिरालकवल्लरीभङ्गान्तराले-ष्वभिमतकुसुमविन्यासान्, न च क्वचिदुच्चहंसतूलिकातल्पेऽपि कोमलकपोलावष्टम्भभाजि निद्रासुखमनुभवति, केवलमधिपाण्डुगण्डस्थलस्थापितपाणिपल्लवा प्रेषयन्ती प्रतिक्षणमुत्तरस्यां दिशि दृशं तद्देशागतान्गगने पक्षिणोऽपि सस्पृहं पश्यन्ती, तत्रत्यानध्वगानपि बन्धुबुद्ध्यालापयन्ती, तन्मण्डलागताय मरुतेऽप्यपनीतोत्तरीयांशुका हृदयमर्पयन्ती दिनं दिनमनङ्गेनाभ्यभूयत ॥ ख ॥

तथाहि—

(२)लास्यं पांसुकणायते नयनयोः, शल्यं श्रुतेर्वल्लकी,
नाराचाः कुचयोः सचन्दनरसाः कर्पूरवारिच्छटाः ।
तस्याः काप्यरविन्दसुन्दरदृशः सा नाम जज्ञे दशा
प्राणत्राणनिबन्धनं प्रियकथा यस्यामभूत्केवलम् ॥ २० ॥

एवमनयोरन्योन्यप्रेषितप्रच्छन्नदूतोक्तिवर्धितानुरागयोः चलन्त्यङ्गानि न मनोरथाः, परिवर्त्तते चक्षुर्न हृदयम्, कृशतामेत्यङ्गयष्टिर्नोत्कण्ठा, मन्दतां यात्युत्साहो नाभिलाषः, स्फारीभवति निःसहता न निद्रा, वर्धते चिन्ता न रतिः, शुष्यत्यधरपल्लवो नाग्रहरसः ॥ ग ॥

एवमिति ॥ तां दिशं प्रति चलन्त्यभिमुखीभूय निवर्तन्ते । एवं चक्षुरपि ॥ ग ॥

---

(१) लिप्तेति—अमृतपङ्केन लिप्तेव, आनन्दाङ्कुरैः स्पृष्टेव दक्षिणा दिग् तस्य राज्ञः कर्णयोर्मनसो नयनयोश्चासीदिति भावः ॥ १९ ॥

(२) लास्यमिति—लास्यं नृत्यं नयनयोः पांसुकण इवाचरति, वल्लकी वीणा श्रुतेः कर्णस्य शल्यं शङ्कुः । चन्दनरससहिताः कर्पूरजलबिन्दवः कुचयोर्नाराचाः सायकाः । अरविन्दसुन्दरनयनायास्तस्याः सा कापि दशा जाता । यस्यां दशायां प्राणरक्षकोपायभूतं केवलं प्रियकथैव समुदभूत् ॥ २० ॥

किं बहुना—

(१)कर्पूराम्बुनिषेकभाजि सरसैरम्भोजिनीनां दलै-
रास्तीर्णेऽपि विवर्त्तमानवपुषोः स्रस्तस्रजि स्रस्तरे ।
मन्दोन्मेषदृशोः किमन्यदभवत्सा काप्यवस्था तयो-
र्यस्यां चन्दनचन्द्रचम्पकदलश्रेण्यादि वह्नीयते ॥ २१ ॥

आसीच्च तयोः कृतान्योन्यगुणप्रश्नालापजपयोः पुनरुक्तावर्त्तितनामधेय-स्वाध्याययोः संकल्पसमागमाबद्धध्यानयोः स्मरानले स्वं हृदयं जुह्वतोस्तप्य-मानयोरङ्गीकृतमौनव्रतयोरपि वियोग एव, न योगः ॥ क ॥

कदाचित्तु (२)तरुणजननयनकुरङ्गवागुरामनङ्गगजेन्द्रमदप्रवाहढक्काम-पहसितसुरासुरसुन्दरीरूपश्रियं शृङ्गाररसराजधानीमवलोक्य यौवनावस्थां दमयन्त्याः 'कोऽस्याः किलानुरूपः पतिर्भवेत्' इति, चिरं चिन्ताकुलो विदर्भेश्वरः स्वयं स्वयंवरधर्मप्रारम्भाय समं मन्त्रिभिर्मन्त्रनिश्चयं चकार ॥ ख ॥

न चिराच्च प्राच्यप्रतीच्योदीच्यदाक्षिणात्यनरपतिनिमन्त्रणे सप्राभृतान्प्र-गल्भप्रायान्प्रधानप्रेष्यान्प्रेषयामास ॥ ग ॥

प्रस्थितं कंचिदुदीच्यनरपतिनिमन्त्रणाय प्रवुद्धवृद्धब्राह्मणमाप्तसखीमुखेन दमयन्ती श्लिष्टार्थमिदमवादीत् ॥ घ ॥

'भूपालामन्त्रणे तात तथा संचार्यतां यथा ।
नलोऽप्यागमबुद्धिः स्यात्प्रार्थ्यसे किमतः परम् ' ॥ २२ ॥

सोऽप्यवगतश्लोकार्थस्तथाविधमेव प्रत्युत्तरमदात् ॥ ङ ॥

---

आसीच्चेति ॥ कृतोऽन्योन्यगुणप्रश्नालाप एव जपो जाप्यं याभ्याम् । पुनरावर्त्तितं नामैव स्वाध्यायो ययोः । संकल्पे चित्तकर्मणि यः समागमस्तत्राबद्धं ध्यानं याभ्याम् । कामाग्नौ स्वचेतो होमयतोः । तप्यमानयोः । मौनिनोरप्यनयोर्वियोगो विरह एवासीत्, न योगः । योगः संबन्धोऽध्यात्मविषयश्च । अन्यस्य जपं स्वाध्यायं ध्यानं होमं तपो मौनं व्रतं च कुर्वतो योगलाभः स्यात् । तप्यमानेति संतापपक्षे कर्मकर्तरि, तपःपक्षे तु कर्तरि; तपः कर्मविषयत्वात् ॥ ख ॥

भूपेति ॥ तातेति संबोधनं । नृपनिमन्त्रणे तथा संचार्यतां यथा आगमावनतिः शास्त्र-प्रतीतिर्लोप्या न स्यादिति बाह्यार्थः । इष्टार्थस्तु नलनामापि नृपो यथागमनबुद्धिर्भवेदिति॥२२॥

---

( १ ) कर्पूरेति—कर्पूराम्बुनो घनसारजलस्य निषेकं भजतीति तस्मिन् । सरसैर्नवैर-म्भोजिनीनां पद्मिनीनां दलैरास्तीर्णे । स्रस्ताः पतिताः स्रजो माला यस्मिन् स्रस्तरे तल्पे विवर्त्तमानं वपुर्ययोस्तयोः । मन्दोन्मेषे दृशौ ययोस्तयोः । अन्यत्किं वर्णयामः । सा का-प्यनिर्वचनीया दशा बभूव । यस्यां दशायां चन्दनं चन्द्रश्चम्पकपुष्पाणि दलानि च तेषां श्रे-ण्यादि वह्निरिवाचरति ॥ २१ ॥

( २ ) तरुणेति—तरुणा ये जना युवानस्तेषां नयनान्येव कुरङ्गा मृगास्तेभ्यो वागुरा बन्धनरज्जुः ।

'केनापि व्यवहारेण कयापि प्रौढलीलया ।
करिष्यास्यागमस्यार्थं रभसेन नलङ्घनम् ॥ २३ ॥

तदायुष्मति सुखमास्ताम्' इत्यभिधाय गतवान् ॥ क ॥

अथ नातिचिरेणागतस्तया रहः समाहूय स ब्राह्मणः सोमशर्मा नर्मालापलीलया दमयन्त्या बभाषे ॥ ख ॥

'आहूतोदीच्यभूपेन तातादेशविधायिना ।
नालीकापि त्वया वार्ता विद्वन्नावेदिता मम' ॥ २४ ॥

सोऽपि 'एष कथयामि श्लेषोक्तिकुशले, श्रूयताम्' इत्यभिधाय विहसन्नाख्यातुमारब्धवान् ॥ ग ॥

इतो निर्गत्य मया मण्डलेश्वरामन्त्रणक्रमेण परिभ्रमताऽभ्रंकषानेककूटकोटिस्थपुटितकटकस्य निषधनाम्नो महीध्रस्य दक्षिणारण्यस्थलीषु मृगयासक्तः ॥ घ ॥

(१)माद्यन्मांसलतुङ्गपुंगवककुत्कूटोन्नतांसस्थलः
कालिन्दीजलकान्तिकुन्तलशिराः पूर्वेन्दुबिम्बाननः ।
एकः कोऽपि मनोहरः पथि युवा दृष्टः स यस्मिन्सकृ—
द्दृष्टे नष्टनिमेषया मम दृशा लब्धं फलं जन्मनः ॥ २५ ॥

तेनाप 'दाक्षिणात्योऽयम्' इति निश्चित्य साभिलाषमाभाषितोऽस्मि ॥ ङ ॥
मयापि कृताचितालापेनोक्तम् ॥ च ॥

'यथेयमाकृतिर्लोकलोचनानन्ददायिनी ।
तव भद्र तथा सत्त्यागोऽसि नलोभवान्' ॥ २६ ॥

एवमुक्तः सोऽपि मनाङ्मुग्धस्मितमेवोत्तरं कल्पितवान् ॥ छ ॥

अथ प्रथमवयोविभूषिताङ्गस्तुङ्गतुरंगमारूढो गाढग्रथितपरिकरः करेण

---

केनेति ॥ आगमस्य शास्त्रस्य । अर्थे लङ्घनं न करिष्यामीति बाह्यर्थः । इष्टार्थस्तु आगमनस्यार्थे रभसेनौत्सुक्येन घनं निबिडं नलाख्यं नृपं करिष्यामि आनेष्याम्येवेत्यर्थः॥ २३॥

आहूतेति ॥ आकारितोत्तरनृपेण त्वया विद्वन्नलीकापि वार्ता न कथितेति बाह्योऽर्थः। आन्तरस्तु नलस्येयं नाली वार्ता सा कापि त्वया नाभ्यधायि ॥ २४ ॥

यथेयमिति ॥ सन् शोभनस्त्यागो यस्य । तथा न त्वं लोभवान् । असीत्यव्ययं युष्मदर्थे । पक्षे सत्यागस्त्वम् । तथा नलाख्यो भवान् इति पृथग्वाक्यद्वयम् । एकवाक्यतायां तु भवानसीति मध्यमपुरुषो दुर्लभः ॥ २६ ॥

---

(१) माद्यदिति—माद्यन् मांसलः पीवरस्तुङ्ग उन्नतः पुंगवो यः ककुत् तस्य कूटस्तद्वदुन्नतमंसस्थलं यस्य । कालिन्दीजलमिव यमुनापय इव नीली कान्तिर्येषां तादृशाः कुन्तलाः केशाः यस्मिंस्तादृशं शिरो यस्य । पूर्णेन्दुबिम्बवत् पूर्णचन्द्रमण्डलवदाननं यस्य । एतादृश एकः कोऽपि मनोहरो युवा मार्गे दृष्टः । यस्मिन्दृष्टे नष्टो लुप्तो निमेषो यस्यास्तया दृशा मया जन्मनः फलं समधिगतम् ॥ २५ ॥

कोदण्डमाकलयंस्तद्‌द्वितीयो युवा तमेव देशमागतवान् ॥ क ॥

आगत्य च बालनीलनलशालिनि शिलोच्चयस्थलीप्रदेशे कांचि(१)त्काञ्चनकुम्भकान्तिकुचकण्ठलुठितकुसुममालिकामवलोकयन्निदमवादीत् ॥ ख ॥

'युवराज, पश्य—

नद्यास्तीरे विदर्भायाः कापि गोपालबालिका ।
गाः समुच्चारयत्येषा क्षेत्रीकृत्य नलं वरम्' ॥ २७ ॥

एतदाकर्ण्य मयाप्युक्तम्—'महानुभाव, न केवलमियमन्यापि कापि कापि' इति ॥ ग ॥

इत्युक्तवन्तं मामवलोक्य भावितार्थः स पुनः सस्मितमवोचत् ॥ घ ॥

'इयं च सा च—

(२)अनुभवतु चिराय चञ्चलाक्षीरसपरिणामफलानि गोपपुत्री ।
अपसरति महोद्यमेन यस्याः कथमपि संप्रति नैषधेऽनुरागः' ॥ २८ ॥

आस्तां तावदन्यत् । अध्वन्य, कथय कुतः प्रष्टव्योऽसि, किंच कियद्वाद्यापि वर्त्मातिक्रमितव्यम्' इति ॥ ङ ॥

अथ कथितस्ववृत्तान्तेन मयापि 'कोऽयमशेषमनुष्यमस्तकमणिः, कश्च भवानपि स्वप्रज्ञाप्राग्भारपराङ्मुखीकृतपुरंदरगुरुः' इति पर्यनुयुक्तः स पुनरुक्तवान् ॥ च ॥

'अयमसौ सौम्य, समस्तशस्त्रशास्त्रकोविदो विदारितवैरी वैरसेनिर्नलः। किमन्यदहमपि श्रुतशीलो नामास्यैवाज्ञाकारी, इत्यभिधाय विश्रान्तवान् ॥छ॥

नद्या इति ॥ विशिष्टदर्भाया नद्यास्तीरे । काप्यनिर्दिष्टनामा । गोपी । वरं श्रेष्ठं नलं ( डं ) तृणविशेषम् । केदारीकृत्य । गा धेनूः । समुत् सहर्षा । चारयति । श्लेषवक्रोक्त्या तु विदर्भाभिधानाया नद्यास्तीरे, कापि । महनीयमहिमा, गोपालस्य भूपस्य, बालिका सुता, नलं राजानं, वरं वरयितारं, क्षेत्रीकृत्याश्रयीकृत्य, गिरः समुच्चारयति । वर ईप्सायाम्, वर्यत इति वरः । क्षेत्रं सद्भूमिः ॥ २७ ॥

अनुभवत्विति ॥ गोपालिका क्षीरस्य सपरिणामानि परिणतानि यानि फलानि क्षैरेयीदधिघृतप्रभृतीनि तान्यनुभवतु चिराय । चञ्चला लोला गोचारणवशात् । यस्याः संप्रत्येष धेनुरागो । महोद्यमेन हेतुना । कथमपि केनापि प्रकारेण न निवर्त्तते । श्लेषे तु गोपपुत्री भूपपुत्री दमयन्तीलक्षणा चञ्चलाक्षी लोलनेत्रा श्रृङ्गारादिरसपरिपाकफलान्युपभुङ्क्ताम् । यस्याः संप्रति नैषधे नले महोद्यमेऽनुरागःप्रेमबन्धः । कथमपि नापसरति ॥२८॥

( १ ) काञ्चनेति—काञ्चनकुम्भवत् सौवर्णकलशवत् कान्तिर्ययोस्तादृशौ कुचौ स्तनौ यस्याः । कण्ठे गलदेशे लुठिता पतिता कुसुममालिका यस्याः । द्वयोः पुनर्बहुव्रीहिः ।

( २ ) अनुभवत्विति—इयं गोपी चञ्चला, क्षीरस्य परिणामे जातानि फलानि लभताम् । यतोऽस्या महोद्यमेनैष धेनुरागः कथमपि नापसरति । दमयन्ती च चञ्चलाक्षी रसपरिणामफलानि अनुभवतु । यतोऽस्या नैषधे नलेऽनुरागः कथमपि संप्रति नापसरति ॥२८॥

नलोऽपि कृत्वा त्वदाश्रयास्तास्ताः प्रकटितप्रेमकन्दलाः कथाः, समर्थ्यं च स्वयंवरामन्त्रणमुत्सुकतया तत्कालमेवोड्डीय गन्तुमीहमानः संभाषितेन स्मितेनालोकितेन च माममृतवर्षेणेवाह्लादयन्ननिच्छन्तमपि प्रतिग्राह्य च बलादनर्घ्याणि स्वाङ्गाभरणानि चिरादेव व्यसर्जयत् ॥ क ॥

स्वयं च मृगयाव्यसनितया मृगयालुभिः सह--

धीरं रङ्गन्तमारुह्य सारं रंहसि वाजिनम् ।
हारं रम्यं गले बिभ्रत्स्वैरं रन्तुमगात्पुनः ॥ २९ ॥

तदायुष्मति, स्वामिसुते यथा मया तत्कथाप्रश्नानुराग उपलक्षितस्तथा निश्चितमचिरादयमेष्यति' इत्यभिधाय स ब्राह्मणः स्वगृहमगात् ॥ ख ॥

गते च तस्मिन्दमयन्ती 'श्लाघ्यः स कः कालः, धन्यः स कतमो वासरः, सलक्षणा सा का नाम वेला, यस्यामिदमिन्दुदर्शनेनेव कुमुदमस्मच्चक्षुस्तदालोकनेन कमप्यानन्दमनुभविष्यति, इति चिन्तयन्ती कान्यपि दिनानि कथाप्यवस्थया व्यनैषीत् ॥ ग ॥

अथ नलोऽप्यामन्त्रितस्तेन ब्राह्मणेन रणरणकेन च, प्रेरितो मन्त्रिणा मदनेन च, परिवृतः सेनयोत्कण्ठया च, तत्कालमेव विदर्भमण्डलाभिमुखमुदचलत् ॥ घ ॥

(१)चलिते च चतुरङ्गबलचलनचूर्णितशिलोच्चयचक्रवाले चक्रिचक्रचङ्क्रमणचीत्कारबधिरितककुभि विषमवैरिवृन्दवनवैद्युतानले नले, चलन्तश्चटुलतरचरणप्रहाररणितधरणिमण्डलाः कान्तकाञ्चनरचनारोचिष्णवश्चकासांचक्रुश्चक्रवर्त्तिवाहोचिताः साश्चर्यमपर्यन्तपर्यायाः पर्याणितास्तुरङ्गाः, शृङ्गारिताश्च चलच्चारुचामरावधूलनालंकृतकपोलभित्तिभागसंलगितभृङ्गसंगीतमुखरितमुखमण्डलाः कथमप्याधोरणनिरुध्यमानशौर्यविकारस्फुरणाः स्फुरत्कुम्भभित्तिसिन्दूरा दूरापसारितस्यन्दनाः स्यन्दमानामन्दमदक-

---

धीरमिति ॥ धीरमत्रासं रङ्गन्तं वल्गन्तं रंहसि वेगे सारमुत्कृष्टं वाजिनमश्वमारुह्य कण्ठे हारं गुणं बिभ्राणः स्वच्छन्दं क्रीडितुं पुनरप्यगात् ॥ २९ ॥

---

(१) चलित इति—चतुरङ्गबलस्य चतुरङ्गसेनायाश्चलनेन चूर्णितानि शिलोच्चयानां चक्रवालानि समूहा येन । चक्रिचक्राणां सर्पवर्गाणां चङ्क्रमणं चीत्कारश्च ताभ्यां बधिरिताः ककुभो येन तस्मिन् । विषमाणि तीव्राणि वैरिवृन्दानि शत्रुसंघास्तदेव वनं काननं तस्मै वैद्युतानले वैद्युताग्निभूते । चलन्ति चारूणि चामराणि तेषामान्दोलनेनालंकृता भूषिता गण्डस्थलप्रदेशा येषां तत्र संलगिता ये भ्रमरास्तेषां संगीतेन मुखरितं शब्दयुतं मुखमण्डलं येषां ते । आधोरणैर्हस्तिपकैर्निरुध्यमानं शौर्यविकारस्य स्फुरणं विकासो येषां ते । शोभमानानि कुम्भभित्तौ गण्डस्थलदेशे सिन्दूराणि येषां ते । तथा प्रस्यन्दमानेन बहुना मदेन कर्दमितां कर्दमीकृता मेदनी पृथ्वी यैस्ते । भूरिभारेण भुग्नानि वपूंषि यस्य तादृशो पन्नगस्तस्य शिरसि शिथिलोऽवष्टम्भो यस्याः सा ताम् । एतादृशो गजेन्द्राः ।

र्दमितमेदिनीकाः कम्पयांबभूवुर्भुवं भूरिभारभुग्नाङ्गपन्नगशिरःशिथिलावष्टम्भामिभेन्द्राः ॥ क ॥

किंबहुना । तत्रावसरे—

पूर्वापरपयोराशिसीमासंक्रान्तसैनिके ।
तस्मिन्सस्मार भूर्भाराद्दाराहवपुषो हरेः ॥ ३० ॥

अपिच—

आसीत्पिण्डितपाण्डुपङ्कजवनं श्वेतातपत्रैः क्वचि-
न्मायूरातपवारणैः क्वचिदभूदुन्नालनीलोत्पलम् ।
उन्मेघं क्वचिदूर्ध्वधूलिपटलैस्तस्य प्रयाणेऽभव-
त्प्रोद्वीचि क्वचिदम्बरं सर इव प्रेङ्खत्पताकापटैः ॥ ३१ ॥

जाताश्च जङ्घाजघनस्पृशो, वक्षःस्थलीलोलनलम्पटा, ग्रीवाग्रहणाग्रहिण्यः, प्रसभं लगन्त्यो वस्त्रेषु, निस्त्रपाः स्त्रिय इव, नखपदाभिघातोद्यताः, चुम्बन्त्यश्चिबुककपोलाधरचक्षूंषि सैनिकानाम्, अतिप्रसरेण शिरोऽवलग्नाः, प्रबला धूलयो, वियदावरणाश्च चक्रुश्चैरतिप्रसङ्गमासन्नवननिकुञ्जेषु ॥ ख ॥

कूजन्तश्च कोटिशः कोदण्डमण्डलाग्रव्यग्रपाणयः, पाणिनीया इवाधिकरणकर्मकुशलाः समुल्लसन्तो विचेलुर्वल्गनपटवो लाम्पट्योल्लुण्ठितरिपुपुरः पुरः पदातयः ॥ ग ॥

पूर्वेति । पूर्वापरसागरावधिसंक्रान्तचमूचरे तस्मिन्नले भूर्मेदिनी भाराद्धेतोर्हरेः सस्मार । 'अधीगर्थ'–इति सूत्रेण कर्मणि षष्ठी ॥ ३० ॥

आसीदिति । सितच्छत्त्रैः पिण्डितपुण्डरीकवनं, ओकरोभिः सनीलोत्पलं,रेणुपटलैरुन्नतमेघं, क्वचिचलध्वजाञ्चलैः प्रवृद्धोर्ध्वरङ्गं, तडागमिवाम्बरमाकाशं तत्प्रयाणेऽभूत् । प्राच्यदेशे महासरःसु मेघा अम्भो ग्रहीतुमुन्नमन्त इति प्रसिद्धयोन्मेघत्वमुक्तम् ॥ ३१ ॥

जाताश्चेति । धूलयो निर्लज्जाः स्त्रिय इव । जंघेत्यादीन्युभयत्र समानानि । नखा अश्वादीनां खुराः, पदं पादविन्यासस्तेषामभिघातादुत्थिताः । पक्षे नखक्षतपदयोश्चाभिघाते उद्यताः सोद्यमाः । बलात्सैन्यात्प्रवृद्धाः, पक्षे प्रवृद्धवीर्याः । वियदावरणा नभश्छादिन्यो विगच्छद्वस्त्राश्च । वियन्नभः । विपूर्वस्येणः शतरि च वियदिति । अतिप्रसङ्गमतिव्याप्तिं, पक्षे रतिप्रसङ्गं सुरतप्रबन्धम् ॥ ख ॥

कूजन्तश्चेति ॥ पदातयो विचेलुः । किं कुर्वन्तः । कोटिशोऽनेकधा कूजन्तः शब्दायमानाः । तथा कोदण्डेन धनुषा मण्डलाग्रेण चासिना व्याकुलाः पाणयो येषां ते । तथाधिकं रणकर्मणि कुशलाः । पाणिनीयपक्षेऽधिकरणकर्मणी कारके । लाम्पट्येनोल्लुण्ठिता अरिपुरोऽरिनगर्यो यैः । पुरोऽग्रतः ॥ ग ॥

तत्र च व्यतिकरे—

(१)मन्दं मन्दरमन्दिरेषु शयितानुन्निद्रयन्किन्नरा-
न्मेरोर्मस्तककन्दरे प्रतिरवानुत्थापयन्नुल्बणः।
आध्वं धावत यात मुञ्चत पुनः पन्थानमेवंविध-
स्त्रैलोक्यं बधिरीचकार बहलः सैन्यस्य कोलाहलः॥ ३२॥

एवमसौ क्रीडितानेकपामरान्गिरीन्ग्रामांश्च बहुतरङ्गोपशोभिताः सरितः सीम्नश्च व्यूढपत्त्ररथान्पथः पदापांश्च लङ्घयन्, सालसहिताः पुरीर्नारीश्च सेवमानः, पच्यमानगोधूमश्यामलाः क्षेत्रभुवो भिल्लपल्लीश्च परिहरन्, विध्रवाः शत्रुसीमन्तिनीरटवीश्चातिक्रामन्, परिवारीणि बन्धुकुलानि सरांसि च बहु मानयन्, नातिचिरेण रविरथतुरंगपरिहृतविषमशिरःशिखरसहस्रमजस्रम-मरगणगन्धर्वसिद्धरुद्धस्कन्धमध्यं विन्ध्याचलमनुससार॥ क॥

ततश्च—

(२)दिशि दिशि किमिमानि प्रच्यवन्तेऽन्तरिक्षा-
दविरतमुत देवी भूतधात्री प्रसूते।
इति शबरवधूभिस्तर्क्यमाणान्यवापुः
सपदि विपुलविन्ध्यस्कन्धमध्यं बलानि॥ ३३॥

---

एवमिति॥ अमुना प्रकारेणासौ नल इदमिदं कुर्वंस्तरणिरथाश्वत्यक्ताधित्यकामध्यं विन्ध्याद्रिमनु लक्षीकृत्य ससार। किं कुर्वन्। लङ्घयन्। कान्। गिरीन्ग्रामांश्च। संप्रत्युभयानपि विशिनष्टि। क्रीडिता अनेकपा गजा अमराश्च देवा येषु। पक्षे पामरा ग्राम्याः। सरितो बहुभिस्तरङ्गैरलंकृताः। सीमानश्च बहुतरं यथाभवत्येवं गोपैर्गोपालैः शोभिताः। विशेषणोढानि पत्त्राणि वाहनानि रथाश्च यैः। पक्षे पत्त्ररथः पक्षी। सालेन प्राकारेण सहिताः। नार्यः सालसा हिताश्च। अलसशब्दो भावप्रधानो लक्षणादिवत्। पचेलिमैर्गोधूमैः सस्यविशेषैः श्यामलाः। पल्ली तु गोर्भूमेर्धूमो गोधूमः। ततः पच्यमानः परिपाकं गच्छन् बहुलीभवन्योऽसौ गोधूमस्तेन श्यामलाः। न तु पच्यमाना चासौ गौश्चेति। टच्प्रसङ्गात्। कृष्यावनी हि दग्धा समधिकं फलतीति। तथा च (रघुवंशे नवमे सर्गे) 'कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति'। गोशब्दो भूम्यर्थो

---

(१) मन्दमिति—मन्दरमन्दिरेषु मन्दराचलीयगृहेषु। शयितान् सुप्तान्। किंनरान् उन्निद्रयन् विनिद्रान् कुर्वन्। तथा मेरोः सुमेरोर्मस्तकोपरि गुहायां प्रतिध्वनीनुत्थापयन्। पुनः। आध्वमुपविशत 'आस उपविशने' लोड्मध्यमबहुवचनम्। धावत यात पन्थानं मुञ्चत त्यजत एवंविध उल्बणो विषमो बहलः कोलाहलः। त्रैलोक्यं बधिरीचकार॥ ३२॥

(२) दिशीति—दिशि दिशि प्रतिदिक्। अन्तरिक्षादाकाशात्। इमानि प्रच्यवन्ते किं पतन्ति किम्। "च्युङ् गतौ" इति भ्वादिगणे धातुरात्मनेपदी। उत भूतधात्री देवी पृथिवी। अविरतमिमानि प्रसूते किं जनयति किम्। इति शबरवधूभिर्भिल्लीभिराशङ्क्यमानानि बलानि सैन्यान्येव विपुलं विशालं विन्ध्याद्रिमध्यम् आपुः॥ ३३॥

(१)श्रुतशीलस्तु तुङ्गशृङ्गरङ्गत्सारङ्गाङ्गनासु नक्षत्रासन्नाकाशावकाशविश-ङ्कशजालजटिलासु चलच्चित्रचित्रककरिकलभकदम्बकसंचारशबलासु हा-रिहरिताङ्कुररमणीयासु वनस्थलीषु निक्षिप्तचक्षुषमवलोक्य राजानमिद-मवादीत् ॥ क ॥

'देव'—

(२)माद्यद्दन्तिकपोलपालिविगलद्दानाम्बुसिक्तद्रुमाः
क्रीडत्क्रोडकुलार्धचर्वितपतन्मुस्तारसामोदिताः।
अन्तःसुस्थितपान्थमन्थरमरुल्लोलल्लतामण्डपाः
कस्यैता न हरन्ति हन्त हृदयं विन्ध्यस्थलीभूमयः ॥ ३४ ॥

इतश्च पश्यतु देवः—

(३)एषा सा विन्ध्यमध्यस्थलविपुलशिलोत्सङ्गरङ्गत्तरङ्गा
सम्भोगश्रान्ततीराश्रयशबरवधूशर्मदा नर्मदा च।
यस्याः सान्द्रद्रुमालीललिततलमिलत्सुन्दरीसंनिरुद्धैः
सिद्धैः सेव्यन्त एते मृगमृदितदलत्कन्दलाः कूलकच्छाः ॥ ३५ ॥

---

न धेन्वर्थोऽनौचित्यात्। विर्विशेषे विगमे च। धवो भर्ता तद्विशेषश्च। परिवृण्वन्ति प-रिवारीभवन्ति परिवारीणि। अन्यत्र परि समन्ताद्वारि जलं येषु ॥ क ॥

माद्यदिति ॥ मुस्तायाः कन्दविशेषस्य रसेन निर्यासेनामोदिताः। अन्तर्मध्ये सु-स्थिताः पान्था यासु। तथा मन्थरमरुता मन्दानिलेन लोलन्तश्चलन्तो लतामण्डपा या-सु। पश्चात्कर्मधारयः ॥ ३४ ॥

---

(१) श्रुतशीलेति—तुङ्गशृङ्गेषु शिलोच्चयशिखासु रङ्गन्त्यश्चलन्त्यः सारङ्गाङ्गनाः कुरङ्ग्यो यासु ताः। नक्षत्राणां तारकाणामासन्नाः समीपस्था य आकाशावकाशास्तेषु विशन्तो वंशास्तेषां जालैः संघैर्जटिलासु। चलन्तो गच्छन्तश्चित्रचित्रकाः करिकलभाश्च तेषां संचारैः प्रचारैः शबलासु। हारिणो मनोहरिणो हरिद्वर्णाश्च येऽङ्कुरास्तैरमणीयासु वनभूषु निक्षिप्तनेत्रं विलोक्य राजानमिदमुवाच।

(२) माद्यदिति—माद्यन्तो दन्तिनो गजास्तेषां कपोलपालिभ्यो गण्डस्थलेभ्यो विग-लन्ति पतन्ति मदजलानि तेभ्यः सिक्ता द्रुमा वृक्षा यासु ताः। क्रीडन्ति क्रोडकुलानि शूक-रकुलानि तैरर्धचर्विताया: पतन्त्या मुस्ताया रसेनामोदिताः।।अन्तर्मध्ये सुस्थिताः पान्था यासु ताः। तथा मन्थरमरुता मन्दानिलेन लोलन्तश्चलन्तो लतामण्डपा यासु ताः। एतादृ-श्यो विन्ध्याद्रिभूमयः कस्य हृदयं न हरन्ति ॥ ३४ ॥

(३) एषेति—विन्ध्यमध्यस्थले विन्ध्याद्रिमध्ये या विपुलाः शिलास्तासामुत्सङ्गे मध्यभागे रङ्गन्तः स्खलन्तस्तरङ्गा वीचयो यस्याः। संभोगेन श्रान्ताः खिन्नास्तथा तीराश्रया-स्तटोपरि निषीदन्त्यो याः शबरवध्वो भिल्लनार्यस्तासां शर्मदा सुखदा। एषा सा नर्मदास्ते। यस्या एते मृगाणां मृदितेन दलन्ति कन्दलानि येषु ते। कूलस्थजलप्रायप्रदेशाः। सान्द्रद्रु-मालीभिर्घनच्छायवृक्षश्रेणीभिर्ललितेषु रम्येषु तलप्रदेशेषु। रागात् मिलन्त्यो याः सुन्दर्यस्ता-भिः संनिरुद्धास्तैः सिद्धैः सेव्यन्ते ॥ ३५ ॥

अपिच । अन्तरेऽप्यस्याः—

(१)मज्जत्कुञ्जरकुम्भमण्डलगलद्दानाम्बुनः सौरभा-
दुभ्राम्यद्भृङ्गकुलावलीः कुवलयश्रेणीः समाबिभ्रतः ।
कल्लोलाः कलिकालकल्मषमुषः प्रोल्लीललीलाकृतः
स्वःसोपानपरम्परा इव वियद्वीथीमलंकुर्वते ॥ ३६ ॥

इतश्चास्यास्तीरे—

(२)अंसस्रंसिजलार्द्रजर्जरजटाजूटैर्मनाङ्मन्थरा-
स्तिम्यत्तारवतन्तुनिर्मितकुथत्कौपीनमात्रच्छदाः ।
शीतोत्कण्टकितास्थिशेषतनवः स्नात्वोत्तरन्तः शनै-
रेते पश्य पतन्ति पिच्छिलशिलाजाले जरत्तापसाः ॥ ३७ ॥

इतोऽपि—

(३)पश्यैताः करिकुम्भसंनिभकुचद्वन्द्वोल्लसद्वीचयः
क्रीडन्त्यब्जविकासभासि पयसि स्वैरं पुलिन्दस्त्रियः ।
उन्मीलन्नवनीलनीरजधिया पक्ष्मान्तरे नेत्रयो-
र्यासां हस्तलताहता अपि परिभ्राम्यन्ति भृङ्गाङ्गनाः ॥ ३८ ॥

---

मज्जदिति ॥ भृङ्गकुलानां कुवलयान्युपमानम् । बिभ्रत इति कल्लोलविशेषणं जसन्तम् । 'नाभ्यस्ताद्'—इति नुमभावः ॥ ३६ ॥

अंसेति ॥ तरुषु जातास्तारवाः । ते च ते तन्तवश्च । पिच्छिलं मसृणं कर्दमिलम् ।३७।

---

(१) मज्जदिति—मज्जतां नर्मदापयसि ब्रुडतां कुञ्जराणां कुम्भमण्डलानि गण्डस्थलानि तेभ्यो गलतः स्रवतो दानाम्बुनो मदजलस्य सौरभाद् गन्धात् । भ्राम्यन्त्यो गच्छन्त्यो भृङ्गकुलानामावल्यो यासु ताः । कुवलयानां श्रेणीः कर्मभूताः समाबिभ्रतः । कलिकालकल्मषविनाशिनः । प्रोल्लीलां लीलां विलासं कुर्वन्तीति तथा कल्लोला नर्मदातरङ्गाः स्वःसोपानस्य परम्परां स्वर्गनिःश्रेणिश्रेणीमिव वियतो वीथीमाकाशमार्गमलङ्कुर्वते । उत्प्रेक्षा ॥ ३६ ॥

(२) अंसेति—अंसस्रंसिनः स्कन्धावलम्बिनो जलार्द्रा जर्जरजटाजूटा येषां ते तैः । मनाङ् मन्थरा मन्दचारिणः । तिम्यन्त आर्द्रीभवन्तस्तारवास्तरुषु जाता ये तन्तवस्तैर्निर्मितानि रचितानि यानि कौपीनानि तन्मात्रं छद आवरणं येषां ते । शीतेनोत्कण्टकिता पुलकिता अस्थिशेषास्तनवो येषां ते । तथा स्नात्वा शनैरुत्तरन्तो निर्यान्तः । एते जरत्तापसाः पिच्छिलशिलाजाले पतन्ति । त्वमेतान् पश्येति वाक्यार्थः ॥ ३७ ॥

(३) पश्येति—करिकुम्भसंनिभानि गजगण्डस्थलसदृशानि कुचद्वन्द्वानि स्तनद्वन्द्वानि तैरुल्लसन्त्यः शोभमाना वीचयस्तरङ्गा याभ्यस्ताः । एताः पुलिन्दस्त्रियः किरातनार्यः । अब्जविकासभासि कमलप्रविकासशोभिनि पयसि जले स्वैरं क्रीडन्ति । त्वमेताः पश्य । यासां नेत्रयोः पक्ष्मान्तरे भृङ्गाङ्गना भ्रमर्यः । उन्मीलन्ति विकसन्ति यानि नवनीलनीरजानि नव्यनीलकमलानि तेषां धिया बुद्ध्या । हस्तलताहता अपि हस्तलताभिस्ताडिता अपि । परिभ्राम्यन्ति चलन्ति ॥ ३८ ॥

इतोऽप्यवलोकयतु देवः—

वालोन्मीलत्कुवलयवनं विस्तरद्गन्धरुद्ध-
भ्राम्यद्भृङ्गैरनुकृतपयःपूर्णमेघान्धकारम्।
हर्षात्पश्यत्ययमतितरां तीरचारी मयूरो
मुग्धः पार्श्वे भ्रमति च भयाच्चक्रवच्चक्रवाकः॥ ३९॥

इदं च—

कुररभरसहं सहंसमालं मुदितमयूरचकोरचक्रवाकम्।
क इह सुरुचिरं चिरं विलोक्य प्रवरमते रमते नरो न रोधः॥४०॥

इतश्च—

(१)वककृतनिनदं नदं न दम्भात्कृतसवनं सवनं भजन्त एते।
निरुपमविभवं भवं स्मरन्तः प्रशमधना मुनयो नयोपपन्नाः॥४१॥

विधूतपाप्मानः खल्वमी महानुभावाः॥ क॥

तथाहि—

मुहुरधिवसतां सतां मुनीनामपविपदां विपदाङ्कपङ्कभाञ्जि।
तटनिकटवनानि नर्मदायाः कथमिभवन्ति भवन्ति कल्मषाणि॥४२॥

इतश्च—

(२)क्वचित्प्रवरगैरिकासमसमुल्लसत्पल्लवं
लवङ्गलवलीलतातलचलच्चकोरं क्वचित्।

---

वालेति॥ विस्तरता प्रसरता गन्धेन रुद्धाः। अत एव भ्राम्यन्तो भृङ्गास्तैरनुकृतः पयःपूर्णमेघोऽन्धकारश्च येनेति वनविशेषणम्। मेघाद्धि मयूरस्य हर्षः। अन्धकाराच्च रात्रिशङ्कया चक्रवाकस्य भयम्॥ ३९॥

कुररेति॥ प्रवरा मतिर्यस्य तत्संबोधनम्। इह रोधस्तटं विलोक्य को नरो न रमते क्रीडत्येव सर्वः। कथंभूतम्। कुरराणां भरमतिशयं सहते। तथा सह हंसमालया। तथा मुदिता मयूराश्चकोराश्चक्रवाकाश्च यत्र। यतः सुष्ठु रुचिरम्॥ ४०॥

वकेति॥ प्रशम एव धनं येषां ते मुनयो नययुक्ताः। अनुपमसामर्थ्यं भवमीश्वरं स्मरन्तो बकैः कृतशब्दम्। तथा न दम्भात्कपटादपि तु धर्मवासनया कृतं सवनं स्नानं यत्र तम्। तथा सह वनैः सवनं वनयुक्तम्। नदं जलाधारविशेषम्। एते भजन्ते॥ ४१॥

मुहुरिति॥ इभवन्ति गजवन्ति तथा वीनां पक्षिणां पदमङ्कं यत्र तथोक्तं पङ्कं भजन्ते तानि नर्मदायास्तटसमीपवनानि कर्मभूतानि अधिवसतां सतां विदुषाम्। अपगता विपद्भ्यस्तादृशां मुनीनां कथं कल्मषाणि पापानि भवन्ति। भवन्त्येवेत्यर्थः॥ ४२॥

क्वचिदिति॥ प्रवरं गैरिकं यत्र। तथा असममप्रतिमम्। सर्वोत्कृष्टमिति यावत्।

---

(१) बालेति—विस्तरता प्रसरता गन्धेन रुद्धा निरुद्धाः। भ्राम्यन्तो गच्छन्तो भृङ्गा भ्रमरास्तैः। अनुकृतोऽनुसृतः पयःपूर्णमेघस्य सजलजलदस्यान्धकारो येन तत्। बालानामुन्मीलतां विकसतां कुवलयानां पद्मानां वनम्। अयं तीरचारी तटगामी मयूरोऽतितरां पश्यति। मुग्धश्चक्रवाकः पार्श्वे रात्रिशङ्कया भयाद् भ्रमति व्याकुलः सन् गच्छति॥ ३९॥

(२) क्वचिदिति—प्रवरगैरिकासमा गैरिकसदृशाः समुल्लसन्तः प्रकाशमानाः पल्लवाः

क्वचिद्गिरिसरित्तटीतरुणविस्फुरत्कन्दलं
दलन्निचुलमञ्जरीमधुनिरुद्धभृङ्गं क्वचित् ॥ ४३ ॥
क्वचिच्चटुलकोकिलाकुलितनूतचूताङ्कुरं
कुरङ्गकुलसेवितप्रबलसालमूलं क्वचित्।
क्वचित्प्रवरसंचरत्सुरवधूपदैः पावनं
वनं नयति विक्रियामिह मनो मुनीनामपि ॥ ४४ ॥ युग्मम् ॥

तदिदमद्यतनं दिवसमस्य सैन्यस्याध्वश्रमापन्नखेदापनुत्तिनिमित्तमधिवसतु देवः ॥ क ॥

यत्र—

(१)वायुस्कन्धमवष्टभ्य स्फारितैः पुष्पलोचनैः।
वियद्विस्तारमेते हि वीक्षन्त इव पादपाः ॥ ४५ ॥

अपिच येषाम्—

(२)स्कन्धशाखान्तरालेषु पश्य जीमूतपङ्क्तयः।
लम्बमाना विलोक्यन्ते चलद्वल्गुलिका इव ॥ ४६ ॥

येषां च—

(३)उच्चैः शाखाग्रसंलग्ना मन्ये नूनं वनौकसाम्।
कुर्वन्ति पुष्पसंदेहं निशि नक्षत्रपङ्क्तयः ॥ ४७ ॥

---

तथा समुल्लसन्तः पल्लवा यत्र। पश्चाद्यथायुक्ति कर्मधारयः। गैरिकशब्दो नपुंसकः। 'प्रवरगैरिकोपम' इति वा पाठः ॥ ४३ ॥ ४४ ॥

तदिति ॥ खेदापनुत्तिः खेदापनोदः ॥ क ॥

वायुस्कन्धमिति ॥ स्कन्धः संहत्यर्थोऽसार्थश्च। कुतोऽत्रावासः। हि यस्मात् तुङ्गाः पुष्पिताश्चात्र पादपाः सन्ति ॥ ४५ ॥

---

किसलया यस्मिंस्तत्। लवङ्गानां लवलीनां लतानां वल्लीनां तलेषु चलन्तो गच्छन्तश्चकोरा यस्मिंस्तत्। तथा क्वचित् गिरीणां पर्वतानां सरितां नदीनां च तटेषु तरुणा नवीना विस्फुरन्तः प्रकाशमानाः कन्दला यस्मिंस्तत। दलन्त्यः स्फुटन्त्यो निचुलानां वेतसां मञ्जर्यस्तासां मधुभिर्निरुद्धा रुद्धा भृङ्गा भ्रमराः यस्मिंस्तत्। तथा क्वचिच्चटुलैश्चञ्चलैः कोकिलैराकुलिता व्याप्ता नूता नवीनाश्चूतानामङ्कुरा यस्मिंस्तत्। कुरङ्गकुलैर्हरिणवर्गैः सेवितानि प्रबलानां दृढानां सालानां वृक्षाणां मूलानि यत्र तत्। क्वचित् प्रवराणामुत्तमानां संचरन्तीनां सुरवधूनां देवाङ्गनानां पदैश्चरणैः पावनं पवित्रं काननं मुनीनां समाहितचेतसामपि मनोविक्रियां विकारमधैर्यमिति यावत्। नयति प्रापयति ॥ ४३ ॥ ४४ ॥

(१) वाय्विति—वायुस्कन्धं पवन एव स्कन्धप्रदेशस्तमवलम्ब्य। स्फारितैर्विस्फारितैः पुष्पनयनैः। एते पादपा वृक्षाः। वियत आकाशस्य विस्तारं प्रसारं वीक्षन्त इव पश्यन्तीव ॥ ४५ ॥

(२) स्कन्धेति—स्कन्धानां प्रकाण्डानां शाखानां लघुप्रकाण्डानां चान्तरालेषु मध्येषु। लम्बमाना जीमूतपङ्क्त्यो मेघावलयः। चलन्त्यो वल्गुलिका इव विलोक्यन्ते दृश्यन्त इति त्वं पश्य ॥ ४६ ॥

(३) उच्चैरिति—उच्चैः शाखाग्रेषु संलग्ना व्याप्ता नक्षत्रपङ्क्त्यस्तारावलयः। निशि रात्रौ वनौकसां वनवासिनां पुष्पसंदेहं कुसुमानामाशङ्कां कुर्वन्ति। इत्यहं मन्ये ॥ ४७ ॥

इतश्च—

एतेषु (१)प्रचण्डपवनाहततरुतलगलितसुगन्धिविविधविकचकुसुमप्रकरमकरन्दमापीय पुनः शिखरशाखाभिमुखमुत्पतन्त्यो विभान्ति दुरारोहतया कृताः केनापि निःश्रेण्य इव श्रेण्यो मधुलिहाम् ॥ क ॥

इतश्च—

निश्चलानां सैन्यभयेन (२)तुङ्गतरुशिखरपञ्जरपुञ्जितगोलाङ्गूलमण्डलानां निर्यन्नवप्ररोहाङ्कुराकाराः कुर्वन्ति वनदेवतानां क्रीडान्दोलनदोलारज्जुशङ्कामधोविलम्बिलाङ्गूललतिकाः ॥ ख ॥

इतश्च—

चकासत्युड्डीयमाना(३)स्तरुशिरःशिखरशाखाग्रस्खलनविलग्नग्रहगणविमानपङ्क्तिपताका इव विहगावलयो निश्चलम् ॥ ग ॥

इतश्च—

विजृम्भमाणमञ्जरीजालेषु सर्वर्तुविकासिसहकारवनेषु वनदेवताभिरुद्दामदवदहनप्रतीकारार्थमनागतमेव संगृहीतवारिगर्भाम्भोदपटलमिवालोक्यते कोकिलाकुलकदम्बकम् ॥ घ ॥

इतश्च—

विकसितसितपुष्पपिण्डपाण्डुरशिखराः सुधाधवलितोर्ध्वभूमयो विलासप्रासादा इव कुसुमसायकस्य जराधवलमौलयः कञ्चुकिन इव वनदेवतानाम्, उन्मादयन्ति मनोऽमन्दमुचुकुन्दपादपाः ॥ ङ ॥

(४)तदेवंविधेषून्मिषन्मुकुलविगलितबहलमकरन्दसीकरासारसुरभितभूतलेषु मुग्धमृगपरिहृतदावानलज्वालायमानोन्मदशबरसीमन्तिनीचरणप्रहारविकसिताशोककाननेषु नवजलधरनिकुरम्बकान्तितमालतरुशिरःस्थितश-

इतश्चेति ॥ गोलाङ्गूलानां कृष्णमुखमर्कटानां । लाङ्गूललतिकाः पुच्छवल्ल्यः । अतिलोमशत्वान्निर्यन्नवप्ररोहाङ्कुर आकारो यासाम् ॥ ख ॥

तदेवमिति ॥ मुग्धमृगेत्यादि वनविशेषणम् । लौहित्यान्मुग्धमृगैर्दावानलभ्रान्त्या

(१) प्रचण्डेति—प्रचण्डेन पवनेनाहतास्ताडिता ये तरवो वृक्षास्तेषां तलेभ्यो गलितानि पतितानि सुगन्धीनि गन्धवन्ति विविधानि विकचानि विकसितानि यानि कुसुमानि पुष्पाणि तेषां मकरन्दो मरन्दः पुष्परसः इति यावत् तम् ।

(२) तुङ्गेति—तुङ्गान्युच्चानि यानि तरुशिखराणि वृक्षाग्राणि पञ्जराणीव तेषु पुञ्जितानि संघीभूतानि गोलाङ्गूलानां कृष्णमुखवानराणां यानि मण्डलानि तेषाम् ।

(३) तर्वेति—तरुशिरःशिखराणां वृक्षाग्राणां शाखाग्राणि स्कन्धोर्ध्वभागास्तेषु स्खलनेनाघातेन विलग्नाः संलग्नाः ग्रहगणानां तारकादिग्रहगणानां विमानानि व्योमयानानि तेषां पङ्क्तयः श्रेणयस्तासां पताका वैजयन्त्यः ।

(४) तदेवमिति—देवो वनेषु विहरतु । कीदृक्षु वनेषु । उन्मिषन्ति विकसन्ति मुकुलानि कुड्मलानि तेभ्यो विगलितः पतितो बहलो बहुर्मकरन्दसीकरासारः पुष्परसबिन्दु-

ब्दानुमेयमाद्यन्मयूरमण्डलेषु मदनालसपुलिन्दराजसुन्दरीशिक्ष्यमाणवनकपोतकुक्कुटकुक्कुहकुलकुहरितेषु कूजत्कुररपरिवारितसरःपरिसरेषु चलच्चकोरसारसरवरमणीयेषु विहरतु देवः सह सैन्येन नर्मदोर्मिमन्दानिलान्दोलितलतापल्लवेषु वनेषु ॥ क ॥

राजापि श्रुतशीलेन दर्शितांस्तांस्तान्देशानवलोक्य चिन्तितवान् ॥ ख॥

(१)'कृतक्रीडाः क्रोडैर्मदकलकुरङ्गीहृतमृगाः
परिभ्राम्यद्भृङ्गाः परभृतकुलाक्रान्ततरवः ।
वनोद्देशाः पौष्पैः सुरभितदिगन्ताः परिमलै-
र्न चेतः कस्यैते विलसितविकारं विदधति ॥ ४८ ॥

इतश्च—

(२)वीचीनां निचयाः स्पृशन्ति जलदानुद्गन्धिसौगन्धिका
नृत्यत्केकिकदम्बकानि विकसद्वीरुन्धि रोधांसि च ।
धत्ते सैकतमुन्नदन्मदकलक्रौञ्चावलीसारसा-
नस्याः पद्मपरागपिञ्जपयसः सेव्यं च सिन्धोर्न किम् ॥ ४९ ॥

कुसुमिताशोककाननानि परिहृतानीति भावः ॥ क ॥

वीचीनामिति ॥ उद्गन्धिसौगन्धिका वीचिनिचया जलदान्स्पृशन्ति । रोधांसि च स्पृशन्ति । तदेवं यस्याः सिन्धोः, किं वा न सेव्यम् । चकारो वार्थे ॥ ४९ ॥

धारासंपातस्तेन सुरभितानि सुगन्धीनि भूतलानि येषु तेषु । मुग्धमृगपरिहृतानां मुग्धहरिणत्यक्तानां दावानलज्वालायमानानां काननाग्निज्वालावदाचरतामुन्मदशबरसीमन्तिनीनां मत्तकिराताङ्गनां चरणप्रहारैः पादप्रहारैर्विकसितनां प्रफुल्लानामशोकानां काननानि येषु तेषु । नवजलधरनिकुरम्बकान्तीनां नवपयोदसंघसदृशभासिनां तमालतरुशिरःस्थितानां तापिच्छतरुशिखरस्थानां शब्दानुमेयानां माद्यतां मयूराणां बर्हिणां मण्डलानि येषु तेषु । मदेन कामेनालसा या पुलिन्दराजसुन्दर्यः किरातराजाङ्गनास्ताभिः शिक्ष्यमाणा ये वनकपोताः पारावताः कुक्कुटाः कुक्कुहाश्च तेषां कुलैः कुहरितानि शब्दयुक्तानि तेषु । कुजन्तो ये कुरराः पक्षिणस्तैः परिवारिता वेष्टिताः सरःपरिसराः सरोदेशा येषु तेषु । नर्मदोर्मिमन्दानिलेन नर्मदावीचीमन्दपवनेनान्दोलिताश्चञ्चला लतानां वल्लीनां पल्लवाः किसलयाः येषु तेषु ।

(१) कृतेति—क्रोडैः शूकरैः कृता विहिता क्रीडा केलिर्यत्र । मदेन कला याः कुरङ्ग्यो मृग्यस्ताभिर्हृता आकृष्टा मृगा येषु ते । परिभ्राम्यन्तो विहरन्तो भृङ्गा भ्रमरा यत्र । परभृतकुलैः कोकिलकुलैराक्रान्ता व्याप्तास्तरवो वृक्षा येषु ते । एते वनप्रदेशाः । कस्य चेतो विलसितो जातो विकारो विक्रिया यस्य तत् । न विदधति न कुर्वन्ति । किन्तु कुर्वन्त्येवेति भावः ॥ ४८ ॥

(२) वीचीनामिति—उद्गन्धीनि सौगन्धिकानि कमलानि येषु ते वीचीनां तरङ्गाणां निचयाः समुदाया जलदान् मेघान् स्पृशन्ति । रोधांसि तटानि च नृत्यन्तो ये केकिनो मयूरास्तेषां कदम्बकानि येषु तानि । विकसन्त्यो वीरुधो लता येषु तानि सन्ति । तथास्याः सरितः सैकतमुन्नदन्ती शब्दायमाना मदकला या क्रौञ्चावली क्रौञ्चपक्षिपङ्क्तिः सारसाश्च तान् धत्ते । पद्मपरागेण पद्मधूल्या पिङ्गं पीतं पयो यस्यास्तस्या अस्याः सिन्धोः सरितः किं किं न सेव्यम् । अपि तु सर्वमेव सेव्यम् ॥ ४९ ॥

तदुचितमिहाद्य दिवसमावासं कर्तुम्' इति विचिन्त्य भ्रूकोणसंज्ञाज्ञापितसेनासन्निवेशस्तत्कालमेव 'विरचयत तुरङ्गममन्दुराः सरसदीर्घदूर्वानलनीलनिम्नस्थलीषु, कुरुत कायमानानि सरित्सेव्यसैकतेषु, उन्नमयत पटकुटीः कुलकाननेषु, आलानयत मदमत्तमतङ्गजान्मदकण्डूकपोलकाषसहेषु सरलसालसल्लकीसर्जार्जुनस्कन्धेषु, दूरमुत्सारयत शैवलशिलाजालकाष्ठकूटकण्टकपटलानि, समीकुरुत विषमभूभागान्' इति सेनापतिप्रमुखमुखरलोककलकलमुत्तालमुत्थितमसहमानस्तद्विरामावसरं प्रतिपालयन्नेकान्तेऽन्यतमप्रदेशे तस्याः सरितः सूक्ष्ममुक्ताफलक्षोदधवलवालुकापुलिनपृष्ठ एवास्थानगोष्ठीं बबन्ध ॥ क ॥

अथ नातिदूरे पुरोऽस्य शीतशैवलचक्रवाले चरतश्चक्रवाककदम्बकस्य मध्ये कोऽप्युत्क्षिप्य पक्षपुटम्, उन्नमय्य ग्रीवाग्रम्, अनङ्गपरवशो दूरादुपसर्पन्ननुरागिणीं काञ्चिच्चक्रवाकीं, दर्शितचाटुचातुर्यश्चक्रवाकयुवा दृष्टिपथमवातरत् ॥ ख ॥

अपरे च चत्वारो राजहंसास्तामेव चक्रवाकीं कामयमानास्तमापतन्तमन्तरान्तरा निपत्य स्खलयाम्बभूवुः ॥ ग ॥

तांश्चावलोक्य राजा विहसन्नासन्नवर्तिनं श्रुतशीलमाबभाषे ॥ घ ॥

'वयस्य, विलोक्यतामिदमसमञ्जसम् ॥ ङ ॥

अमी राजहंसाः सतीष्वपि स्वजात्युचितानुचरीषु कथमन्यासक्तामपीमां चक्रवाककामिनीं कामयन्ते ॥ च ॥

न खल्वेषामियमनङ्गभूमिः ॥ छ ॥

अथवा—

(१)किमु कुवलयनेत्राः सन्ति नो नाकनार्यस्त्रिदिवपतिरहल्यां तापसीं यत्सिषेवे ।
हृदयतृणकुटीरे दीप्यमाने स्मराग्नावुचितमनुचितं वा वेत्ति कः पण्डितोऽपि ॥ ६० ॥

तदुचितमिति ॥ मन्दुरा वाजिशाला । कायो मात्यत्रेति कायमानं लोकप्रसिद्ध्या रोहिषादितृणमयावासविशेषः । मदमत्तमतङ्गजानिति । मदेन वीर्यविपाकेन मत्ता नत्वौषधादिप्रयोगात् । जालानि मर्कटिकाख्यकृमिकृतगृहाणि । कूटं वप्रम् ॥ क ॥

न खल्विति ॥ यथा चक्रावकी चक्रवाकस्य सजातीया, एवं मनुष्यजातेर्नलस्य मानुषी दमयन्त्युचिता । यथा हंसानां सानुचिता, एवं लोकपालानामपि दमयन्तीति ॥ छ ॥

किमु इति ॥ ह्रस्वा कुटी कुटीरः । 'ह्रस्वे' इत्यधिकारे 'कुटीशम'-इति सूत्रेण रप्रत्ययः ॥ ६० ॥

(१) किम्विति—कुवलयानीव नीलकमलानीव नेत्राणि नयनानि यासां ताः कमलाक्ष्यो नाकनार्यः स्वर्गीयरमण्यो न सन्ति किम् । यस्मात्कारणात् त्रिदिवपतिर्नाकनायको मरुत्वान् । तापसीं तपस्विनीमहल्यां गोतमपत्नीम् । सिषेवे भेजे । वाथवा । स्मराग्नौ कामाग्नौ । हृदयमेव मानसमेव तृणकुटीरस्तृणनिर्मितह्रस्वकुटी तत्र । दीप्यमाने प्रकाशमाने सति पण्डितोऽपि धीमानपि कः । इदमुचितमनुचितं वेति वेत्ति जानीते । अर्थान्न वेत्तीति भावः ॥ ६० ॥

(१)एवम्वादिनि राजनि, अकस्मात्कोमलकण्ठकुहरप्रेङ्खोलनालंकारसुन्दरोऽमन्दमूर्च्छनावच्छिन्नसरसस्वरस्वरूपः प्रसन्नप्रयुज्यमानतानविशेषाभिव्यक्तिस्पष्टश्रुतिसुभगो गगने गान्धारग्रामगामी गीतध्वनिरुदचरत् ॥ क ॥

आवाहीच्च (२)चलद्दलिपटलपीयमानापूर्वपरिमलोद्गारिपारिजातमञ्जरीमकरन्दबिन्दुवर्षवाही वायुः ॥ ख ॥

(३)अथ कौतुकोत्तानिताननेन नरपतिनाऽप्यदृश्यत, शातकुम्भभङ्गपिशङ्गप्रभामण्डलमध्यवर्तिनः प्रधानपुरुषस्याग्रे गृहीतजात्यजाम्बूनददीर्घदण्डः कुण्डलालंकारवानुन्मिषन्मन्दारमुकुलमालामण्डितमौलिरवतरन्नम्बरान्निर्निमेषः सुवेशः पुरुषः ॥ ग ॥

अवतीर्य च सोऽतिविस्मयविस्फारितविलोचनमवनिपालमवादीत् ॥घ॥

'निषधेश्वर, त्वरितमुत्तिष्ठ । अर्घाय सज्जो भव ॥ ङ ॥

किं न पश्यसि—

(४)अवतरति घृताचीस्कन्धविन्यस्तहस्तः श्रुतिसुखकृतगीते किंनरे दत्तकर्णः ।
किमपि सपरिरम्भं रम्भयारभ्यमाणव्यजनविधिरधीशः स्वर्गिणामेष देवः ।५१।

अपि च—

(५)विरचितपरिवेषाः स्वाभिरङ्गप्रभाभिर्भुवनवहनभारोद्धारधुर्यांसपीठाः ।
उरसि परिविलोलद्दीर्घदामान एते यमवरुणकुबेराः स्वामिनो लोकपालाः ॥५२॥

---

(१) एवमिति—कोमलकण्ठकुहरस्य सुकुमारगलप्रदेशस्य यत्प्रेङ्खोलनमान्दोलनमेवालङ्कारो भूषणं तेन सुन्दरो रमणीयः । अमन्दया मूर्च्छनया स्वरारोहावरोहक्रमेण सरसं स्वरस्वरूपं यस्मिन् । प्रसन्नं यथा तथा प्रयुज्यमानो यो विशेषोऽतिशयस्तस्याभिव्यक्तिस्तया स्पष्टः श्रुतिसुभगः कर्णसुन्दरश्च ।

(२) चलदिति—चलन्ति यानि भ्रमरपटलानि तः पीयमानश्चूष्यमाणो योऽपूर्वपरिमलोद्गारी अपूर्वगन्धस्रावकः पारिजातमञ्जरीमकरन्दो मन्दारमञ्जरीमरन्दस्तस्य बिन्दूनां वर्षाः स्यन्दनं वहतीति बिभर्ति तादृशो वायुः ।

(३) अथेति—नरपतिना पुरुषः सुवेषोऽदृश्यत । कीदृशः।सः । शातकुम्भभङ्गवत् सुवर्णखण्डवत् । पिशङ्गा पिङ्गलवर्णा या प्रभा कान्तिस्तस्या मण्डलं तन्मध्यवर्त्तिनः । गृहीत आत्तो जात्यजाम्बूनदस्योत्तमजातीयसुवर्णस्य दीर्घो विशालो दण्डो येन सः । उन्मिषन्मन्दारमुकुलस्य प्रादुर्भवत्पारिजातवृक्षकुड्मलस्य या माला स्रक् तया मण्डितो मौलिः शेखरो यस्य सः ।

(४) अवतरतीति—घृताचीस्कन्धे घृताचीनामाप्सरोंऽशे विन्यस्तो हस्तो येन सः । श्रुतिसुखं कृतं श्रवणसुखकरं विहितं गीतं गेयं येन तस्मिन् । किंनरे दत्तौ कर्णौ श्रुती येन सः । रम्भयाप्सरसा किमपि सपरिरम्भं ससमालिङ्गनम् । आरभ्यमाणः प्रारभ्यमाणो व्यजनस्य तालवृन्तकस्य विधिर्विधानं यस्य सः । एष स्वर्गिणां नाकिनां स्वामी देव इन्द्रोऽवतरति नीचैरागच्छति ॥ ५१ ॥

(५) विरचितेति—स्वाभिः स्वीयाभिरङ्गप्रभाभिः । विरचितो विहितः परिवेषो मण्डलं यैस्ते । भुवनवहनस्य जगद्धारणस्य यो भारो धूस्तस्योद्धारे उद्वहने धुर्याणि धुरन्धराणि स्कन्धपीठानि येषां ते । उरसि वक्षसि परिविलोलच्चलद्दीर्घं विशालं दाम माला

राजा तु तदाकर्ण्य (१)ससंभ्रमोत्थानवशवल्गितोत्तरीयाञ्चलस्खलत्क-नककंकणरणत्कारमुखरितमाधाय मूर्ध्नि संपुटितपाणिपल्लवयुगलमाश्चर्यर-सरभसवशमुच्छ्वास्यमानसर्वाङ्गपुलकः कतिपयपदान्यभिमुखं सह परिजने-नोच्चलितवान्॥ क॥

अथ (२)सकलसुरशिरःशेखरायमाणचरणरेणुरनेकनाककामिनीकुचकु-म्भकुङ्कुममञ्जरीमुद्राङ्कितविपुलवक्षःस्थलीदृश्यमानमहानीलमणिमण्डननिभ-भव्यवृत्रशस्त्रव्रणः, श्रवणशिखरारोपितप्रत्यग्रपारिजातमञ्जरीगलद्बहलकिञ्ज-ल्ककणानुपान्ते गायतस्तुम्बुरोः साक्षादमृतायमानगीतरसतुषारानिव परि-पूर्णकर्णोद्गीर्णान्कपोलपालिलग्नानुद्वहन्, अनवरतशचीचुम्बनसंक्रान्तताम्बू-ललाञ्छनायमानाच्छाच्छहरिचन्दननिरुद्धबन्धुरस्कन्धसंधिः, अन्धक इव हारयष्ट्यास्फालितवक्षःस्थलः, विन्ध्यगिरिरिव सहस्राक्षः, पन्नगेन्द्र इव कुण्डली पातालमुक्तासमानश्च, *कलिकालशापावतीर्णसरस्वतीगीतप्र-

अथ सकलेति॥ अथानन्तरं पूर्वदिग्भागव्योम्नः पुरन्दरोऽवातरत। हारयष्टिर्मु-क्तालता। अन्यत्र हरस्येयं हारी यष्टिः शूललक्षणा। अन्धको दैत्यविशेषः। सहस्रमक्षी-णि यस्य। 'बहुव्रीहौ'-इति समासान्तः षच्। विन्ध्यपक्षे सहस्रशब्दः प्राचुर्यवचनः। अक्षा विभीतकाः। कुण्डलं कर्णालंकारः तद्वान्। तथा पाता रक्षिता। अलमत्यर्थं रोच-मानश्च। पन्नगेन्द्रस्तु कुण्डलाकारः। तथा पाताले मुत्पातालमुक्तया भासमानः। मत्तमा-तङ्ग औचित्याद्वैरावणः क्षीवचाण्डालश्च। पद्मरागस्य मणेर्यदरुणं लोहितं प्रभामण्डलं त-न्मण्डनमस्य। अंशुमांस्तु अविकृतः पद्मानां रागोऽरुणस्य प्रभा मण्डलं बिम्बम्। एतानि मण्डनं यस्य॥ ख॥

* पुराणादौ किल श्रूयते—पुरा सरस्वतीदधीच्योर्वेदत्त्वविषये संवादे जायमाने क्रुद्धेन दधीचिना शप्ता सती सरस्वती कलिकाले चाण्डालकुलेऽवततार। अतएव कलिकाले चाण्डा-ला एव मधुरं गायन्तीति विवृतिनामकटीका॥

येषां ते। एते स्वामिनः। यमवरुणकुबेरा लोकपालाः सन्ति॥ ९२॥

(१) ससम्भ्रमेति—ससम्भ्रमं यथा तथोत्थानवशेन वल्गितं चञ्चलं च तदुत्तरीयाञ्चलं दुकूलाञ्चलं तेन स्खलन् पतन् यः कनककङ्कणः सुवर्णवलयस्तस्य रणत्कारेण रणत्कारशब्देन मुखरितं शब्दयुक्तम्।

(२) अथेति—सकलसुरशिरःसु सर्वदेवमूर्धसु शेखरायमाणो मौलिरिवाचरन् चरणरे-णुर्यस्य सः। अनेका या नाककामिन्यः स्वर्गसीमन्तिन्यस्तासां कुचकुम्भेषु स्तनकलशेषु या कुङ्कुममञ्जरीमुद्रा तयाङ्किता चिह्निता विपुलवक्षःस्थली विशालोरःप्रदेशस्तत्र दृश्यमानो विलोक्यमानो महानीलमणिमण्डननिभ इन्द्रनीलमणिसदृशो भव्यो वृत्रासुरशस्त्रस्य व्रणो यस्य सः। श्रवणशिखरारोपिता कर्णमूलारोपिता प्रत्यग्रा नवा या पारिजातमञ्जरी मन्दा-रमञ्जरी तस्या गलन्तः स्रवन्तो बहलान् किञ्जल्ककणान् केसरकणान्। अनवरतं निरन्तरं यथा तथा शचीचुम्बनेन संक्रान्तं सङ्गतं यत्ताम्बूलं नागवल्ली तस्य लाञ्छनायमानश्चिह्न इ-वाचरन् यो हरिचन्दनस्तेन निरुद्धबन्धुरो निम्नोन्नतः स्कन्धसन्धिरंशप्रदेशो यस्य सः। एता-दृशः पुरन्दरोऽवातरत्।

वाह इव मत्तमातङ्गगामी, दिशि दिशि विकीर्णकनककपिशांशुरंशुमानिवाविकृतपद्मरागारुणप्रभामण्डलमण्डनः, सह लोकपालैर्भगवान्पुरंदरः पूर्वदिग्भागाम्बरादवातरत् ॥ ख ॥

अवतीर्य चक्षुषां सहस्रेणोन्मीलन्नीरजवनानुकारिणा निरूप्य पादयोः पुरः पतितमष्टाङ्गाश्लिष्टभूतलमिमम्, ऐरावतकुम्भकूटास्फालनकर्कशाङ्गुलिना, (१)दुर्दान्तदैत्यदानववधूवैधव्यदानशालामूलस्तम्भेन, (२)शचीकुचकलशसंस्पर्शसंक्रान्तकुङ्कुमपत्त्रवल्लीकेन, दक्षिणपाणिना, सहेलमुन्नमय्य मूर्ध्नि पस्पर्श ॥ क ॥

कृत्वा च कुशलप्रश्नालापव्यवहारानुच्चैः काञ्चनासनं समुल्लसन्मणिमयूखमञ्जरीजालजटिलमवनिभुजा स्वभुजोपनीतमध्यतिष्ठत् ॥ ख ॥

उपविष्टेषु यथोचितासन्नमासनेषु यमवरुणकुबेरप्रमुखेषु देवेषु क्रमेण कृतोचिताचारः पुरः पृथ्वीपृष्ठ एव विनयान्निषद्य निषधेश्वरः पुरंदरमवादीत् ॥ ग ॥

(३)दिष्ट्या दिवौकसां नाथ जातो युष्मत्समागमात् ।
आकल्पं कीर्तनीयानां श्रेयसामस्मि भाजनम् ॥ ५३ ॥

अपि च—

(४)इष्ट्वा क्रतून्युगशतानि तपश्चरित्वा वाञ्छन्ति संगमसुखं मुनयोऽपि येषाम् ।
तेषामनुग्रहकृतां स्वयमेत्य मेऽद्य युष्माकमादिशत किं प्रियमाचरामि ॥५४॥

इति प्रकाशितप्रश्रयालापे पार्थिवपुंगवे पुरंदरो दरदलितकुन्दकलिकाकान्तदन्तद्युतिद्योतिताधरदलमीषद्विहस्य लीलावलितकंधरः कुबेरमुखमवलोकयांचकार ॥ घ ॥

सोऽपि 'निषधेश्वर, श्रूयतामस्मदागमनकारणम् ॥ ङ ॥

'अस्ति विदर्भाधिपतेर्भीमभूमिपालस्य सुता सुतारनयननिर्जितेन्दीवरा

---

इति प्रकाशितेति ॥ दरदलितेत्यत्र दरेत्यव्ययमीषदर्थे ॥ घ ॥

---

(१) दुर्दान्तेति—दुर्दान्ता दुःखेन दमनीया ये दैत्यदानवास्तेषां वधूनां नारीणां वैधव्यदानशालाया मूलस्तम्भः प्रधानस्तम्भः ।

(२) शचीति—शच्या इन्द्राण्याः कुचकलशयोः स्तनकुम्भयोः संस्पर्शेन संक्रान्ता सङ्गता कुङ्कुमस्य पत्त्रवल्ली पत्त्ररचना यस्य स तेन ।

(३) दिष्ट्येति—हे दिवौकसां नाथ देवाधीश इन्द्र । दिष्ट्या भाग्येन । युष्मत्समागमात् भवत्सम्बन्धात् । आकल्पमासंसारम् । संकीर्तनीयानां श्रेयसां कल्याणानां भाजनं पात्रमहं नलो जातोऽस्मि ॥ ५३ ॥

(४) इष्ट्वेति—मुनयोऽपि क्रतून् यागान् । इष्ट्वा तथा युगशतानि तपश्चरित्वा तपस्यां कृत्वा येषां भवताम् । सङ्गमसुखं संमेलनानन्दम् । इच्छन्ति । अद्य साम्प्रतम् । स्वयमेत्य मेऽनुग्रहकृतां करुणाकृतां तेषां युष्माकं किं प्रियमिष्टमाचरामि तनोमि । यूयमादिशताज्ञापयत ॥ ५४ ॥

वराथनी निजकान्तितिरस्कृतत्रिदिवनारीरूपसंपत्तिः कुन्ददन्ती दमयन्ती नाम ॥ क ॥

तस्याश्च चम्पकदलावदातदेहायाः किल स्वयंवरमहोत्सवः सांप्रतं प्रस्तुतः' इति नारदादधिगम्य वयमपि विदर्भाधिपतिपुरं प्रस्थिताः ॥ ख ॥

किंतु लघयति पुरुषं स्वमुखेनार्थिभावो यतस्तत्र गत्वापि दमयन्तीं किं ब्रूमो वयमिन्द्रादयो लोकपालास्त्वामर्थयामह इत्यसदृशं महिम्नोऽस्मद्विधेषु, स्पृहणीयरूपासि कं नोत्सुकयसीत्यनुचितमपरिचितेषु चाटुचातुर्यम्, अजरसः खल्वमरा वयमिति ग्राम्यः स्वप्रशंसोपक्रमः, प्राप्नुहि त्रयाणामपि लोकानामाधिपत्यमस्मत्संगमादिति महत्प्रागल्भ्यप्रलोभनम्, अल्पायुषो मनुष्यास्तदस्माकं देवानां मध्ये कंचिद्वृणीष्वेति पापीयः परदोषोदाहरणद्वारेणाभ्यर्थनम् ॥ ग ॥

अतो देशकालकार्योक्तिकुशलस्त्वमुच्यसे । गच्छाग्रे, भव दूतो देवानामशेषवैदग्ध्यविशेषोक्तिकोविद, किमन्यदिह शिक्ष्यसे, तैस्तैरुपायैः, ताभिस्ताभिः कलाभिः, तैस्तैः प्रलोभनप्रकारैः, क्रियतां देवकार्यम्. आर्याणां प्रायः परोपकारकरणार्थमेव जन्म च जीवितं च, न च भवन्तमस्मदनुभावादन्यः कोऽपि कन्यान्तःपुरे रहस्यपि वर्त्तमानां विदर्भेश्वरसुतामुपसर्पन्तमुपलक्षिष्यते' इत्यभिधाय व्यरंसीत् ॥ घ ॥

नलोऽप्येतदाकर्ण्य तदिदं संकटम् 'इतो व्याघ्र इतस्तटी, इतो दवाग्निरितो दस्यवः, इतो दुष्टदन्दशूक इतोऽप्यन्धकूपः' इति न्यायात् । इतः कर्णान्तकृष्टशरासनो मर्मप्रहारी प्रहरति मकरध्वज इतश्चायमेतेषामलङ्घनीय आदेशः । तन्न जानीमः किमत्रोत्तरम् । एकत्रार्थेऽस्माकं भवतां च प्रवृत्तिरिति प्रणयप्रार्थनाभङ्गकारिणी विहतविनया प्रतिकूलोक्तिः, अनभिज्ञोऽस्मि दूतोक्तीनामिति शाठ्यम्, असमर्थोऽस्मि संदिग्धक्रियाकारितायामित्याज्ञालङ्घनम्, आज्ञालङ्घनं च सेतुबन्धनमिव स्खलयति श्रेयःस्रोतः, षण्ढमुखदर्शनमिव वर्धयत्यलक्ष्मीम्, रजस्वलाभिगमनमिव हरत्यायुः, इत्यनेकविधमवधार्य न नाम दुरधिगमाः केऽपि पदार्थास्तत्रभवतामशेषजगदीश्वराणाम्, न च न जानीथ ममापि प्रसिद्धमध्यवसायम्, एवं स्थितेऽप्येष वः करोम्यादेशम्, आदिष्टपरामर्शो न श्रेयानादेशकारिणः, किं तु बलीयान्परतो विधिः प्रमाणम्' इत्यभिधाय भक्त्या भयेन च देवानां दौत्यादेशं समर्थितवान् ॥ ङ ॥

स्थित्वा च कंचित्क्षणमुचितालापलीलया कृत्वा च कांश्चिदन्योन्यप्रस्तुतप्रियव्यवहारान्, आपृच्छ्य, यथागतं गतेष्वथ तेषु देवेषु निषधेश्वरश्चिरं चिन्तयांचकार ॥ च ॥

अस्तीति ॥ कुन्ददन्तीत्यत्र 'नासिकोदरौष्ठ'–इति सूत्रेण ङीप् ॥ क ॥

नलोऽपीति ॥ न नाम दुरधिगमा इत्यत्र 'नाम' इत्यभ्युपगमे ॥ ङ ॥

तदिदम्, अनुच्छ्वासविरामं मरणम्, अमोहं मूर्च्छनम्, अरोगमङ्गव्यथनम्, अशल्यप्रवेशमन्तःशूलम्, अदारिद्र्यो निद्राविघातः ॥ क ॥

किमन्यत्—

तस्यामाकर्णितानुरागायां यन्ममाद्य दीर्घदौर्जन्यदोहदिना दैवेनाकस्मिकमौत्सुक्यानुरागव्यवसायं वन्ध्यमध्यवसितं कर्तुम् ॥ ख ॥

इदानीं किमत्र श्रेयो यस्माद्, अनुपयोगं गमनम्, श्लाघ्यं निवर्तनम्, अपार्थकमासनम्, असाधीयानध्यवसायः ॥ ग ॥

इति चिन्ताकुले नले भयान्मूकीभूतेष्वासन्नवर्तिषु परिजनेषु प्रणयात्प्रा-(१)वरणप्रान्तप्रच्छादितवदनभागं किमप्यासन्नमुपसृत्य शनैस्तत्कालयोग्यालापैरनुशीलयञ्शीलज्ञः श्रुतशीलो नलमाबभाषे ॥ घ ॥

'देव, जानामि देवस्य देहं दहति दहन इव दारु दारुणो दौत्यचिन्ताभारः। को नाम सामान्योऽपि स्वयमभिलषितेऽर्थे दूतत्वदासभावमङ्गीकुर्यात्। विशेषतोऽनुरागिण्यङ्गनाजने। तथापि किं न जानाति देवो, यथा याचको ब्राह्मण इव निर्वेदः कस्य संतोषाय, विषवैद्य इव विषादः संदेहकारी शरीरस्य, भीमाभिमन्युनिरुद्धं कुरुबलमिव मनो महान्तं संतापमनुभवति ॥ ङ ॥

तदलमनेन वातूलीभ्रमेणेव मीलयता चक्षुरुद्वेगेन ॥ च ॥

(२)किं देवेन न श्रुतम्, अमृतमथनावसरे सुरासुरकरपरिवर्त्यमानमन्दरमन्थाननिर्घोषबधिरितसमस्तरोदःकंदरादिवापि दूरोच्छलितदुग्धतुषारासारतारकितनभसः, समुत्पन्नानेककौस्तुभादिवस्तुविस्ताराद्दुद्गच्छद्दप्सरोमुखमण्डलैः क्षणमिव विहितविकचनलिनखण्डशोभाद्, अनेकाश्चर्यकुक्षेः क्षीरसागरादजनि जनितजगद्विस्मया स्मरजननी हस्तस्थिततरुणारविन्दा देवी देदीप्यमानपुण्यलक्ष्मा लक्ष्मीः ॥ छ ॥

यस्याः सर्वाङ्गलावण्यमधु विकचलोचनचषकैरापीय पीयूषजुषो मदन-

देवेति ॥ निर्वेदः खेदो वेदरहितश्च। विषादोऽतीव शोचनम्। यश्च विषं कालकूटमादयति। भीमो रौद्रोऽमितो मन्युर्दैन्यं तेन निरुद्धम्। कुरुबलं तु भीमेन मध्यमपाण्डवेनाभिमन्युना चार्जुनसुतेन निरुद्धम् ॥ ङ ॥

तदलमिति ॥ उद्वेगो दुःखम्। वातूलीभ्रमस्तु उदूर्ध्वं वेगः ॥ च ॥

(१) प्रावरणप्रान्तेनोत्तरीयप्रान्तेन प्रच्छादित आच्छादितो वदनभागो मुखभागो यस्मिंस्तत् यथा तथा।

(२) किमिति—सुरासुरकरैर्देवासुरकरैः परिवर्त्यमानो भ्राम्यमाणो यो मन्दराचल एव मन्थानदण्डस्तस्य निर्घोषेण शब्देन बधिरिताः समस्ताः रोदसी द्यावापृथिवी कन्दरा गुहा येन तस्मात्। दूरोच्छलितात् दुग्धमयतुषारासारात् दुग्धधारासंपातात् तारकितं तारायुक्तीकृतं नभोमण्डलं येन। समुत्पन्नानि जातानि विविधानि कौस्तुभादिवस्तूनि तेषां विस्तारात्।

मदपरवशाः परस्परमेवेर्ष्यन्तश्चक्रुश्चक्रपाणिना समं सङ्गरम् ॥ क ॥

अथ सा सर्वानप्यन्तरान्तरापततस्तानुल्लङ्घ्य(१) मन्दरगिरिशिखरशात-कुम्भनिकषोपलायितबाहोर्भगवतश्चिक्षेप क्षेपीयः कण्ठे वैकुण्ठस्य स्वयंवर-कुसुममालाम् ॥ ख ॥

एवं साऽपि कदाचिच्चम्पककलिकाकलापगौराङ्गी रागिणी त्वयि वञ्चयि-ष्यति देवान्। वञ्चितो यतः पूर्वमात्ममुखमण्डलश्रिया शशी, तिरस्कृतो मदनः सौभाग्येन। सकृत्प्रनृत्तायाश्च किमवगुण्ठनेन। विधेरिव वामभ्रुवामचि-न्त्यानि चरितानि भवन्ति ॥ ग ॥

किमु न स्मरति देवो दिवि विश्रुतमर्थसारं स्वर्लोकादवतीर्य पुरा गीतं गन्धर्वगायनैर्गीतगोष्ठीस्थितस्याग्रे युगलमिदमार्ययोर्देवस्य ॥ घ ॥

(२)क्वचिदपि कार्यारम्भेऽकल्पः कल्याणभाजनं भवति।
न तु पुनरधिकविषादान्मन्दीकृतपौरुषः पुरुषः ॥ ९५ ॥
(३)अपहस्तितयान्तरायानर्थानुररीकृतान्प्रसाधयतः।
विधिरपि बिभेति तस्मान्निरतिशयं साहसं यस्य' ॥ ९६ ॥

एवमनेकधा प्रस्तुतपुराणपुरुषाख्यानप्रपञ्चप्रक्रमेणातिक्रान्ते भूम्नि दिवसे मङ्गलोद्गार इव वाञ्छितार्थसिद्धेः, तर्जनहुंकार इवान्तरायाणाम्, ओंकार इवोत्साहस्मृतेः, पुण्याहध्वनिरिव हृदयप्रसादप्रासादस्य, पुनर्नवीकृतानुराग-स्तम्भोत्तम्भनस्य तस्य नरपतेः शिश्राय श्रुतिं श्रुतशीलेन श्रावितमिममेवार्थं समर्थयन्निव मध्याह्नशङ्खध्वनिः ॥ ङ ॥

राजा तु तमाकर्ण्य विसर्जितपरिजनस्तत्रैव पुलिनमध्ये मध्याह्नसमय-समुचितव्यापारमकरोत् ॥ च ॥

अनन्तरमतिक्रान्तेषु केषुचिन्मुहूर्तेषु गगनमध्यतलाद्विलम्बमाने मना-

---

अथ सेति ॥ अतिशयेन क्षिप्रं क्षेपीयः। 'स्थूलदूर'–इत्यादिना सिद्धम् ॥ ख ॥

एवं सापीति ॥ सकृत्प्रनृत्तायाः स्तोकमपि नर्तितुमारब्धवत्याः किं नीरङ्ग्याः ॥ ग ॥

क्वचिदिति ॥ कल्पोऽनिर्विण्णः। तु पुनरिति शब्दौ संभूयवाचकत्वात्पुनरर्थमेव द्यो-तयतः। यथापि चेति समुन्वयः ॥ ९९ ॥

---

(१) मन्दरेति--मन्दरगिरिशिखराण्येव शातकुम्भानि सुवर्णानि तदर्थं निकषोपल इवाचरितो बाहुर्भुजा यस्य तस्य भगवतो वैकुण्ठस्य कण्ठे।

(२) क्वचिदिति--अकल्पोऽपि असमर्थोऽपि समुद्योगी जनः। कार्यारम्भे कर्मारम्भे क्वचित्कल्याणभाजनं लक्ष्मीभाजनं जायते। पुनरधिकविषादात् दुःखातिशयान्मन्दीकृतं पौरुषं पुरुषकारो येन तादृशो जनः कल्याणभाजनं न भवति ॥ ९९ ॥

(३) अपहस्तितेति--यस्य पुरुषस्य निरतिशयं समधिकं साहसं वर्त्तते। तस्मात् पुरुषाद्विधिरपि ब्रह्मापि बिभेति भीतो भवति। कीदृशाज्जनात्। उररीकृतान् स्वीकृतान्। तथापहस्तिता दूरीकृता अन्तराया विघ्नानि येभ्यस्तान्। अर्थान् कर्माणि प्रसाधयतः कुर्वतः पुरुषात् ॥ ९६ ॥

ङ्मार्तण्डमण्डले चण्डवात्याहतशुष्कपत्त्रमिव दण्डप्रान्तप्रचलितकुलालचक्रमिव तेन पुरंदरादेशभ्रमेण भ्रान्तमात्मनो मनः क्वाप्येकान्तकमनीयनर्मदाप्रदेशदर्शनविनोदेन स्वस्थीकर्तुमिच्छन्निच्छानुकूलकतिपयाप्तपरिजनपरिवृतः श्रुतशीलस्कन्धावष्टम्भविहारो विहाय दूरमिव शिबिरसंनिवेशम्, इतस्ततस्तरुणतमालमण्डपमण्डलितमयूरहारिणा चलच्चकोरचक्रवाकचक्रवालवलयितेन (१)स्नानागततापसपदपङ्क्तिखर्वितदूर्वाङ्कुरेणापसरत्पयःपूरतरङ्गितवालुकेन पुलिनप्रान्तेन प्राचीं दिशमयासीत् ॥ क ॥

(२)तत्र च चटुलचञ्चरीककुलाकुलितविविधवीरुधां तलेषु विचरतोऽस्य रसातलविनिर्गताः पन्नगाङ्गना इव नागमदहारिण्यस्तमालकन्दलीकोमलाङ्ग्यष्टयः श्रोणीभारालसगमनास्त्रिवलीतरङ्गिततनुमध्यलतिकाः, काश्चित्कण्ठकन्दलावलम्बितमातङ्गमौक्तिकलताः स्फुरन्नक्षत्रवलयाः कृष्णपक्षरात्रय इव कृतक्रीडाशरीरपरिग्रहाः, काश्चिदुभयश्रवणावसक्तदन्तिदन्तपत्त्रप्रभाधवलितमुखमण्डलाः सुरसरित्सलिलसंवलितकालिन्दीजलदेवता इव नर्मदयामन्त्रिताः, काश्चित्परिधानीकृतरक्तपल्लवास्तडिल्लतालेखामेखलाश्चलदम्बुवाहपङ्क्तय इव विन्ध्यस्कन्धानुबन्धिन्यः, काश्चिन्मातङ्गमदमण्डलमिलन्मधुकरकरालिताः सकलनीलोत्पलवनलक्ष्म्य इवान्यजलाशयेभ्यो महानदीमवतरन्त्यः, काश्चिल्लोहिताशोककुसुमस्तबककृतकर्णावतंसोत्तंसास्त्रिपुरपुरन्ध्र्य इव हरशरानलज्वालाकुलितशिरसो धूमधामलाः सलिलमनुसरन्त्यः, काश्चिल्ललितलीलामृगैरनुगम्यमानाः शरीरवत्योऽञ्जनशैलस्थलाधिदेवता इव ती-

तत्र चेति ॥ चटुलालिकुलाकुलितवीरुन्मूलेषु विचरतो नृपतेर्दृष्टिपथमवतीर्णाः किरातकामिन्यश्चिरं चिक्रीडुरिति सम्बन्धः । कथंभूताः । नागमदेन गजमदजलेन हारिण्यस्तेनालंकृतत्वात् । पन्नगाङ्गनास्तु नागानां वासुकिप्रभृतीनां मदं गर्वं हरन्ति मुष्णन्ति कृतक्रीडाशरीरपरिग्रहा मूर्ता रात्रयः सनक्षत्रा इव । मुक्तानां नक्षत्राणि स्त्रीणां रात्रय उपमानम् ।

(१) स्नानेति--स्नानायागता ये तापसा मुनयस्तेषां पदपङ्क्तिभिश्चरणश्रेणीभिः खर्विता ह्रस्वीभूता दूर्वाङ्कुरा यस्मिंस्तत् ।

(२) तत्रेति--किरातकामिन्यो दृष्टिपथमवतेरुः । कीदृश्यस्ताः । कण्ठकन्दलेषु गलप्रदेशेषु अवलम्बिता मातङ्गमौक्तिकानां गजमुक्तानां लतिका हारा यासां ताः । श्रवणासक्तानि कर्णावलम्बीनि दन्तिदन्तपत्राणि गजदन्तपत्राणि तैर्धवलितानि मुखमण्डलानि वदनमण्डलानि यासां ताः । सुरसरित्सलिलेन गङ्गाजलेन संवलितं संमिश्रीभूतं कालिन्दीजलं यमुनापयस्तस्य देवता इव । मातङ्गमदमण्डलेषु गजमदमण्डलेषु मिलन्तो ये मधुकरा भ्रमरास्तैः करालिताः । लोहिताशोकस्य कुसुमानां पुष्पाणां स्तबकैर्गुच्छैः कृता विहिताः कर्णावतंसा उत्तंसाः शेखराणि च याभिस्ताः । मायूरपिच्छगुच्छैरवनद्धा बद्धाः कर्बुराश्चित्राः कबरीकलापाः केशपाशा यासां ताः । चलद्भिर्वलयैः कङ्कणैर्मुखराणि शब्दायमानानि करतलानि तेषां मुक्तालतालिकारम्भेण रमणीया मनोरमा रसिकानां रसनिर्भराणां या रासक्रीडा रासलीला तया निर्भरा हर्षिताः ।

र्थावगाहनानुरागिण्यः, काश्चिज्जराजर्जरशवरकञ्चुकिकरावलम्बलीलागामिन्यः स्फुरदिन्द्रनीलशिलापुत्रिका इवेन्द्रजालिकैः संचार्यमाणाः कृष्णाञ्जनिकाकुसुमकान्तयः, काश्चिच्चिपिटनासाः कुन्दकान्तदन्तपङ्क्तयो मायूरपिच्छगुच्छावनद्धकर्बुरकबरीकलापाश्चलद्वलयमुखरकरतलोत्तालतालिकारम्भरमणीयरसिकरासकक्रीडानिर्भराः कादम्बमधुपानघूर्णितदृशो दृष्टिपथमवतेरुरपराह्णमज्जनागतास्तरुणकिरातकामिन्यः ॥ क ॥

(१)ततश्च ताः सूक्ष्ममुक्ताफलधवलवालुकापुलिनपृष्ठे लब्धपरभागाः स्वैरं स्वैरमनुच्चचरणचलनक्रमात्क्रेङ्कारितनूपुररवाकृष्टकलहंसकुलमनाकुलकलगीततरङ्गासन्नरङ्गितकुरङ्गमनङ्गभावभूयिष्ठमनुभूय तीरविहारसुखम्, अनन्तरमक्रूरजलचरमवेगवहत्सलिलमुत्फुल्लविविधविकसिताम्बुजजातिजीवितजीवंजीवकमुत्कूजितकुररमारसितसारसमुन्मदहासिहंसावतंसमुरःप्रमाणाच्छोदकमतिरमणीयं ह्रदमवातरन् ॥ ख ॥

अवतीर्य च ताः काश्चित्पन्नगपतिपुरन्ध्र्य इवोद्गीर्णविषगण्डूषाः, काश्चिद्राक्षसप्रमदा इव रक्तोत्पलाकृष्टिव्यसनिन्यः, काश्चिद्गोपालाङ्गना इव गृहीतपुण्डरीकाक्षाः, काश्चित्कार्तिकेयशरपङ्क्तय इव विश्लेषितक्रौञ्चाः, काश्चित्कुरुसेना इव धार्तराष्ट्रशकुनिमार्गेणानुधावमानाः, काश्चिद्रात्रय इव विघटितचक्रवाकमिथुनाः, काश्चिच्चकोराङ्गना इव चञ्चूकृतदीर्घकमलनालैः शशधरकरनिर्मलजलमास्वादयन्त्यः, काश्चित्करिण्य इव सरसबिसाग्राणि ग्रस-

दन्तपत्रप्रभाणां सुरसरित् स्त्रीणां कालिन्द्युपमानम् । रक्तपल्लवानां तडिल्लता स्त्रीणामम्बुवाहपङ्क्तिरुपमा । लोहिताशोककुसुमानां हरशरासनज्वाला स्त्रीणां च श्यामत्वेन धूम उपमा । कृष्णाञ्जनिका तापिच्छलता ॥ क ॥

ततश्चेति ॥ अम्बुजजातिभिर्जीविता जीवंजीवाः पक्षिविशेषा यत्र । शेषाद्विभाषा, इति कप् । अम्बुजजातिरेव जीवितं येषामिति वा । अतिप्रियत्वात् । उरःप्रमाणं वक्षोदघ्नमुदकं यत्र । अगाधे हि पयसि न जलक्रीडा ॥ ख ॥

अवतीर्येति ॥ विषं जलं, गरश्च । रक्तोत्पलं रक्ताब्जं, रक्तेनोत्कृष्टं पलं मांसं च । गृहीतपुण्डरीके अवलोकितसिताम्बुजे अक्षिणी यासाम् । चक्षुषो हि ग्रहणमवलोकनमेव । यथा श्रोत्रपानमाकर्णनम् । अथवा शैत्यान्नेत्रन्यस्ताब्जाः। अन्यत्र पुण्डरीकाक्षः कृष्णः। क्रौञ्चः पक्षी गिरिश्च । धृतराष्ट्रो दुर्योधनस्य पिता, शकुनिर्मातुलः । पक्षे धृतराष्ट्रो हंसः। यद्विश्वः—'धृतराष्ट्रः सुराज्ञि स्यात्पक्षिक्षत्रियभेदयोः' । शकुनिः पक्षी । अचञ्चूनि चञ्चूनि कृतानि चञ्चूकृतानि । अन्यत्र चञ्च्वां कृतानि धृतानि यानि दीर्घकमलनालानि तैः शशध-

(१) ततश्चेति—सूक्ष्मैः क्षुद्रैर्मुक्ताफलैर्मौक्तिकैर्धवलवालुकामयं सितसिकतामयं पुलिनपृष्ठं तटप्रदेशस्तस्मिन् । अनुच्चानां चरणानां चलनक्रमात् क्रेङ्कारितैः क्रेङ्कारशब्दमयैर्नूपुरशब्दैराकृष्टानि कलहंसकुलानि यस्मिंस्तम् । अनाकुलं यथा तथा कलेन मधुरेण गीतेन तरङ्गाणां वीचीनामासन्ने समीपदेशे रङ्गिताः कुरङ्गा मृगा यस्मिंस्तम् ।

मानाः काश्चिज्जलयन्त्रपुत्रिका इव संपुटितमुखपाणिपल्लवयुगलाग्ररन्ध्रोन्मुक्तसूक्ष्मवारिधाराः, काश्चिद्भीरुनार्य इव प्रियवारितरणाः, (१)स्तनगण्डशैलशिखरास्फालनोल्ललत्तरङ्गान्तरतरत्तरुणतामरसरससुरभिसलिलमवगाहमानाश्चिरं चिक्रीडुः ॥ क ॥

अवनिपतिरपि विस्मयविस्मृतनिमेषोन्मेषयनस्ताश्चिरमवलोक्य चिन्तयांचकार ॥ ख ॥

(२)'जातिर्यत्र न तत्र रूपरचना नेत्रोत्सवारम्भिणी
रूपश्रीरपि यत्र तत्र सुलभः श्लाघ्यो न जन्मोदयः।
इत्येकस्थसमस्तसुन्दरगुणप्रद्वेषमभ्यस्यतो
धातस्तात वृथाश्रमस्य भवतः सृष्टिक्रमो दह्यताम् ॥ ५७ ॥

तथाहि—

(३)ग्रीवालम्बितपद्मनाललतिकाः कर्णावतंसीकृत-
प्रत्यग्रोन्मिषतासितोत्पलदलैः संदिग्धनेत्रद्वयाः।
कस्यैता जलदेवता इव कुचप्राग्भारभुग्नोर्मयः
स्नानासक्तपुलिन्दराजवनिताः कुर्वन्ति नोत्कं मनः ॥ ५८ ॥

रकरनिकरवन्निर्मलं जलम्। अन्यत्र किरणनिकर एव निर्मलजलम्। चकोर्यो हि चन्द्रकरान्पिबन्ति। प्रियं वारिणो जलस्य तरणं यासाम्। अन्यत्र वारितो निषिद्धो रणो यकाभिः। ता वारितरणाः, प्रियाणां वारितरणाः प्रियवारितरणाः ॥ ख ॥

(१) स्तनेति—स्तनावेव कुचावेव गण्डशैलौ तयोः शिखरास्फालनेनाग्रभागाहननेनोल्ललन्त उद्गच्छन्तस्तरङ्गा वीचयस्तेषामन्तरेषु तरन्ति तरुणानि नवानि तामरसाणि कमलानि तेषां रसेन मकरन्देन सुरभि सुगन्धि सलिलं जलम्।

(२) जातिरिति—नलः पुलिन्दराजकन्या विलोक्य चिन्तयते। यत्र जातिरुत्कृष्टा जातिर्ब्राह्मणक्षत्रियत्वादिका। अस्ति। तत्र नेत्रयोर्नयनयोरुत्सवो विलोकनानन्दस्तस्यारम्भः प्रारम्भः सोऽस्या अस्तीति तादृशी जातिर्नास्ति। यत्र च रूपश्रीः सौन्दर्यशोभा विद्यते। तत्र श्लाघ्यः प्रशस्यः। जन्मोदय उत्पत्तिः। सुलभो न सुकरो नास्ति। यत्रोत्कृष्टा जातिस्तत्र सुन्दरं रूपं नास्ति। यत्र सुन्दरं रूपं तत्रोत्कृष्टजात्यभात्र इत्याशयः। इत्येकस्था एकव्यक्तिस्थायिनः समस्ताः सर्वे सुन्दरगुणा उत्तमगुणास्तेषां प्रद्वेषं विरोधमभ्यस्यत आचरतः। वृथाश्रमस्य विफलश्रमस्य भवतः। हे धातः। तात। सृष्टिक्रमो रचनाप्रणाली। दह्यतां ज्वलतु ॥ ५७ ॥

(३) ग्रीवेति—ग्रीवासु गलप्रदेशेषु लम्बिताः पद्मानां कमलानां नालान्येव लतिका यासां ताः। कर्णावतंसीकृतानि कर्णाभरणीकृतानि प्रत्यग्राणां नवीनानामुन्मिषितानां विकसितानामसितानां नीलानामुत्पलानां कमलानां दलानि पत्राणि तैः करणभूतैः। संदिग्धं संदेहास्पदीभूतं नेत्रद्वयं चक्षुर्द्वयं यासां ताः। कुचयोः स्तनयोः प्राग्भारेण भुग्ना भिन्ना ऊर्मयस्तरङ्गा याभिस्ताः जलदेवता इव जलाधिष्ठात्र्य इव। एताः स्नानेऽवगाहने निरताः पुलिन्दराजरमण्यः कस्य सचेतसः पुरुषस्य। मनो मानसम्। उत्कं संजातोत्कण्ठं न कुर्वन्ति विदर्भात ॥ ५८ ॥

अपि च—

(१)एतस्याः करिकुम्भसंनिभकुचप्राग्भारपृष्ठे लुठद्-
गुञ्जागर्भगजेन्द्रमौक्तिकसरश्रेणीमनोहारिणि ।
दूरादेत्य तरङ्ग एष पतितो वेगाद्विलीनः कथं
को वान्योऽपि विलीयते न सरसः सीमन्तिनीसंगमे ॥५९॥

इयं तु—

(२)निजप्रियमुखभ्रान्त्या हर्षणाचुम्बदम्बुजम् ।
दष्टाधरा तु भृङ्गेण सीत्कारमकरोन्मृदु ॥ ६० ॥

अनयापि—

(३)अविरतमिदमम्भः स्वेच्छयोच्छालयन्त्या
विकचकमलकान्तोत्तानहस्तद्वयेन ।
परिकलित इवार्घः कामबाणातिथिभ्यः
सलिलमिव वितीर्णं बाल्यलीलासुखाय ॥ ६१ ॥

अस्याश्च—

(४)कर्णमूलविषये मृदु गुञ्जन्पाणिपल्लवहतोऽपि हठेन ।
एष षट्पदयुवा हरिणाक्ष्याश्चुम्बति प्रिय इवास्यसरोजम् ॥६२॥

एतस्या इति ॥ मौक्तिकसरो मुक्तादाम ॥ ५९ ॥

(१) एतस्या इति-लुठन्ती गुञ्जा गर्भे मध्ये यस्यास्तादृशी, गजेन्द्रमौक्तिकानां मुक्तानां सरो दाम तस्य श्रेणी पङ्क्तिस्तया मनोहरे । एतस्याः पुलिन्दराजवनितायाः । करिकुम्भसंनिभौ गजगण्डस्थलसमौ यौ कुचौ तयोः प्राग्भारपृष्ठे उपरितनभागे । एष तरङ्गो दूरादागत्य पतितः । ततश्च विलीनः कथम् । अथवा अन्योऽपि कः सरसः सीमन्तिनीसंगमे स्त्रीप्रसङ्गे सति न विलीयते न विलीनो भवति । अपि तु भवत्येवेति भावः ॥ ५९ ॥

(२) निजेति—इयं पुलिन्दराजवनिता । हर्षेणानान्देन निजप्रियस्य मुखं तस्य भ्रान्त्या निजपतिवदनभ्रमेण । अम्बुजं पद्ममचुम्बत् । ततो भृङ्गेण भ्रमरेण दष्टोऽधरोऽधरोष्ठो यस्याः सा तादृशी सती मृदु कोमलं मन्दमिति यावत् । सीत्कारमकरोत् चकार । अम्बुजमुखोऽस्याः पतिरितिभावः ॥ ६० ॥

(३) अविरतमिति—इदमम्भो जलम् । अविरतं यथा तथा स्वेच्छया । विकचकमलवत् प्रफुल्लपद्मवत् । कान्तं मनोरमम् । उत्तानं हस्तद्वयं भुजद्वयं तेन । उच्छालयन्त्योत्पातयन्त्या अनया वनितयापि कामबाणातिथिभ्यः कामिभ्यः । अर्घ आगतस्वागतप्रयोजनः परिकलित इव कृत इव । बाल्यलीलायाः शैशवविलासस्य सुखाय सलिलं जलं वितीर्णमिव दत्तमिव । यथा मृतेभ्यो जलाञ्जलिर्दीयते तद्वद्बाल्यलीलायैजलाञ्जलिर्दत्ता ॥ ६१ ॥

(४) कर्णेति—एष षट्पदयुवा भ्रमरः । पाणिपल्लवहतोऽपि स्वभुजनिवारितोऽपि । हठेन कर्णमूलविषये कर्णप्रदेशसमीपे । मृदु यथा तथा गुञ्जन् मधुरं शब्दं कुर्वन् । प्रिय इव प्रियतम इव । हरिणाक्ष्या मृगाक्ष्या आस्यसरोजं वदनकमलं चुम्बति चुम्बनं करोति ॥६२॥

इतोऽप्येषा—

(१)भ्रमकरं मकरं मकरन्दिनीं कमलिनीमलिनीमलिनीकृताम् ।
तरलयन्तमवेक्ष्य महाभयादुदतरत्सरितस्त्वरितैः पदैः ॥ ६३ ॥

एताश्च—

(२)मन्दायते दिनमिदं मदनोऽपि सज्जस्तत्किं न गच्छत गृहानिति पद्मिनीभिः।
मीलत्सरोजगतभृङ्गरुतैरिवोक्ताः स्नात्वा शनैरनुसरन्ति तटं तरुण्यः ॥ ६४ ॥

(३)एवमनेकविधविलासासक्तशबरसुन्दरीदर्शनाल्हादपुलकिते विविधवि-तर्ककारिणि पङ्कनिमग्नजरत्करेणुकायमाननिःस्पन्ददृशि तत्कालमुत्पन्नया म-नाङ्मन्मथव्यथया धीरतया च स्पृहया च विचिकित्सया च जिघृक्षया च जिहासया च समकालमाकुलितेहृदये संकीर्णभावभाजि राजनि, राजीवव-नविराजिते तस्मिन्नर्मदाहृदे सलिलक्रीडासुखमतिचिरमनुभूय तीरभुवि से-व्यसितसैकतस्थलीमलंकुर्वाणासु च तासु शबरराजसुन्दरीषु श्रुतशीलश्चि-न्तितवान् ॥ क ॥

(४)'उन्मादि यौवनमिदं शबराङ्गनानां देवोऽप्ययं नववयाः कमनीयकान्तिः ।
रेवातटं चलचकोरमयूरहारि किं स्यान्न वेद्मि जयिनी च मनोभवाज्ञा ।६५।

भ्रमकरमिति ॥ मकरन्दोऽस्त्यस्यां मकरन्दिनीम् । तथा अलिनीभिर्भृङ्गीभिर्मलि-नीकृतां कमलिनीं तरलयन्तं क्षिपन्तं भ्रमंकरमावर्तकरं मकरं यादोविशेषं विलोक्य यदुत्पन्नं महाभयं तस्मात्त्वरितैरुत्तालैः पादक्रमैरसौ शबरसुन्दरी सरित उत्तीर्णा ॥ ६३ ॥

( १ ) भ्रमेति—मकरन्दोऽस्या अस्तीति तां गन्धवतीम् । अलिनीभिर्भ्रमरीभिर्मलि-नीकृतां समाच्छन्नां पद्मिनीं तरलयन्तमास्कन्दन्तं भ्रमकरं जलावर्तकरं मकरं मीनं विलोक्य महाभयात् सरितो नदीतः । त्वरितैः शीघ्रतया निहितैः पदैः । उदतरत् निरगमत । यथा क-स्यांचिन्नायिकायामासक्तं नायकं विलोक्यान्था तस्मात्प्रदेशादपसरति तथा ॥ ६३ ॥

( २ ) मन्दायत इति—इदं वर्तमानं दिनं मन्दायते मन्दीभवति । मदनोऽपि कामो-ऽपि सज्जो बद्धपरिकरः । तत्तस्मात् कारणात् । गृहान् किं न गच्छतेति मीलन्ति संकुचन्ति यानि सरोजाणि तत्र गताः प्राप्ता ये भृङ्गा भ्रमरास्तेषां रुतैः शब्दैः पद्मिनीभिः कमलनीभि-रुक्ता इव तरुण्यः युवत्यो स्नात्वा शनैर्मन्दं मन्दं तटं तीरदेशमनुसरन्ति गच्छन्ति ॥ ६४ ॥

( ३ ) एवमिति—एवमुक्तप्रकारेण अनेकविधेषु नानाविधेषु विलासेषु लीलासु आ-सक्ता निरता याः शबरसुन्दर्यः पुलिन्दवनितास्तासां दर्शनाल्हादेन विलोकनसुखेन पुलकिते रोमाञ्चयुते । पङ्के कर्दमे निमग्नः पतितो यो जरत्करेणुर्वृद्धकरी तद्वन्निःस्पन्दे दृशौ नेत्रे यस्य स तस्मिन् । विचिकित्सा संशयस्तया । सेव्या सेवनार्हा सिता श्वेतवर्णा च या सैकतस्थली सिकताच्छन्ना भूस्ताम् ।

( ४ ) उन्मादीति—शबराङ्गनानां पुलिन्दराजवनितानामिदं यौवनं तारुण्यमुन्मादि उन्मादावस्थाविधायि विद्यते । कमनीया सुन्दरी कान्तिः शोभा यस्य सः । अयं देवोऽपि नैषधोऽपि नवं वयो यस्य स नववया अस्ति । चलाश्चञ्चला ये चकोरा मयूराश्च तैर्हारि म-नोरमम् । रेवातटं रेवातीरम् । अस्ति । तथा मनोभवाज्ञा कामनिदेशश्च जयिनी अवश्यंभा-विनी । इत्यत्र किं स्यादिति नाहं जाने । अत्र सर्वा समुत्कण्ठाविधायिनी सामग्री विद्यते । यथोक्तं "रेवारोधसि वेतसीतरुतले चित्तं समुत्कण्ठते" इति ॥ ६५ ॥

तथाहि—

(१)विकलयति कलाकुशलं, हसति शुचिं, पण्डितं विडम्बयति ।
अधरयति धीरपुरुषं, क्षणेन मकरध्वजो देवः ॥ ६६ ॥

अपि च—

(२)मध्ये त्रिवलीत्रिपथे पीवरकुचचत्वरे च चपलदृशाम् ।
छलयति मदनपिशाचः पुरुषं हि मनागपि स्खलितम् ॥ ६७ ॥

तदस्तु प्रस्तुतरसानुनयेनैव प्रभूणां मतयो निवर्त्यन्ते निषिद्धनिषेवणात्, न प्रतिकूलतया' इत्यवधारयन्नवनिपतिमवादीत् ॥ क ॥

'देव' रमणीयः खल्वयं प्रदेशः ॥ ख ॥

तथाह्यत्र—

(३)आह्लादयन्ति मृदवो मृदितारविन्दनिष्यन्दिमन्दमकरन्दकणान्किरन्तः ।
एते किरातवनितास्तनशैलगण्डसंघट्टजर्जररुचः सरितः समीराः ॥ ६८ ॥

एताश्च—

(४)उपनदि पुलिने पुलिन्दवध्वः स्तनपरिणाहविनिर्जितेभकुम्भाः ।
शिथिलितसलिलार्द्रकेशबन्धाः किमपि मनोभववैभवं वहन्ति ॥ ६९ ॥

---

विकलयतीति ॥ अधरयति विधुरयतीत्यर्थः ॥ ६६ ॥

तदस्त्विति ॥ निषिद्धस्य निषेवणं सेवनमाग्रहस्तस्मात्सकाशात् प्रभुणां मतयः प्रकृतरसानुमत्यैव व्यावर्त्यन्ते, न प्रतिकूलतया हठात् निषिद्धस्यानभिजातसङ्गमादेराग्रहं कुर्वाणः प्रभुः सहायसंपदानुजीविना निवार्यः । परं तदभिमतं प्राक् पुरस्कृत्य दोषं च दर्शयित्वा । सहसा निवार्यमाणो हि पराभवमिव मन्येत ॥ क ॥

---

( १ ) विकलयतीति—मकरध्वजो देवः कामः । क्षणेन तत्कालमेव । कलासु कुशलं दक्षं पुरुषं विकलयति विह्वलीकुरुते । शुचिं शुद्धं हसति । पण्डितं च विडम्बयति । धीरपुरुषं धैर्यधारिणं जनमधरयति तिरस्करोति ॥ ६६ ॥

( २ ) मध्य इति—मदन एव पिशाचः । चपलदृशां चञ्चलाक्षीणां मध्ये त्रिवलीत्रिपथे वलित्रयरूपे त्रिमार्गमध्ये तथा पीवरौ पीनौ कुचावेव चत्वरमार्गः । तत्र मनागपि किञ्चिदपि । स्खलितं पतितं पुरुषं जनं प्रतारयति । लोकेऽपि त्रिपथे चतुष्पथे च मार्गे मध्ये गमनात्पैशाची व्याधिर्भवति ॥ ६७ ॥

( ३ ) आह्लादयन्तीति—एते मृदवः कोमलाः सुखस्पर्शाः सरितो नद्याः समीराः पवनाः सन्ति । कीदृशा एते । मृदितानि यानि कमलानि तेभ्यो निष्यन्दिनः स्रवन्तो मन्दा मकरन्दकणा पुष्परसबिन्दवस्तान् किरन्तः । किरातवनितानां शबरसीमन्तिनीनां स्तनावेव शैलगण्डौ तयोः संघट्टनेनास्फालनेन जर्जरां जीर्णा रुक् कान्तिर्येषां ते तादृशाः॥६८॥

( ४ ) उपनदि नद्यां पुलिने तीरे स्तनपरिणाहेन कुचविशालतया विनिर्जितौ गजकुम्भौ गजगण्डप्रदेशौ यासां ताः । शिथिलितः श्लथीभूतः सलिलेन जलेनार्द्रीभूतः केशबन्धः केशपाशो यासां ताः । एताः पुलिन्दराजवनिताः किमपि लोकोत्तरं मनोभववैभवं वहन्ति बिभ्रति ॥ ६९ ॥

इतश्चावलोकयतु देवः—

(१)सरसिजमकरन्दामोदमत्तालिगीतश्रवणसुखनिमीलच्चक्षुषः किंचिदेते ।
अपि दिवसमशेषं निश्चलाङ्गाः कुरङ्गाः पुलिनभुवि विहाराहारबन्ध्या वसन्ति।७०।

इतोऽपि—

(२)पद्मान्यातपवारणानि नलिनीपत्राणि पर्यङ्किका
दोलान्दोलनदोहदोऽपि च चलद्वीचीचयैः पूर्यते ।
आहारो बिसपल्लवं, पुलिनभूर्लीलाविहारास्पदं
रेवावारिणि राजहंसशिशवस्तिष्ठन्ति धन्याः सुखम् ॥७१॥

इहापि—

(३)चिरविरचितचाटुश्चन्द्ररेखायमाणः प्रथमरसबिसाग्रग्रासलीलार्पणेन ।
इह रमयति हंसीं राजहंसो रिरंसुः पुलकयति च चञ्चूकोटिकंडूयनेन ।७२।

अपि च—

(४)इह चरति चकोरः कोरकं पङ्कजानामिह चलदलिचक्राच्चक्रवाको बिभेति ।
इह रमयति जीवंजीवको जीवितेशामिह वहति विकारं हारि हारीतकोऽपि॥७३॥

सरसिजेति ॥ अपिर्भिन्नक्रमे ततोऽशेषमपि दिवसमित्यर्थः ॥ ७० ॥
पद्मानीति ॥ अत्रातपत्रप्रभृतयो राजधर्मा राजहंसशिशुपक्षे भावनीयाः ॥ ७१ ॥
इह चरतीति ॥ प्रतिष्ठमानभृङ्गवृन्दाच्चक्रवाको बिभेतीति तपस्विनीभ्रान्त्येति शेषः ।
जीवंजीवकः पक्षी जीवितेशां रमयतीति सम्बन्धः ॥ ७३ ॥

(१) सरसिजेति—सरसिजमकरन्दस्य कमलपुष्परसस्यामोदेन गन्धेन मत्ता ये अलयो भ्रमरास्तेषां गीतैर्गानैर्यच्छ्रवणसुखं कर्णानन्दस्तेन निमीलन्ती संकुचन्ती चक्षुषी नेत्रे येषां ते । निश्चलाङ्गाः स्तब्धाः कुरङ्गाः पुलिनभुवि तीरे अशेषमपि दिवसं यावत् । विहाराहारबन्ध्याः आहारविहारशून्या वसन्ति ॥ ७० ॥

(२) पद्मानीति—पद्मानि कमलानि । आतपवारणानि छत्राणि । नलिनीपत्राणि कमलिनीदलानि पर्यङ्किका पल्यङ्किका । चलतां चञ्चलानां वीचीनां तरङ्गाणां चयैः निवहैः । दोलायां हिन्दोलायामान्दोलनस्य दोहदोऽभिलाषापि । पूर्यते पूर्णो भवति । बिसपल्लवं कमलतन्तुकिसलयः । आहारो भोजनम् । पुलिनभूस्तीरभूमिः । लीलया विलासेन विहारास्पदं केलिगृहम् । रेवावरिणि रेवानदीजले । धन्या राजहंसशिशवः सुखं यथा तथा । तिष्ठन्ति सुखमासते ॥ ७१ ॥

(३) चिरेति—चिरं यथा तथा विरचिता विहिता चाटूक्तिर्येन सः । चन्द्ररेखा इव चन्द्रलेखा इवाचरन् । रिरंसुः केलिं कर्तुमिच्छुः । राजहंसः मरालो लोहितचरणः । प्रथमरसेन प्रथमप्रेम्णा । बिसाग्रग्रासस्य कमलतन्तुकवलस्य लीलया विलासेनार्पणं समर्पणं तेन । हंसीं वराम् । इह रमयति क्रीडयति । तथा चञ्चूकोटिभिः कण्डूयनेन घर्षणेन । पुलकयति रोमाञ्चयति ॥ ७२ ॥

(४) इहेति—इह स्थले पङ्कजानां पद्मानां कोरकं मुकुलं चरति व्रजति । इह च चक्रवाकः । चलतां गच्छतामलीनां भ्रमराणां चक्रात् समुदायात् । बिभेति भीतो भवति । जीवंजीवकः पक्षी । इह जीवितेशां प्राणेश्वरीम् । रमयति क्रीडयति । इह हारीतकोऽपि पक्षी । हारि यथा तथा विकारं मनोविक्रियां वहति धारयति ॥ ७३ ॥

एवमसौ निषधेश्वरः श्रुतशीलेन प्रज्ञापूर्वमपररमणीयप्रदेशान्तरदर्शनव्याजेनान्तरितशबरसुन्दरीदिदृक्षाग्रहो गृहान्प्रतिप्रत्यावृत्तः ॥ क ॥

चिन्तितवांश्च—

'कथं नु सा दमयन्ती पुरंदरप्रमुखेषु लोकपालेष्वर्थिषु मया मनुष्यजन्मना लब्धव्येति । निवारयिष्यन्ति;च तां खलु दिव्यसम्बन्धार्थिनो बान्धवाः । तत्किमिह शरणम्' इति विमुक्तदीर्घनिःसहनिःश्वासमसकृच्चिन्तयति राजनि 'राजन्, रामाजनः पद्म इव वारितः सुतरां प्रवर्तते । नालमस्य दीर्घमनुरक्तस्य जायतेऽपरागो नाप्यलीकाभिनिवेशोऽस्य हीयते । किंचान्यदन्यपरिग्रहवर्तिनीनामपि स्त्रीणामन्यत्रापि रागाग्रहो भवति । यतः पश्य वरुणप्रतिग्रहेऽपि प्रतीचीयं मयि रागिणी भविष्यति' इत्येवमिममाश्वासयन्निव भगवान्भानुरुत्तुङ्गतरुशिखराणि करैः पतनभयादिवावलम्बमानः शनैर्गगनतलादवतीर्य प्रतीचीं दिशमयासीत् ॥ ख ॥

अम्बरान्तःप्रसारितकरे रागिणि रक्तया परियुक्ते तु पश्चिमककुभाऽम्भोजिनीजीवितेश्वरे ॥ ग ॥

पूर्वाहं विहितोदयाहमसकृत्तन्मां विहायाधुना
यस्यामस्तमुपैति तां कथमयं रागी जघन्यामगात् ।

---

कथं नु सेति ॥ इन्द्रादिवरेषु सत्सु मयि विषये कीदृगनुरागः, बन्धवोऽप्येनां दिव्यसंबन्धार्थित्वात्तेष्वेव प्रोत्साहयिष्यन्ति, इति चिन्तयति राज्ञि शनैः क्रमेणाम्बरादवतीर्य भगवान्भानुः पश्चिमामगात् । किं कुर्वन् । इमं नृपमित्यमुना प्रकारेणाश्वासयन्निव । तमेव प्रकारमाह—अहो राजंस्त्वया चेतसि नैतच्चिन्तनीयम् । यद्दिव्यसम्बन्धार्थिनो बन्धव एतां निवारयिष्यन्तीति तदेवास्मत्तो विरङ्क्ष्यतीति । यतो रामाजनो वारितो निषिद्धोऽतीव प्रवर्तते । तथाऽस्य स्त्रीजनस्य दीर्घमनुरक्तस्य बहुकालं सानुरागस्य सतोऽलमत्यर्थं न रागापायः स्यात् । तथास्यालीकोऽप्यभिनिवेशो न हीयते । किं पुनर्याद्दक्त्वय्यभिनिवेशः । यथा पद्मोऽब्जं वारितो जलात्प्रवर्तते । तथास्य रक्तस्य सतो नालं काण्डं दीर्घमनु सह परागो मकरन्दः स्यात् । तथाली भृङ्गी कं जलं तयोरभिनिवेशः प्रवेशः सोऽप्यस्य न हीयते न हीनः स्यात् । किं चान्यदुच्यते । स्वीकृतानामपि स्त्रीणां पुरुषान्तरे रागानुबन्धः । यस्मात्संप्रत्यपि पश्य त्वं वरुणस्वीकृतापि पश्चिमाशा ममापि विषये रागिणी भविष्यतीति । पद्मशब्द उभयलिङ्गः ॥ ख ॥

अम्बरान्तरिति ॥ नभोन्तःप्रसारितांशौ रक्तत्वान्विते रक्तया पश्चिमया दिशा युक्ते सत्यम्भोजिनीजीवितेश्वरे रवौ प्राच्या चिन्तितम् ॥ ग ॥

तदाह—पूर्वेति ॥ आद्याहम् । तथासकृद्विहितोदयाहं तस्माद्यस्यामस्तमेति जघन्या च निकृष्टां तामिमां रागी आरक्तः सन् रविर्मां विहाय कथमगात् । पश्चिमां दिशं गते शिथिलांशावंशुमति विषये य ईर्ष्यारोषोऽसूयाकोपस्तस्माद्विषादिनो च सती पूर्वा दिक् तमसान्धकारेण लक्ष्यते । अन्यामपि प्रथमां कृतोदयां विहाय अस्तंकारिणीं निकृष्टां च यदा

इत्येवं श्लथितांशुके दिनपतौ याते दिशं पश्चिमा-
मीर्ष्यारोषविषादिनीव तमसा प्राची ककुब्लदयते ॥ ७४ ॥
(१)विश्लेषाकुलचक्रवाकमिथुनैरुत्पीडमाक्रन्दिते
कारुण्यादिव मीलितासु नलिनीष्वस्तं च मित्रे गते ।
शोकेनेव दिगङ्गनाभिरभितः श्यामायमानैर्मुखै-
र्निःश्वासानलधूमवर्तय इवोद्गीर्णास्तमोराजयः ॥ ७५ ॥

तथाविधे च वेलाव्यतिकरे राज्ञः संध्यावसरमावेदयितुमस्यासन्नविहारि हारि लीलाकिंनरमिथुनमिदमगायत्—

'रक्तेनाक्तं विनिहितमधोवक्त्रमेतत्कपालं
तारामुद्राः किमु कलयता कालकापालिकेन ।
संध्यावध्वाः किमु विलुठिता कौङ्कुमी शुक्तिरेवं
शङ्कां कुर्वञ्जयति जलधावर्धमग्नार्कबिम्बम्' ॥ ७६ ॥

(२)अथ क्रमेण गगनमन्दाकिनीतीरतापसैर्विकीर्यमाणेषु संध्यार्घाञ्जलिजलबिन्दुबुद्बुदेष्विव किंचिदुन्मीलत्सु विरलतरतारास्तवकेषु, वासरविरामवादितवाद्येष्वमरसदनेषु, दह्यमानबहलधूपधूममञ्जरीष्विव वियति विहरन्तीषु तनुतिमिरवल्लरीषु, स्वपरपतत्रिकुलकोलाहलेन वासार्थिश्रान्तागता-

---

रागी विलासी याति, तदा तस्मिञ्शिथिलितवाससि पूर्वा स्त्रीर्ष्याविषादिनी तमसा तमोभावेन प्राप्यते ॥ ७४ ॥

विश्लेषेति ॥ उत्कृष्टा पीडा यत्रेत्युत्पीडमित्याक्रन्दक्रियाविशेषणम् ॥ ७५ ॥

रक्तेनेति ॥ अधस्ताद्वक्त्रं यस्य तदधोवक्त्रमधोमुखम् । तथा रक्तेन रुधिरेणाक्तं लिप्तम् । तत्तथाभूतं कपालं काल एव कापालिकस्तेन तारा नक्षत्राण्येव मुद्रा रुचकाख्यानि हस्तपादादीनामस्थ्याभरणानि कलयता युञ्जानेन किमुपन्यस्तम् । किम्विति वितर्के । किंवा संध्यैव या वधूस्तस्याः सम्बन्धिनी कौङ्कुमी शुक्तिर्विपरीतमधोमुखी लुठिता । एवमित्थं शङ्कामुत्पादयत्समुद्रेऽर्धमग्नार्कबिम्बं जयत्यधुना ॥ ७६ ॥

अथेति ॥ कोशः कणिका शपथविशेषश्च । वयमन्यत्र न यास्याम इत्यर्थे पद्मिनीनां समीपे कोशपानं कुर्वत्सु भृङ्गविलासिषु । क्षामोदरीप्रकृष्टपाणिज्वलितवैलसिक्तवर्तिमुखेषु

---

(१) विश्लेषेति—विश्लेषाकुलानि वियोगव्याकुलानि यानि चक्रवाकमिथुनानि तैः । उत्पीडं प्रकृष्टपीडायुतं यथा तथाक्रन्दिते सति रुदिते सति । नलिनीषु पद्मिनीषु कारुण्यादिव दैन्यादिव मीलितासु संकुचितासु सतीसु । मित्रे सूर्ये सुहृदि चास्तं गतेऽस्तमिते सति दिगङ्गनाभिः शोकेनेव दुःखेनेव । अभितः श्यामायमानैर्मुखैर्वदनैः । निःश्वासानलस्य निःश्वासाग्नेर्धूमस्य वर्त्तय इव तमोराजयोऽन्धकारश्रेणयः । उद्गीर्णा उद्गमिताः ॥ ७५ ॥

(२) अथेति—संध्यासमये योऽर्घाञ्जलिस्तस्य जलबिन्दूनां जलकणानां बुद्बुदेषु । वासार्थिनो निवासस्थानप्रार्थिनः श्रान्ता आगता येऽध्वजाः पान्थास्तैः स्वागतालापमिव स्वागतवार्त्तामिव कुर्वाणासु कुर्वन्तीषु वनराजिसु वनश्रेणीसु ।

च्छगस्वागतालापमिव कुर्वाणासु वनराजिषु, अन्यत्र परिभ्रमणपरिहारार्थं-मिव पद्मिनीनां कोशपानमाचरत्सु चञ्चलचञ्चरीकेषु, रत्युत्सवोत्साहावे-शमहामन्त्राक्षरेष्विव श्रूयमाणेषु महासरित्कूलकुलायनिलीनजलकुक्कुहकुहरितेषु, रामायणव्यतिकरेष्विव मन्दोदरीप्रहस्तप्रबोधितोत्सिक्तदशाननेषु संध्याप्रदीपेषु जाते जरत्कुम्भकारकुक्कुटकुटुम्बपक्षपिच्छविच्छाये मनाक्तमोनुविद्धे संध्यारागे राजा विषादविस्मृतसंध्याह्निकः परिजनानुबन्धात्संध्यां ववन्दे ॥ क ॥

ततश्च क्रमेण—

(१)रजनिमवनिनाथः सांध्यकर्मावसाने हरचरणसरोजद्वन्द्वसेवां विधाय ।
मृदुकलितविपञ्चीपञ्चमप्रायगीतश्रवणसुखविनोदैस्तां स तस्मिन्ननैषीत् ॥७७॥

इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरणसरोजाङ्कायां पञ्चम उच्छ्वासः समाप्तः ॥

---

दीपेषु । रामायणसंपर्केषु तु मन्दोदरीनाम्न्या पत्न्या प्रहस्तेन सेनान्या प्रकर्षेण बोधित उत्सिक्तः उद्रिक्तः सन् दशाननो रावणो येषु तथाभूतेषु । कुम्भकारः कक्कुटः पक्षिविशेषः॥क॥

इति विषमपदप्रकाशमेतं दमयन्त्यास्तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥

इति चण्डपालविरचिते दमयन्तीकथाविवरणे पञ्चम उच्छ्वासः समाप्तः ॥

---

( १ ) रजनीति—सोऽवनिनाथो नलो राजा । सान्ध्यकर्मावसाने सन्ध्याकर्मसमाप्तौ । हरचरणसरोजद्वन्द्वस्य हरचरणारविन्दयुगलस्य सेवां विधाय कृत्वा । मृदुकलिता या विपञ्ची तस्याः पञ्चमप्रायेण पञ्चमरागमयेन गीतेन श्रवणसुखविनोदैः । तां रजनिं रात्रिम् । तस्मिन् गृहे । अनैषीत् = अतिवाहितवान् ॥ ७७ ॥

## षष्ठ उच्छ्वासः ।

अथ द्विजजननिकायकीर्णसंध्याञ्जलिजलैरिव क्षाल्यमाने मनाग्विमलतां व्रजति तिमिरमलिनेऽम्बरे, मालाकारेणेव प्रभातप्रभोद्भेदेनावचीयमानेषु गगनपुष्पवाटिकाकुसुमेष्विव नक्षत्रेषु, निद्रापहारहुङ्कार इवोत्थिते प्रभातभेरीध्वनौ, नरपतेः प्रबोधनार्थमदूरे वैतालिकः पपाठ ॥ क ॥

उदयगिरिगतायां प्राक्प्रभापाण्डुतायामनुसरति निशीथे शृङ्गमस्ताचलस्य ।
जयति किमपि तेजः सांप्रतं व्योममध्ये सलिलमिव विभिन्नं जाह्नवं यामुनं च ।१।

अपिच—

यात्यस्ताचलमन्धकारपटले जातेऽरुणस्योदये
तःपिच्छच्छदपद्मरागमहसोर्मध्यं ककुब्भागयोः ।

---

अथ द्विजेति ॥ अथ निशातिवाहनानन्तरम् । अम्बरं व्योम वस्त्रं च । व्योम्नः स्वभावस्वच्छस्यापि मालिन्यक्षालने भाक्ते । वस्त्रपक्षे तिमिरवन्मलिनम् ॥ क ॥

उदयेति ॥ उदयाद्रिगतप्रथमप्रभापाण्डिम्नि निशीथे चान्धकारेऽस्ताचलशृङ्गं गन्तुं प्रवृत्ते किमपि सर्वोत्कृष्टं तेजो जयति । तत्र कविरुत्प्रेक्षते—सांप्रतमिदानीं नभोमध्ये जाह्नवं गाङ्गं, यामुनं च कालिन्दीयं, सलिलं विभिन्नं संगतमित्यर्थः । व्योम्नि जाह्नव्येवासीत् । यमुनायाः संभेदः सांप्रतमेव । अत एवास्मिन्वृत्ते 'यमुनात्रिविक्रमः' इति नाम कविरवापत् । तथाच—'प्राच्याद्विष्णुपदीहेतोरपूर्वोऽयं त्रिविक्रमः । निर्ममे विमलं व्योम्नि यत्पदं यमुनामपि' । प्रभया पाण्डुता प्रभाकृत उद्योतः प्रकाश इति यावत् । न तु प्रभायाः पाण्डुतेति समासः । उदये प्रभाया आरक्तत्वात् । प्रकाशस्तु इन्द्रनीलादीनामपि पाण्डुरेव । जाह्नवी देवताधिष्ठात्री यस्येति देवतार्थेऽण् । अन्यथा शैषिकश्छः स्यात् ॥ १ ॥

यातीति ॥ अस्तगिरिं गच्छति तमःसमूहे पश्चिमायाः कृष्णायाः, संपन्नारुणोदयायाः पूर्वस्याश्च लोहिताया दिशोर्मध्ये पाण्डु पिञ्जरं श्यामं वा किमपि दुर्लक्षं मनाक् स्तोकोदयं तेजोऽर्थात्प्रकाशात्मकं वो युष्मान्पातु । प्रकाशारुणोदयतमःशेषसमुदायरूपत्वात् पाण्डु पिञ्जरं श्यामं चेत्युक्तम् । तदित्यनेन क्षिप्तं यच्छब्दवाच्यमुपमानमाह—अन्तरित्यादि । दिग्भागयोर्विष्णुविरञ्चौ, प्रकाशात्मनश्च तेजसो लिङ्गोऽत्र उपमानम् । अथवा सत्त्वं पाण्डु तदेव विष्णुः, रजः पिञ्जरं तदेव स्रष्टा, तमः श्यामं तदेव च हरः, एतत्त्रयीमयश्च रविरित्यागमिकसमयः । तदुक्तम्—'सत्त्वं शुभ्रं स हरिर्लोहितपीतं रजः स जगत्कर्ता । कृष्णं तु तमः स भवो भानुश्चैतत्त्रयीमूर्तिः' । अभिधानकारोऽप्याह—'द्वादशात्मा त्रयीतनुः' । एतेन पाण्डु तेज इत्युक्ते सत्त्वस्य, पिञ्जरमित्युक्ते रजसः, श्याममित्युक्ते तमसः प्रतीतिरिति । ततश्च तमोन्वितायाः अपाच्या अरुणान्वितायाश्च प्राच्या मध्ये मनागीपल्लक्ष्यं किमप्यद्भुतवैभवं तदुत्कृष्टं पाण्डु पिञ्जरं श्यामं च तेजोऽर्थात् सत्वरजस्तमस्त्रयीमयं त्रयीतनुलक्षणं वो युष्मानवतु । अमुमेवार्थं सत्वरजस्तमसां संज्ञान्तरेण विष्णुविरञ्चलिङ्गोद्भवलक्षणेन द्रढयन्नाह—अन्तरित्यादि । 'पुरा स्वमाहात्म्यार्थं विवदमानयोर्द्रुहि-

अन्तर्विष्णुविरञ्चयोरिव मनाग्लिङ्गोद्भवभ्रान्तिकृ-
त्तजः पाण्डुरपिञ्जरं च किमपि श्यामं च तद्वोऽवतात् ॥२॥

अनन्तरमुत्तिष्ठतोत्तिष्ठतानयत गजवाजिवेगसरीः संयोजयत शकटानि, वेष्टयत पटकुटीः, मुकुलयत मण्डपिकाः, संवृणुत काण्डपटान्, उन्मूलयत कीलकान्, उद्वहत वेगाद्वहनीयभाण्डम्, भारयत करभकलभान्, उत्क्षिपत द्रोणोत्तकान्, उत्तरत सरितम्, अपसरत पुरतः, कुरुत संचारसहं मार्गम्, इत्यनेकविधप्रयाणाकुललोककोलाहले समुच्छलति, नदत्सु प्रस्थानवादित्रेषु, समुत्थाय नरपतिरावश्यकशौचावसाने नर्मदाम्भोभिषेकपूततनुरनुबन्ध्य सांध्यविधिम्, अधिकृत्य भगवन्तमुदयगिरिशिरःशिखरभाजं भास्करम, इमं श्लोकमपठत् ॥ क ॥

(१)'जयत्यम्भोजिनीबन्धुर्बन्धूकारुणरश्मिकः।
वैद्रुमो वासरारम्भकुम्भः पल्लववानिव' ॥ ३ ॥

अभ्यर्च्य च पञ्चोपचारैः सुरासुरगुरुं गौरीपतिं तत्प्रियस्य भगवतो नारायणस्यापि वाञ्छितार्थसिद्धये स्तुतिमकरोत ॥ ख ॥

(२)'जयत्युदधिनिर्गतस्मरविलोलल्लक्ष्मीलस-
द्विलासरसमन्थरस्फुटकटाक्षलक्षीकृतः।
अमन्दरयमन्दरभ्रमणघृष्टहेमाङ्गदः
सुरारिवधनाटकप्रथमसूत्रधारो हरिः ॥ ४ ॥

(३)जयत्यमलकौस्तुभद्युतिविराजितोरःस्थलः
सहेलहतदानवो नवतमालनीलद्युतिः।

णनारायणयोः शिवेन स्वस्य लिङ्गोद्भवस्योर्ध्वाधोमानविज्ञानं महत्त्वहेतुः एण उक्तः' इत्यागमः ॥ २ ॥

अनन्तरमिति ॥ वेगसरी वेसरी। काण्डपटो गुणलयनी ॥ क ॥

जयत्युदेति ॥ सुरारिवधनाटकस्य प्रथमे प्रस्तावनायां सूत्रधारः ॥ ४ ॥

(१) जयतीति—बन्धूकवत् जपाकुसुमवदरुणा रक्ता रश्मयो यस्य सः। अम्भोजिनीबन्धुः पद्मिनीबन्धुः सूर्यः। वैद्रुमो विद्रुमनिर्मितः। पल्लववान् किसलयसहितः। वासरस्य दिवसस्यारम्भस्य प्रारम्भस्य कुम्भ इव जयति सर्वोत्कर्षेण वर्तते। अत्र जयत्यर्थेन नमस्कार आक्षिप्यते। तं प्रत्यस्मि प्रणत इति सारार्थः ॥ ३ ॥

(२) जयतीति—हरिर्जयति। कीदृशः सः। उदधेः सागरान्निर्गता निःसृता स्मरविलोला मदनचञ्चला या लक्ष्मीस्तस्या विलासरसेन मन्थरं मन्दं स्फुटं च यथा तथा कटाक्षेण नेत्रप्रान्तेन लक्षीकृतो विषयीकृतः। अमन्दो रयो वेगो यस्य तादृशेन मन्दरभ्रमणेन मन्थानभूतमन्दराचलभ्रमणेन घृष्टो हेमाङ्गदः सुवर्णकेयूरो यस्य सः। सुरारीणां दैत्यानां वध एव नाटकं तस्य प्रथमे प्रस्तावे सूत्रधारः ॥ ४ ॥

(३) जयतीति—हरिर्भगवान् विष्णुर्जयति। कीदृशो हरिः। अमलया निर्मलया कौस्तुभस्य मणेर्द्युत्या प्रकाशेन विराजितं शोभितमुरःस्थलं यस्य सः। हेलया सहितं सहेलं यथा तथा हता नाशिता दानवा दैत्या येन सः। नवतमालवन्नीला द्युतिः कान्तिर्यस्य

विनम्रसुरमस्तकच्युतविकासिपुष्पावली-
विकीर्णमधुसीकरस्नपितपादपीठो हरिः ॥ ५ ॥
(१)जयत्युदरनिःसरद्वरसरोजपीठीपठ-
च्चतुर्मुखमुखावलीविहितरम्यसामस्तुतिः ।
अलब्धमहिमावधिर्मधुवधूविलासान्तकृ-
ज्जगत्त्रितयसम्भवो भवभयापहारी हरिः ॥ ६ ॥
(२)जयत्यसुरसुन्दरीनयनवारीसंवर्धित-
प्रतापतरुरुल्लसत्तरुणकेकिकण्ठच्छविः ।
दलत्कनककेतकीकुसुमपत्त्रपीताम्बरः
सुराधिपनमस्कृतः सकललोकनाथो हरिः ॥ ७ ॥
(३)जयत्यखिललोकजिन्नरककालकेतूद्गमो
मदान्धदशकन्धरद्विरददुष्टपञ्चाननः ।
हिरण्यकशिपुप्रियामुखसरोजचन्द्रोदयः
सुरेन्द्ररिपुसिंहिकासुतशिरःकुठारो हरिः ॥ ८ ॥

जयतीति ॥ नरको भौमासुरः ॥ ८ ॥

सः । विनम्राः प्रणता ये सुरास्तेषां मस्तकेभ्यः शिरोभ्यश्च्युता या विकासिपुष्पाणां प्रफुल्लकुसुमानामावली श्रेणिस्तस्याः विकीर्णाः पतिता मधुसीकरा मधुबिन्दवस्तैः स्नपितं पादपीठं यस्य सः ॥ ५ ॥

( १ ) जयतीति—पुनरपि हरिर्जयति । कीदृशोऽयम् । उदरान्निःसरन्निर्गच्छत् यत् वरसरोजं कमलं तस्य पीठी पीठं तत्र पठन् अधीयानो यश्चतुर्मुखो ब्रह्मा तस्य मुखानामाननानामावल्या श्रेण्या विहिता कृता रम्याणां मधुराणां साम्नां स्तुतिः स्तवो येन सः । अलब्धा नाधिगता महिम्नोऽवधिः सीमा येन स निःसीममहिमकः । मधोर्मधुनामकदैत्यस्य वधूनां रमणीनां विलासस्य क्रीडाया अन्तकृत् विनाशकः । जगतां लोकानां त्रितयस्य संभव उत्पत्तिस्थानम् । भवभयस्य संसारभयस्यापहारकः ॥ ६ ॥

( २ ) जयतीति—हरिर्जयति । कीदृगसौ । असुरसुन्दरीणां दैत्याङ्गनानाम् । नयनवारिणाश्रुजलप्रवाहेण संवर्धितो वृद्धिं गतः प्रतापतरुर्यस्य सः । उल्लसन् उल्लासं प्राप्नुवन् तरुणो युवा यः केकी मयूरस्तस्य कण्ठस्य च्छविरिव छविः कान्तिर्यस्य सः । दलद् विकसद् यत् कनककेतकी सुवर्णमयकेतकीवृक्षस्तस्य कुसुमस्य पुष्पस्य पत्त्रं दलं तद्वत् पीतं पीतवर्णमम्बरं वसनं यस्य सः । सुराधिपेण महेन्द्रेण नमस्कृतः प्रणतः । तथा सकलानां सर्वेषां लोकानां जगतां नाथः स्वामी हरिर्जयति ॥ ७ ॥

( ३ ) जयतीति—हरिर्जयति । कीदृशोऽयम् । अखिललोकजिन्निखिलजगज्जेता । नरकस्य भौमासुरस्य कालार्थं मृत्युसूचनार्थं केतूद्गमः केतुनामकतारकोदयः । अर्थात्तन्निहन्ता । मदान्धः प्रमत्तो यो दशकन्धरो दशग्रीवो रावण एव द्विरदो दन्ती तदर्थं दुष्टपञ्चाननो दुष्टसिंहः । अत्र दुष्टपदेन सिंहस्य प्रखरता द्योतिता । हिरण्यकशिपोः प्रियाणां प्रियतमानां मुखान्येव वदनान्येव सरोजाणि कमलानि तदर्थं चन्द्रोदयः । उदिते चन्द्रे कमलानि संकुचन्ति । सुरेन्द्रस्य देवेन्द्रस्य रिपुः शत्रुर्यो हि सिंहिकासुतो राहुस्तस्य शिरसो मस्तकस्य कुठारश्छेत्ता ॥ ८ ॥

(१)जयत्यमरसारथिर्मदनतप्तलक्ष्मीलस-
त्पयोधरयुगस्थलीसरसचन्दनस्थासकः ।
अचिन्त्यगुणविस्तरः सकलकेशिकंसाङ्गना-
कपोलफलकोल्लसत्तिलकभङ्गहारी हरिः ॥ ९ ॥
(२)जयत्यसमसाहसः सकललोकशोकान्तक-
त्सहस्रकरभासुरस्फुरितचारुचक्रायुधः ।
विहङ्गपतिवाहनः कलुषकन्दनिर्मूलनः
समस्तभुवनावलीभवनशिल्पधारी हरिः ॥ १० ॥
(३)जयत्यमलभावनावनतलोककल्पद्रुमः
पुरन्दरपुरःसरत्रिदशवृन्दचूडामणिः ।
अरातिकुलकन्दलीवनविनाशदावानलः
समस्तमुनिमानसप्रवरराजहंसो हरिः' ॥ ११ ॥

एवमभिवन्द्य देवदेवम्, समारुह्य विजयिवारणेन्द्रस्कन्धम्, अग्रतः प्रधावितानेककरितुरगपरिजनः, पुरः पुरोधसा निर्वर्तिते महानदीयागे युगसहस्रपरिवर्तवृत्तान्तसाक्षिणीम्, अनवरततपस्यद्ब्रह्मर्षिप्रतिष्ठितशिवलिङ्गरुद्धरो-

---

जयतीति ॥ अमराणां सारथिर्नेता अग्रणीरिति यावत् ॥ ९ ॥

एवमिति ॥ समुत्तीर्य भगवतीं मेकलकन्याम् । उत्फुल्लेत्यादौ लकारानुप्रासाद्धेतोः केचित् 'अङ्कोल्ल' इति पठन्ति, तच्च प्राकृते । संस्कृते त्वङ्कोठ इति । तथा उल्लङ्घ्य दक्षिणभागस्थितं मतङ्गजानां गजानामभिमतं नर्मदातीरं पुण्यारण्यम्, अग्रतो विविधविन्ध्या-

---

(१) जयतीति—हरिर्जयति । कीदृगसौ । अमराणां देवानां सारथिर्नेता । मदनेन कामेन तप्ता संतप्ता या लक्ष्मीस्तस्याः पयोधरयुगस्थली स्तनप्रदेशस्तस्याः सरसश्चन्दनस्य स्थासकः । यथा चन्दनलिप्तहस्तप्रक्षेपेण भूः शीतला जायते तद्वदत्रापि ज्ञेयम् । अचिन्त्यो विचारातीतो गुणानां विस्तरो विस्तारो यस्य सः । सकलानां सर्वासां केशिनोऽसुरस्य कंसस्य चाङ्गनानां कपोलफलकेषु गण्डपालीषूल्लसन्तो विलसन्तस्तिलकभङ्गास्तिलकरचनास्तेषां निवारकः । अर्थात्तयोर्निहन्तेति भावः ॥ ९ ॥

(२) जयतीति—हरिर्जयति । कीदृगेषः । असममनुपमं साहसं बलं यस्य सः । सकलानां सर्वेषां लोकानां जगतां शोकस्य दुःखस्यान्तकः । सहस्रकरवत् सूर्यवद् भासुरं भासमानं स्फुरितं चञ्चलं चारु मनोरमं चक्रमेवायुधं यस्य सः । विहङ्गपतिर्गरुड एव वाहनो यस्य सः । कलुषं किल्बिषमेव कन्दस्तस्य निर्मूलन उत्पाटकः । समस्तानां सर्वेषां भुवनानां जगतामावली श्रेणि एव भव' गृहं तस्य शिल्पधारी निर्माता ॥ १० ॥

(३) जयतीति—हरिर्जयति । कीदृशं एषः । अमलभावनया निर्मलभावनया अवनता नम्रा ये लोकास्तदर्थं कल्पद्रुमः । पुरन्दरपुरःसरा इन्द्राग्रेसरा ये त्रिदशा देवास्तेषां वृन्दं तस्य चूडामणिः शिरोमणिः । अरातीनां शत्रूणां कुलं समूह एव कन्दलीस्तस्या वनं समूहस्तद्विनाशाय दावानलः काननाग्निः । समस्तानां सर्वेषां मुनीनां मानसे मनसि प्रवरः श्रेष्ठो राजहंसः । हरिर्जयति ॥ ११ ॥

धसम्, अनेकसुरसुन्दरीसेविततीरसंकेतलतामण्डपाम्, अनवरतमज्जद्वन-गजमदामोदसुरभिततरङ्गाम्, अपरगङ्गाम्, अपरसागरराजमहीषीम्, अपर-मार्कण्डेयतपःसिद्धिसखीम्, समुत्तीर्य भगवतीं मेकलकन्याम्, (१)उत्फुल्लप-ल्लविताङ्कोल्लसल्लकीसरलसालसर्जार्जुननिम्बकदम्बजम्बूस्तम्बोदुम्बरखदिरक-रञ्जाञ्जनाशोकसौभाञ्जनकप्रायैस्तरुभिराकीर्णम्, अभिमतं मतङ्गजानाम्, अनु-भूतसारं सारङ्गैः, शिशिरतरं तरङ्गानिलैः, स्वर्गवनसमं समञ्जरीकैर्लताजाल-कैरुलङ्घ्य दक्षिणं नर्मदातीरपुण्यारण्यम्, अग्रतो, गगनवीथिमिव सिंहराशि-राजितामुत्पतङ्गामुत्थितवृश्चिकामाविर्भूतसार्द्ररोहिणीमूलां च, छन्दोजाति-मिव शार्दूलविक्रीडितमनोहरां हारिहरिणीमन्दाक्रान्तामनवरतवसन्ततिल-कोद्भासितामतिविचित्रचम्पकमालां च, सीतामिव बहुकोटरावणवृतामुत्प-न्नकुशलवां च, लङ्कामिव संचरद्द्विगुणपञ्चाननविभीषणां चारुपुष्पकामका-ण्डाडम्बरितमेघनादां च, गीतविद्यामिव ततावनद्धघनसुषिरवंशस्वनमनो-हरामनेकतालभेदां निषादर्षभमध्यमग्रामयुक्तां च, चित्रविद्यामिवानेकक-

टवीमवगाहमान इति सम्बन्धः। कथंभूतां विन्ध्याटवीम्। सिंहराशिर्मृगेन्द्रवृन्दं ज्योति-षोक्तः पञ्चमो राशिश्च। तेन राजिताम्। तथा पतङ्गः शलभः सूर्यश्च। वृश्चिकोऽली अष्ट-मराशिश्च। पुनः किंभूताम्। आविर्भूता सह आर्द्रेण शृङ्गवेरेण, रोहिणी ओषधिविशेषो, मूलो मूलकश्च यस्याम्। पक्षे आर्द्रा-रोहिणी मूलानि ताराः। शार्दूलविक्रीडितेन सिंह-विलसितेन मनोहरा। तथा हारिणीभिश्चारुभिर्हरिणीभिर्मन्दमाक्रान्ताम्। सर्वदा वसन्तै-स्तिलकैश्च तरुविशेषैर्भूषिताम्। तथा अतिविचित्रा चम्पकानां माला श्रेणी यस्याम्। पक्षे शार्दूलविक्रीडितं हरिणी मन्दाक्रान्ता वसन्ततिलका चम्पकमाला च छन्दांसि। तथा बहुभिः कोटरावणैर्वृतां छन्नाम्। कोटराणां वनमिति कृत्वा 'वनगिर्योः संज्ञायाम्—' इति सूत्रेण पूर्वपदस्य दीर्घः। 'वनंपुरगा-' इति सूत्रेण णत्वम्। कुशो दर्भः। लवो लेशः। सीतां तु बहुकोटेन प्राज्यकौटिल्येन रावणेन रक्षसा प्रार्थिताम्। तथा उत्पन्नौ कुशलवौ स्वसुतौ यस्याः। तथा संचरद्भिर्विगुणैर्विरज्जुभिः पञ्चाननैः सिंहैर्विशेषेण भीष-णाम्। तथा चारुपुष्पमर्थात् मनोहरसरोजं कं जलं यस्याम्। अत एवानवसरेऽपि आडम्ब-रितो विस्तृतो मेघनादस्तण्डुलीयको यस्याम्। लङ्का तु द्वौ गुणौ येषां पञ्चानां ते द्विगुणा दशेत्यर्थः। तत्संख्यान्याननानि यस्य स दशमुखो, विभीषणश्च तद्भ्राता संचरन्यस्याम्। पुष्पकं विमानम्। मेघनादो रावणात्मजः। गीतविद्यामिवेति। तता विस्तीर्णा अवनद्धाः श्लिष्टा घनसुषिरा बहुविवरा वंशा वेणवस्तेषां स्वनेन रम्याम्। तालास्तरुविशेषाः। निषादाः शबराः। मध्ये भवो मध्यमः। ग्रामः खेटकम्। पक्षे ततेन तन्त्रीगतेन अवन-द्धेन पौष्करेण च घनेन कांस्यकृतेन सुषिरसंज्ञकवंशस्वनेन च मनोज्ञाम्। यद्यपि 'ततं त-

(१) उत्फुल्लेति। उत्फुल्ला विकसिताः पल्लविताः संजातपल्लवाः येऽङ्कोल्लाः सल्लक्यः सरलाः सालाः सर्जा अर्जुनाः निम्बा कदम्बा नीपा जम्बूस्तम्बाः उदुम्बराः खदिराः करञ्जा अञ्जनाः अशोकाः सौभाञ्जनका वृक्षास्तत्प्रायैस्तरुभिर्व्याप्तम्।

एटकपत्रलतास्थानकविषमामृज्वागतपापसां च, कलियुगशिवशासनस्थिति-मिव महाव्रतिकान्तःपातिभिः कालमुखैर्वानरैः संकुलामनेकधाभिन्नस्रोतसं च, कापालिकखट्वाङ्गयष्टिमिव समुद्रोपकण्ठलग्नाम्, मायामिव शम्बरा-धिष्ठिताम्, मरुभूमिमिव करीरैः केसरिप्रसवैरसंचाराम्, अतिचारुचन्दनैः कृतगोरोचनाविशेषकैरक्षतदूर्वावाहिभिरारब्धमङ्गलाचारैरिव तृणस्थलैरलं-कृताम्, विविधव्याधां विन्ध्याटवीमवगाहमानो मेषवृषमिथुनयुजः सधनुषः सकुम्भकन्यानेकत्र राशीभूतान्गिरिग्रामपारलोकानालोकयन्, 'इयं गगनवी-थीव चित्रशिखण्डिमण्डिता सरित्तीरभूमिः, इयं सरिदिव बहुतरङ्गोपशो-

न्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् । घनं कांस्यकृतं प्रोक्तं शुषिरं वांश्यमेव च इति भरतः । तथाप्यत्रानेकविषयत्वाद्वंशस्वनोपादानमसंदेहार्थमुचितमेव । अनेकतालभेदाश्चञ्चत्पुटादयो यस्याम् । तथा निषादेन स्वरेण मध्यमसंज्ञकग्रामेण युक्ताम् । चित्रविद्यामिवेति । कण्टकैः सूत्रैः पत्रैः पर्णैः, लताभिर्वल्लीभिः, शाखाभिर्वा स्थानकैश्चालवालैर्विषमाम् । तथा ऋज-वोऽकुटिला आगताः स्वापार्थं प्राप्तास्तापसा मुनयो यस्याम् । चित्रविद्यापक्षे कलिका-कण्टक-शाखा-त्रिभङ्गि-संज्ञाभिश्चत्वारः पत्रावयवाः । एतैर्मिलित्वा शिशु-सकल-स्व-स्तिक-वर्धमान-सर्वतोभद्राख्याणि पञ्च पत्राणि निष्पद्यन्ते । तदत्र शाखापर्यायो लता-शब्दः । तथा स्थानकानि पार्श्वागत-ऋजु-ऋज्वागत-द्व्यर्धाक्ष-अर्धऋजु-गमनालीढ-त्वरित-त्रिभङ्गि-संज्ञानि । तैर्विषमाम् । स्थानकशब्देनैव ऋज्वागतं गतार्थमपि व्याप-कत्वात्पृथगुक्तम् । प्रायो हि चित्रे ऋज्वागतमेव लिख्यते । तपसि भवानि तापसानि । मयूरासनोष्ट्रासनादीनि करणानि तापसाख्यानि । तत ऋज्वागते तापसानि यस्याम् । यद्वा ऋज्वागतेन तापं स्यतीति केचित् । ऋज्वागतेन दुःखापहारिणीमित्यर्थः । कलि-युगेति । अच्छ रतिरव्रतिः । महती अव्रतिर्येषां ते महाव्रतिका वृक्षास्तेषामन्तर्मध्ये पत-न्त्यभीक्ष्णं तैः कृष्णमुखैर्मर्कटैश्छन्नाम् । तथा स्फुटितप्रस्रवणाम् । पक्षे महाव्रतिकाः कापा-लिकाः । तदन्तःपातिभिस्तदन्तर्भूतैः कालमुखैर्वा शैवदर्शनविशिष्टैर्नरैराचिताम् । बहुधा भिन्नप्रवाहाम् । स्रोतोऽत्र लक्षणया प्रवाहः । आम्नाय इति यावत् । कृतयुगे ह्येकमेव शि-वशासनमभूत्, कलौ तु बह्वाम्नायमिति भावः । श्लेषचित्रादिषु बवयोरैक्यम् । तथाहि 'मालामुत्पलकन्दलैः प्रविकचैरायोजितां बिभ्रती वक्त्रेणासमदृष्टिपातसुभगेनोद्दीपयन्ती स्म-रम् । काञ्चीदाम नितम्बसङ्गि दधती व्यालम्बिना वाससा मूर्तिः कामरिपोः सितांशुकधरा पायादुमाया जगत्' । अस्यार्थः—'कामरिपोः शिवस्य मूर्तिः पायात् । कीदृशी । विग-तकेशैरुत्क्रान्तपलशिरोदलैरायोजितां मालां बिभ्रती । तथा विषमदृष्टिपातसुभगेन वक्त्रेण स्मरं दहन्ती । तथा नितम्बसङ्गि काञ्चीदामप्रायं व्यालं सर्पं दधती । तथा वाससा वस्त्रेण विना व्यतिरिक्ता । तथा सितांशुकं चन्द्रं धरतीति । पलं मांसम् । कमित्यव्ययं शिरोऽ-र्थम् । उमापक्षे व्यालम्बिना लम्बमानेन । शेषं सुगमम्' । समुद्रस्याम्भोधेरुपकण्ठे कूले लग्नाम् । यष्टिस्तु समुद्रं मुद्रान्वितं यदुपकण्ठं गलसमीपं तत्र लग्ना । मुद्रा भूषणास्थिग्र-न्थिः । शम्बरः श्वापदविशेषो दानवविशेषश्च । शम्बरेण हि विनिर्मिता माया । अत एव शा-

भिता गोष्ठवसतिः, इयं च नक्षत्रमध्यगतापि न विशाखा तरुपङ्क्तिः, इयं पुष्पवत्यपि न दूषितस्पर्शा वीरुत्, इयं संनिहितमधुदानवापि हरिप्रिया वंशजालिः, इयं कृतमातङ्गसङ्गापि न परिहृता द्विजैः सल्लकीसंततिः, इमे च केचित्सशिखण्डिनो महाद्रुपदाः, केऽपि विच्छिन्नकीचकवंशा वृकोदराः, केचित्सपुण्डरीकाढ्याः पाण्डुसंतानकाः, केऽप्युद्धृतभुवो महावराहाः, केऽप्युत्कृष्टसुरभिश्रीद्रुमावलिहरिकराकृष्टपन्नगनेत्राः स्फुरन्मणिभित्तयोऽमन्दरागाः, केऽपि सस्थावर्णा दुर्गाश्रया, श्रूयमाणगजवदनचीत्काराः सगुहाः कैलासकूटायमानाः सेव्याः खल्वमी विन्ध्यास्कन्धसंधिसानवः' इति मन्त्रिसूनुना श्रुतशीलेन सह विहितविदग्धालापः, कयापि वेलया कममप्यध्वानमतिक्र-

म्बरीत्युच्यते । मरुभूमिमिति । न संचारो गतिर्यस्याम् । केसरिणां सिंहानां प्रसवै पोतैः। कीदृग्भिः । करिणमीरयन्ति तैः । पक्षे करीरैस्तरुविशेषैः । तथा केसरिणः किञ्जल्कोपेताः प्रसवाः पुष्पाणि यत्र तथाविधैः । अतिचेति । चन्दनस्तरुस्तद्रसश्च । कृतो गवां रोचनाविक्षेपोऽभिलाषातिशयो यैः । पक्षे गोरोचना गन्धद्रव्यविशेषः । सा चातीव मङ्गल्या तस्या विशेषस्तिलकम् । अक्षतामलूनां दूर्वां वहन्त्यभीक्ष्णम् । पक्षेऽक्षतास्तन्दुलादिः । दूर्वेति समानम् । तथा एकस्मिन्स्थाने समूहीकृतनानानगग्रामप्राकृतजनानवलोकयन् । कीदृशान् । मेषाणां वृषाणां मिथुनानि युञ्जन्ति धारयन्ति । तथा सह धनुषा कोदण्डेन सधनुषः । तथा सकुम्भा मङ्गलार्थं मस्तकन्यस्तकलशाः कुमार्यो येषु । राशिसमूहो ज्योतिषोक्तो मेषादिश्च मेषवृषमिथुनकुम्भकन्याराशिविशेषसंज्ञाः । मन्त्रिसूनुना श्रुतशीलेन सह 'इयं च गगनश्रीव्यादि' 'इमे च केचित्सशिखण्डिनः' इत्यादि च विहितविदग्धालापः प्रयाणविच्छेदमकरोत् । यदुक्तं तद्व्याख्यायते । तद्यथा । चित्राश्चित्रवर्णाः शिखण्डिनो मयूराः । पक्षे चित्रशिखण्डिनः सप्तर्षयः । बहुतरमिति क्रियाविशेषणम् । गोरैदंष्ट्रैः शोभिता । सरित्तु बहुभिस्तरङ्गैरुपशोभिता । गोष्ठं गोकुलम् । नक्षत्रमध्यं गता । न विगतशाखा च । एतेन तरुणामुचता साभोगता चोक्ता । विशाखा हि नक्षत्रमध्यं न गतेति विरोधसूचकोऽपिशब्दः । पुष्पवती कुडमिता रजस्वला च । नदूषितस्पर्शा मृदुत्वात् । रजस्वला त्वस्पृश्येति विरोधः । संनिहितेभ्यो मधुदा क्षौद्रप्रदा । नवा अविच्छाया । हरिः सिंहः । या च हरेर्विष्णोः प्रिया वल्लभा सा कथमासन्नमधुसंज्ञकदैत्येति विरोधः । मातङ्गा गजाः श्वपचाश्च । द्विजाः पक्षिणो विप्राश्च । इमे चेति । महद् द्रुपदं वृक्षस्थानं येषु तथोक्ताः । तथा सह शिखण्डिभिर्मयूरैः अथ च महाद्रुपदाः क्षत्रविशेषाः । द्रुपदतनयश्च शिखण्डी । चित्रशिखण्डिमण्डितेत्यनेन पूर्वमटव्यां मयूरसद्भाव उक्तः । इदानीं विन्ध्यस्कन्धेष्विति न पौनरुक्त्यम् । विच्छिन्नाः पृथग्भूताः कीचकाः सच्छिद्रा वंशाश्च निश्छिद्रा येषु । वृका अरण्यश्वान उदरे मध्ये येषु । वृकोदरो भीमोऽपि । स च विशेषेण छिन्नकीचकाख्यराजान्वयः । पाण्डुः संतानकस्तरुविशेषो येषु । तथा पुण्डरीकैः सितामभोजैरक्षैश्च विभीतकैः सह । पाण्डोः संताना एव संतानकाः सुताः पाण्डवास्ते तु पुण्डरीकाक्षेण विष्णुना सह महान्तो वराहा येषु । तथा उत्कर्षेण हृता विस्तारेण रुद्धा भूर्यैः । महावराहो विष्णुः । स चोत्क्षिप्तपृ-

स्य (१)क्वाप्यपरिमितपतन्निर्झरजलतुषारस्पर्शमञ्जरितपादपपुष्पपरिमलमिलन्मधुकरझङ्कारहारिणि (२)रममाणशबरमिथुनसंमर्दमृदितामन्दमृदुशाद्वले जलस्थलीप्रदेशे श्रान्तसैनिकानुकम्पया प्रयाणविच्छेदमकरोत् ॥ क ॥

तैस्तैश्चिरन्तनवासरव्यापारैरहःशेषसंहितामतिवाह्य तामपि निशामनन्तरमुन्मिषत्पद्मपक्षिपक्षावधूनितपवनैरिवापनीयमानेषु गगनचत्वरचर्चाप्रकरपाण्डुपुष्पपुञ्जकेषु नक्षत्रेषु, स्वविरहोत्पन्नतमःकलङ्ककलुषितानि मनाक्कुङ्कमपङ्कपिञ्जरैः करैः परामृश्य प्रसादयति दिननाथे दिङ्मुखानि, पुनः पूर्वक्रमेण प्रस्थानमकरोत् ॥ ख ॥

एवमपसरन्मार्गान्मार्गान्नीवारीणि वारीणि सहंसनिनदान्नदान् सकरेणु रेणुस्थलमाच्छादितदिशि खराणि शिखराणि लङ्घयन् सुनीरागान् गिरिगहनग्रामाँस्तपस्विनश्च मानयन्नेकदा नातिदूर इवोत्ककादम्बकदम्बचुम्ब्यमानाम्बुजराजिरजोरञ्जिताम्भसि सरित्तीरे तरुतलोपविष्टमेकमध्वश्रान्तमध्वनीनमिदं चारुश्लोकयुगलमतिमधुरगीततरङ्गरङ्गिताक्षरं गायन्तमद्राक्षीत् ॥ ग ॥

श्लोकः। अमन्दो रागो येभ्यस्तेऽमन्दरागाः। तथा उत्कृष्टा मनोज्ञाः सुरभयश्चम्पकाः श्रीद्रुमाश्च पिप्पलास्तेषामावलिस्तत्र हरयः कपयस्तैराकृष्टानि पन्नगनेत्राणि येषु। इत्यमन्दरागत्वे हेतुः। पक्षे मन्दराख्योऽगोऽद्रिः। तदोत्कृष्टोद्धृता सुरभिः श्रीर्लक्ष्मीद्रुमः पारिजातश्च यैः। मन्दरेण हि सुरभिप्रभृतीन्यम्भोधेरुद्धृतानि। सुरभिर्धेनुः। इह तु प्रस्तावात्कामधेनुः। यद्विश्वप्रकाशः—'सुरभिश्चम्पके स्वर्णजातीफलवसन्तयोः। संधौ पले सौरभेय्याम्' इति। तथा बलेर्दैत्यस्य हरेर्विष्णोश्च करैराकृष्टं भ्रामितं पन्नगो वासुकिलक्षणं नेत्रं मन्थानमाकर्षणरज्जुर्यत्र। कैलासकूटा इवाचरन्तः। स्थाणुः स्थिरपदार्थः शिवश्च। दुर्गा विन्ध्यवासिनी देवी गौरी च। दुर्गं आश्रयो येषामिति वा। तथा आकर्ण्यमाना गजानां वदनचीत्कारा बृंहितानि येषु। कैलासे च। गजवदनो हेरम्बः। गुहा पाषाणसंधिः। गुहः कार्तिकेयः॥ क॥

एवमिति॥ मार्गादीनां लङ्घनादिकं कुर्वन्। अध्वानमलंगामी इत्यध्वनीनस्तं चाटुश्लोकयुगं गायन्तमद्राक्षीत्। अपसरत्सैन्यभयान्निवर्तमानं मार्गं मृगसमूहो येभ्यस्तांस्तथोक्तान्। नीवारोऽस्त्येष्विति। सह हंसनिनदैः। नदो जलाधरः। सह करेणुभिर्गजैः। आच्छादिता दिशो यैस्तान्याच्छादितदिशि। खराणि तीक्ष्णानि। सुष्ठु नीरं जलमगाश्च तरवो येष्विति। पक्षे सुष्ठु निर्गतरागान्। मानयन्निति मानिरुपभोगार्थः पूजार्थश्च। उपभोगे यथा 'मानयिष्यन्ति सिद्धाः, सोत्कण्ठानि प्रियसहचरीसंभ्रमालिङ्गितानि' ॥ ग ॥

(१) क्वापीति—अपरिमितं यथा तथा परिपतन्ति स्रवन्ति निर्झरजलानि तेषां तुषाराणां स्पर्शेन मञ्जरिता संजातमञ्जरीकाः पादपा वृक्षास्तेषां पुष्पाणां कुसुमानां परिमलेषु गन्धेषु मिलन्तो मधुकरा भृङ्गास्तेषां झङ्कारैः कलध्वनिभिर्हारिणि मनोरमे।

(२) रममाणेति—रममाणा याः शबरसुन्दर्यस्तासां मिथुनं द्वन्द्वं तेषां संमर्देन मृदिता अमन्दा मृदवः शाद्वलाः सस्यानि यस्मिन् स तस्मिन्।

तव सुहृदुपभुक्तश्रीफलः कामकेलिं
जनयति वनितानां कुङ्कुमालोहितानाम् ।
श्रयति स च समूहो मेखलाभूषितः सन्
जनयति वनितानां कुंकुमालोऽहितानाम् ॥ १२ ॥

अपि च—

त्वत्तो भयेन नृप पश्य जनो वनेषु कान्त्या जितस्मर तिरोहितवानरीणाम् ।
शाखामृगश्चपल एष गिरेरुपत्यकां त्याजितः स्मरति रोहितवानरीणाम् ॥१३॥

'अहो नु खल्वयमनल्पशास्त्रीयसंस्कारामृतसंपर्कपल्लवितप्रज्ञाङ्कुरः कोऽपि कुशलः काव्यवक्रोक्तिषु पथिकयुवा योग्यः सम्भाषणस्य' इत्यवधारयति राजनि ससंभ्रममुत्थाय स्थित्वा च पुरः स पान्थः सप्रणाममिमं श्लोकमपाठीत् ॥ क ॥

'वेधा वेदनयाश्लिष्टो गोविन्दश्च गदाधरः ।
शंभुः शूली विषादी च देव केनोपमीयसे' ॥ १४ ॥

राजा तु तदाकर्ण्य क्षणमाग्रहोपरोधविस्मयहर्षरसैः समकालमाप्लावितमनाः, प्रथममुत्फुल्लया दृशा, ततो मुग्धस्मिताघ्येंण, तदनु सर्वाङ्गीण-

तवेति ॥ तव सम्बन्धी सुहृन्मित्रजनो भुक्तलक्ष्मीफलः कुङ्कुमेन आ ईषल्लोहितानां वनितानां जनितात्यर्थरागाणां योषितां मन्मथलीलां जनयति । 'वनिता जनितात्यर्थरागयोषिति' इति विश्वप्रकाशः । तथा अहितानां समूहो मेखलाभुवि गिरिमध्यभुवि उषितः कुमालः कुत्सितस्रक् सन् वैरत्यागात्सज्जनतायाः ब्रह्मचर्यादियोगाद्यतितायाः बहिपत्रवसनादिसम्बन्धाद्वनितायाः शबरत्वस्य कुं भूमिकां श्रयति । स चेति चकरात् सुहृदहितसमूहयोरन्योन्यमयमकितपादस्थितविशेषणाभ्यां शब्दश्लेषद्वारेण सम्बन्धः । तद्यथा, मेखलया कटिपट्टिकया भूषितः सुहृत् अहितसमूहोऽपि अनुभुक्तबिल्वः । अत्र प्रथमतृतीयपादौ विशेषणगतश्लेषेणालंकृतौ द्वितीयचतुर्थौ तु संपूर्णयमकेन ॥ १२ ॥

त्वत्त इति ॥ नृपेति संबोधनम् । कान्त्या सौन्दर्येण जितस्मरेति तद्विशेषणम् । पश्येत्याभिमुख्यकरणे । अरीणां जनस्त्वद्भयेन वनेषु तिरोहितवान् । जितस्मरेत्यनेन 'स्मरोऽपि किल त्वया जित इति तिरोहितोऽभूत्' इति प्रतीयते स्मृतिगोचर एव न तु दृश्यते इत्यन्वर्थात् । तथा एष प्रत्यक्षवर्ती शाखामृगो वानरश्चपलो लोलः । अनेनैव वनवासिना रिपुजनेन गिरेरुपत्यकामधोभूमिकां त्याजितो रोहितवानरीणां मर्कटीनां स्मरति । वानरीणामिति 'अधीगर्थ—' इति सूत्रेण कर्मणि षष्ठी ॥ १३ ॥

वेधा इति ॥ वेदनया पीडया आश्लिष्टः सम्बद्धः । गदेन रोगेण अधरो विधुरः । शूलं रुग्विशेषोऽस्य । अत एव विषादान्वितः । तस्मादेव केनोपमीयसे त्वमिति बाह्योऽर्थः । तत्त्वतस्तु वेदानां नयेन मतेनाश्लिष्टः । गदा कौमोदकी । अथवा गदो भ्राता सोऽधरोऽनुजो यस्य । शूलमायुधम् । विषमत्तीति विषादी नीलकण्ठत्वात् ॥ १४ ॥

राजा त्विति ॥ मृणालवलयानामक्षसूत्रम् , उत्कूजनस्य ब्रह्मघोषोद्गारः, राजहंसानां

भूषणप्रदानेन, तमभ्यर्च्य 'पान्थ, कथय केयमुत्तुङ्गकल्लोलदोलाधिरूढानुच्चचञ्चूत्क्षिप्तमृदुमृणालवलयान्कूजतः कलहंसानवसूत्रिणः प्रवर्त्तितब्रह्मयज्ञोद्गारमुखरमुखांस्तीरतापसानिव दिवमारोपयितुमुद्वहन्ती सरित्, तरुणतरुतलमलंकुर्वाणः प्रसन्नसरस्वतीकः कश्च भवान्' इति सप्रणयमपृच्छत् ॥ क ॥

सोऽपि 'सभ्रमरया कूलकीचकवेणुलतया सदृशी नावातरणयोग्या किमियमप्रसिद्धा महानदी देवस्य' इत्यभिधाय कथयितुमारब्धवान् ॥ ख ॥

(१)'भानोः सुता संवरणस्य भार्या तापी सरित्सेयमघस्य हन्त्री।
यस्याः कुरुः सूनुरभूत्स यस्य नाम्ना कुरुक्षेत्रमुदाहरन्ति ॥ १५ ॥

(२)एतस्याः सलिलावगाहसमये कुर्वन्ति नित्यं नृणां
नीरन्ध्रोन्नतकर्कशस्तनतटीसंघट्टपिष्टोर्मयः।
भ्राम्यद्भृङ्गनिभालकैः क्षणमिव व्यालोलनेत्रैर्मुखै-
रुत्फुल्लोत्पलगर्भपङ्कजवनभ्रान्तिं महाराष्ट्रिकाः ॥ १६ ॥

अपिच—

(३)यद्येतस्याः सकृदपि मरुन्नर्तिताम्भोजराजि-
प्रेङ्खत्पत्रव्यजनविधुतं वारि नीहारहारि।

तापसा उपमानम्। ब्रह्मयज्ञो वेदाध्ययनम् ॥ क ॥

सोऽपीति ॥ किमियं सरिद्देवस्य न विदिता, यासौ नावा वेडया तरणयोग्या। शब्दायमानकीचकवंशवल्ल्या। सभ्रमरया सभृङ्गया। सदृशी। वंशवल्ल्यपि अवाते वाताभावे रणस्य शब्दस्य योग्या न भवति। सरिदपि सभ्रमः सावर्तो रयो जवो यस्या इति सभ्रमरया। ॥ ख ॥

भानोरिति ॥ संवरणः क्षत्रियविशेषः ॥ १५ ॥

एतस्या इति ॥ उत्फुल्लोत्पलानि गर्भे मध्ये यस्य पङ्कजवनस्य। महाराष्ट्रिकाः स्त्रियः ॥ १६ ॥

(१) भानोरिति—भानोः सूर्यस्य सुता पुत्री। संवरणस्य क्षत्रियविशेषस्य भार्या पत्नी। सेयमघस्य पापस्य हन्त्री विनाशयित्री। तापी यमुना "तापी तु यमुना यमी" इति त्रिकाण्डशेषः। नदी। यस्याः सरितः स कुरुः कुरुनामा सूनुरभूद् बभूव। यस्य कुरोर्नाम्ना कुरुक्षेत्रं कुरुक्षेत्रनामकं तीर्थविशेषं धर्मक्षेत्रमुदाहरन्ति ब्रुवते ॥ १५ ॥

(२) एतस्या इति—नीरन्ध्रा सान्द्रोन्नता उच्छूना कर्कशा कठिना स्तनतटी कुचप्रदेशस्तस्याः संघट्टेन संमर्देन पिष्टा ऊर्मयो वीचयो यामिस्ताः। तादृश्यो महाराष्ट्रिकाः स्त्रियः। एतस्याः सरितः सलिलावगाहसमये स्नानकाले। भ्राम्यन्तश्चलन्तो भृङ्गास्तेषां निभा समा अलकाः केशा येषां तैः। व्यालोलानि चञ्चलानि नेत्राणि नयनानि येषां तैः। मुखैः। उत्फुल्लानि विकसितानि उत्पलानि कमलानि गर्भे मध्ये यस्य तादृशस्य पङ्कजवनस्य भ्रान्तिं भ्रमं नित्यं नृणां नराणां क्षणं कुर्वन्तीव विदधतीव ॥ १६ ॥

(३) यदीति—यदि नाकिलोकः स्वर्गिलोकः। मरुता वायुना नर्तिता याम्भोजराजयः कमलश्रेणयस्तासां प्रेङ्खन्ति चलन्ति पत्राण्येव दलान्येव व्यजनानि तैर्विधुतं कम्पितम्। ना-

रोधोभाजां पिबति कुसुमैर्वासितं पादपानां
पीयूषाय स्पृहयति ततः किं कचिन्नाकिलोकः ॥ १७ ॥

मामपि पुष्कराक्षनामानं वार्तिकमवगच्छतु देवः ॥ क ॥

तथाहि—

(१)स्थित्वा त्वदागमनमार्गमुखे गवाक्षे
वार्ताविशेषमधिगन्तुमिहायताक्ष्या ।
संप्रेषितो निषधनाथ तयास्मि यस्याः
क्रीडागिरिस्त्वमसि मुग्धमनोमृगस्य ॥ १८ ॥

पश्यति च श्वस्तनेऽहनि मार्गश्रमक्लान्तमितो नातिदूर (२)इवोत्तुङ्गसरलसालसर्जार्जुननिचुलनिचयान्तरचलच्चटुलचकोरमयूरहारीतहंसकुलकोलाहलिनि पयोष्णीपुलिनपरिसरे स्थितं तया प्रहितमाप्तं क्रीडाकिंनरमिथुनम् ॥ख॥

'इयं च वाच्यतां तया स्वहस्तकिसलयलिखिताक्षरगर्भा भूर्जपत्त्रिका' इत्यभिधाय पुरोऽस्य लेखपत्त्रिकां व्यसृजत् ॥ ग ॥

राजापि पार्श्वपरिजनेनोत्क्षिप्यार्पितां तामतिबहलपुलकाङ्कुरकण्टकितप्रकोष्ठकाण्डेन पाणिना स्वयमुन्मुच्य सादरमवाचयत् ॥ घ ॥

(३)'नलोऽपि मां प्रत्यनलोऽसि,यत्तद्भवादृशां नैषध नैष धर्मः ।

---

मामिति ॥ वार्तायां नियुक्तो वार्त्तिकः ॥ ग ॥

स्थित्वेति ॥ गवाक्षे स्थित्वा तया आयताक्ष्या दीर्घदृशा वार्तान्तरं ज्ञातुमिह प्रेषितोऽहम् । यस्या मुग्धमनोमृगस्य त्वं क्रीडागिरिः । मृगो हि गिरौ मनस्त्वयि रमते ॥१८॥

नल इति ॥ नैषध इत्यभिजनान्तामन्त्रणेन कुलीनत्वोल्लिङ्गनम् । मानसमुद्रेत्यनेन च सबलानामेव पराजयो नाबलानाम् । मां प्रति त्वं नलाख्योऽपि सन्ननलो वह्निरुत्कण्ठाजनकत्वेन संतापक इत्यर्थः । न नलोऽनल इति विरोधः । परिहारस्तु प्रागेव व्याख्यातः । न चष भवादृशां धर्मो यस्मादहमबला तस्मात्त्वाबलानां दुर्बलानां। मानसं चेतो ग्रहीतुं न

---

हारेण हारि हिममनोरमम् । रोधोभाजां तटसेविनाम् । पादपानां तरूणां कुसुमैः पुष्पैर्वासितं सुगन्धितम् । एतस्यास्तापीसरितः । वारि जलम् । सकृदेकवारमपि पिबति । ततः क्वचित् पीयूषायामृतपानाय स्पृहयति वाञ्छति किम् । अपि तु पीयूषमपि नेच्छति ॥ १७ ॥

(१) स्थित्वेति—हे निषधनाथ नल । तयायताक्ष्या दमयन्त्या । त्वदागमनस्य मार्गो वर्त्म तन्मुखे गवाक्षे जालमार्गे स्थित्वा वार्ताविशेषं वृत्तान्तमधिगन्तुं प्राप्तुम् । इह सम्प्रेषितोऽस्मि प्रहितोऽस्मि । यस्या दमयन्त्याः । मुग्धमनोमृगस्य त्वं क्रीडागिरिः केलिपर्वतोऽसि ॥ १८ ॥

(२) उत्तुङ्गेति—उत्तुङ्गा उन्नताः सरलाः सालाः सर्जा अर्जुना निचुलाश्चेति द्वन्द्वः । तेषां निचयान्तरेषु समुदायमध्येषु चलन्तो गच्छन्तश्चटुलाश्चञ्चलाश्चकोरा मयूरा हारीता हंसाश्चेति द्वन्द्वः । तेषां कुलैर्निवहैः कोलाहलिनि कलकलयुक्ते ।

(३) नलेति—यत् यस्मात्कारणात् । नलोऽपि मां प्रति । अनलोऽसि नलभिन्नोऽसि । नायकत्वादग्निरसि । तत्तस्मात् कारणात् । हे नैषध नल भवादृशां महता ।

तथाबलानां बलवद् ग्रहीतुं न मानसं मानसमुद्रयुक्तम् ॥ १९ ॥

अपि च—

(१)निपतति किल दुर्बलेषु दैवं तदवितथं ननु येन कारणेन ।
बलवति न यथा तथाबलानां प्रभवति कृष्टशरासनो मनोभूः ॥२०॥

अपि च—

(२)कदा किल भविष्यन्ति कुण्डिनोद्यानभूमयः ।
उत्फुल्लस्थलपद्माभभवच्चरणभूषिताः ॥ २१ ॥'

(३)इति लेखलिखितप्रणयसुभाषितामृतरसप्लवेनाप्लावितहृदयः,'विधे, विधेहि मे पत्रिण इव पत्रयुगलमुड्डीय येन तां पश्यामि' इति चिन्तयन्नरपतिः पुरतः स्थितं तं प्रियावार्तिकमाश्लिष्यन्निवोच्चरोमाञ्चनिचयेन, पिबन्निवाभिलाषतृषितया दृशा, स्नपयन्निव मधुरस्मितामृतरसेन, पुनः पुनः सादरमभाषत ॥ क ॥

'पुष्कराक्ष, सा सर्वथा विजयते राजपुत्री । यस्याः प्रसन्नमुदारसत्कान्तिश्लिष्टं सुकुमारमनेकालंकारभाजनं वयो वचनं च, सप्रश्रयः प्रगल्भो विवेकवान्विदग्धबुद्धिर्भवद्विधः परिजनश्च ॥ ख ॥

तत्कथय 'कथनीयकीर्तिः क्वास्ते कथमास्ते कं विनोदमनुतिष्ठति केन व्यापारेण परिणामयति वासरं वाऽसौ भवत्स्वामिसुता' इत्येवमुक्तः स पुनः पल्लवयन्ननुरागकन्दलं नलमलपत् ॥ ग ॥

---

युक्तम् । बलवदिति क्रियाविशेषणं हठादित्यर्थेऽव्ययम् ॥ १९ ॥

निपततीति ॥ अबलाः स्त्रियोऽशक्ताश्च ॥ २० ॥

पुष्करेति ॥प्रसन्नं निर्मलम् । उदारं रम्यम् । सत्कान्ति तेजस्वि । श्लिष्टं सुघटितसर्वावयवम् । सुकुमारं मृदु । अनेकालंकारभाजनं बहुभूषणपात्रम् । वयःशब्देन तदाधारभूतं शरीरमुच्यते । पक्षे प्रसन्नं झटित्यर्थप्रतीतिकृत् । महार्थमुदारम् । औज्ज्वल्यं कान्तिः । मसृणत्वं श्लेषः । अजरठं सुकमारम् । अनुप्रासोपमादयोऽलंकाराः ॥ ख ॥

---

एष धर्मो नास्ते । तथाबलानां बलशून्यानां स्त्रीणां मान एव समुद्रस्तेन युक्तम् । मानसं मनो बलवत् हठात् ग्रहीतुं स्वीकर्तुं न युक्तम् ॥ १९ ॥

(१) निपततीति—किल दुर्बलेषु बलहीनेषु दैवं निपतति पतति । तदवितथमसत्यम् । ननु नियतम् । येन कारणेन कृष्टं शरासनं धनुर्येन स तादृशो मनोभूः कामो यथा येन प्रकारेण बलवति बलयुक्ते न प्रभवति । तथाबलानां स्त्रीणामशक्तानां च कृष्टशरासनो भवति ॥ २० ॥

(२) कदेति—कुण्डिनस्योद्यानभूमय आरामभुवः । उत्फुल्लानि विकसितानि स्थलपद्मानि स्थलोत्पन्नकमलानि तेषामाभा इवाभा ययोस्ताभ्यां भवच्चरणाभ्यां भूषिता अलङ्कृताः।कदा किल भविष्यन्ति ॥ २१ ॥

(३) इतीति—इति लेखे लिखितं प्रणयसुभाषितमेवामृतरसप्लवस्तेनाप्लावितं हृदयं यस्य सः ।

(१)'त्वद्देशागतवायसाय ददती दध्योदनं पिण्डितं
त्वन्नाम्नः सदृशे दृशं निदधती वन्येऽपि मुग्धा नले।
त्वत्संदेशकथार्थिनी मृगयते ताम्राजहंसान्पुनः
क्रीडोद्यानतरङ्गिणीतरुतलच्छायासु वापीषु च ॥२२॥

अपि च। सांप्रतं तया—

(२)त्वद्देशागतमारुतेन मृदुना संजातरोमाञ्चया
त्वद्रूपाञ्चितचारुचित्रफलके निर्वापयन्त्या दृशम्।
त्वन्नामामृतसिक्तकर्णपुटया त्वन्मार्गवातायने
नीचैः पञ्चमगीतिगर्भितगिरा नक्तंदिनं स्थीयते ॥२३॥'

एवमनुगुणमनुरागस्य, सदृशं शृङ्गारस्य, सहोदरमादरस्य, 'प्रियं प्रेमप्रपञ्चस्य, प्रोत्साहनमनङ्गस्य, अनुकूलमुत्कण्ठायाः, समुचितमभिनिवेशस्य, कौतुकजननं जल्पति पुष्कराक्षे, श्रवणकुतूहलिनि विस्मृतान्यव्यापारे तन्मयतामिवानुभवति भूभुजि, जरठीभवत्सु पूर्वाह्णवेलालवेषु, गगनमध्यासन्नवर्त्तिनि व्रजति तीव्रतां ब्रध्नमण्डले, स्खलयति पथि पथिकानसह्योर्मिणि घर्मजाले, जलाशयाननुसरत्सु पिपासाकूततरलिततारकेषु श्वासिषु श्वापदेषु, पङ्किलकूलकर्दमविमर्दोद्यतेषु सरित्परिसरवनविहारिकरिवराहमहिषमण्डलेषु, विटपिकोटरकुटीरनीडनिलयनिलीयमानेषु संपुटितपक्षेषु पक्षिषु, कूलकुलायकोणकूणितकोकूयमानकुक्कुटेषु गिरिसरित्सुरङ्गाङ्गणेषु,(३)रङ्गत्कुरङ्ग-

त्वद्देशेति ॥ तव नामापि दुर्लभं ततोऽस्य सदृशे समुचिते। 'नाम्ना त्वत्सदृशे' इत्याद्यः पाठः। स तु स्पष्ट एवः ॥ २२ ॥

त्वद्देशागतेति ॥ नीचैरिति निभृतम्। प्रच्छन्नरागत्वात् ॥ २३ ॥

एवमिति ॥ एवं ब्रध्नमण्डलादिष्वीदृशेषु सत्सु प्रस्तावपाठकः पपाठ। पिपासाया

(१) त्वदिति—त्वद्देशादागतो वायसः काकस्तस्मै पिण्डितं पिण्डाकारं दधिमिश्रितमोदनमन्नं ददती वितरन्ती सती मुग्धा वराकी त्वन्नाम्नोऽभिधेयस्य सदृशे समाने वन्ये वनजाते नलेऽपि तृणेऽपि दृशं दृष्टिं निदधती सती पुनः। त्वत्संदेशकथार्थिनी सती सा दमयन्ती क्रीडोद्याने आरामे या तरङ्गिणी सरित् तत्र यानि तरुतलानि वृक्षाधोदेशास्तेषां छायासु वापीषु दीर्घिकासु च ताम्राजहंसान् पूर्वोक्तान्संदेशहारकान् हंसान् पुनर्मृगयतेऽन्विष्यति ॥ २२ ॥

(२) त्वदिति—मृदुना कोमलेन त्वद्देशादागतेनायातेन पवनेन। संजातो रोमाञ्चो यस्यास्तयोत्पन्नपुलकया त्वद्रूपेण सौन्दर्येणाञ्चितं युतं चित्रफलकं तस्मिन् दृशं दृष्टिं निर्वापयन्त्या त्वन्नामामृतेन सिक्तं कर्णपुटं श्रोत्रपुटं यया तया। नीचैर्निभृतम्। पञ्चमगीतिः पञ्चमरागो गर्भिता मध्ये स्थिता यस्यां तादृशी गीर्वाणी तया त्वन्मार्गं तव वर्त्मनि यो वातायनो गवाक्षस्तत्र नक्तंदिनमहर्निशं दमयन्त्या स्थीयते ॥ २३ ॥

(३) रङ्गदिति—रङ्गद्भिश्चलद्भिः कुरङ्गैर्मृगैश्चर्वितो भक्षितः। खर्वो ह्रस्वो (नव इतिभावः) दूर्वानलो घासस्तैर्नीलं नीलवर्णं निम्नं शाद्वलं हरिततृणमयं स्थलं च तत्र स्थितयेऽवस्थानाय।

चर्वितखर्वदूर्वानलनीलनिम्नशाद्वलस्थलस्थितये हिण्डमानासु कारण्डवशिखण्डिमण्डलीषु, शिशिरनिवासवाञ्छया कूजत्सु करञ्जनिकुञ्जपुञ्जितकपिञ्जलकपोतपोतकेषु, वहति (१)मनाङ्म्लानकोमलकुसुमकोशकोष्णामन्दमकरन्दविन्दूद्गारिणि तापीतीरतरङ्गस्पर्शसेव्ये मध्याह्नमरुति, श्रमवशविलोलमीलन्नयननीलोत्पलासु बहलतरुतलच्छायामाश्रयन्तीषु सीदत्सैनिकनितम्बिनीषु प्रस्तावपाठकः पपाठ ॥ क ॥

(२)'विचित्राः पत्त्रालीर्दलयति गलत्स्वेदसलिलै-
रमन्दं मृद्नाति प्रमदकरिकुम्भस्तनतटीः।
प्रबन्धेनाक्रामञ्जघनजङ्घोरुयुगलं
श्रमः सेनाङ्गेषु प्रसरति शनैः कामुक इव ॥ २४ ॥

अपि च—

(३)कूजत्क्रौञ्चं चटुलकुररद्वन्द्वमुन्नादिहंसं
क्रीडत्क्रोडं निपतितलतापुष्पकिञ्जल्कहारि।

---

आकूतेनाभिप्रायेण तरलिता तारा कनीनिका यैः। श्वसान्वितश्वापदैः। गिरिसरितां तरङ्गाः संधयस्तदङ्गणेषु ॥ क ॥

विचित्रा इति ॥ अनेकविधाः पत्त्रालीर्वाहनश्रेणीर्विलेपनपत्त्रवल्लीश्च दलयति। तथा मत्तकरिकुम्भानेव स्तनतटीरमन्दं खेदयति। प्रबन्धेन सातत्येन प्रकृष्टबन्धनेन च। करणविशेषेण। प्रयाणारूढत्वात्कंदर्पभावाच्च। जघनं च जङ्घे चोरुयुगलं च प्राण्यङ्गत्वात्समाहारः। ततः कर्मधारयः। तदाक्रमन्कामीव श्रमः सेनाया अङ्गेषु हस्त्यश्वादिषु प्रसरति॥ २४॥

कूजदिति ॥ क्रौञ्चकूजनादीनि विशेषणानि रोधसो रम्यताहेतुत्वात्सैन्यप्रयाणस्खल

---

(१) मनागिति—मनागल्पं म्लाना मलिनाः कोमलाः पेलवाः कुसुमकोशा मुकुलानि तेभ्यः कोष्णाः किञ्चिदुष्णा अमन्दा बहवो मकरन्दस्य विन्दवः पुष्परसलवास्तान् उद्गिरन्तीति तादृशे मरन्दविन्दूद्गारके महति वायौ।

(२) विचित्रा इति—सेनाङ्गेषु सेनाया अङ्गेषु श्रमः परिश्रमः कामुक इव कामीव शनैः प्रसरति। सेनापक्षे—विचित्रा विविधाः पत्त्रालीर्वाहनश्रेणीः। गलन्ति पतन्ति स्वेदसलिलानि स्वेदजलानि तैः। दलयति। तथा प्रमदा मत्ताः करिणो हस्तिनस्तेषां कुम्भावेव गण्डस्थल एव स्तनतटी कुचप्रदेशस्ताः। अमन्दं निर्दयं मृद्नाति खेदयति। जनानां जघनं च जङ्घे चोरुयुगलं च तत् प्रबन्धेन सातत्येनाक्रामनभिभवन्। कामुकपक्षे—विचित्रा पत्त्रालीः पत्त्ररचनाः। स्वेदजलैर्दलयति। तथा प्रमदकरिकुम्भसदृशाः स्तनतटीर्मृद्नाति मर्दयति। तथा जघनजङ्घोरुयुगलं निरन्तरमाक्रामति ॥ २४ ॥

(३) कूजदिति—भवत्सैनिकानां प्रयाणं भवत्सेनागमनमस्याः सिन्धोः सरितो रोधस्तटं स्थगयति समाच्छादयति। कूजन्तः शब्दायमानाः क्रौञ्चाः पक्षिणो यस्मिंस्तत्। चटुलानि चञ्चलानि कुरराणां पक्षिणां द्वन्द्वानि यस्मिंस्तत्। उन्नादिन उन्नदन्तो हंसा यत्र तत्। क्रीडन्तः क्रोडाः शूकरा यत्र। निपतितैर्लतापुष्पाणां वल्लीकुसुमानां किञ्जल्कैः केसरैर्हारि रम्यम्। सान्द्रा घना द्रुमा वृक्षास्तेषां वनानां तलेषु श्रान्ताः क्लान्ताः सुप्ता अध्वनीनाः पान्था यत्र तत् ॥ २५ ॥

अस्याः सान्द्रद्रुमवनतलश्रान्तसुप्ताध्वनीनं
रोधः सिन्धोः स्थगयति भवत्सैनिकानां प्रयाणम्' ॥ २५ ॥

राजा तु तदाकर्ण्य 'बाहुक, बहूनां बहुमतो बाहुल्यादिहैव वासः, तद्वद सैनिकान्, अवतरत तापीतीरतरुतलाश्रयान्, आश्रयत श्रमच्छिदच्छायाः, कुरुतः पटकुटीः, कारयत कायमानानि, मुञ्चतामन्दमृदुशाद्वलेष्ववलान्बलीवर्दकान्, कूर्दयत कर्दमे महिषान्, खादयत वेसरीभिर्वंशकरीराङ्कुरान्, प्रचारयत क्रमेण क्रमेलकान्, अवगाहावसाने पृष्ठावकीर्णपुलिनपङ्कपांसवो विहरन्तु स्ववशं वंशस्तम्बेषु स्तम्बेरमाः, तरुबुध्नेषु बध्नीत तीव्रवेगान्वेगसरान्, अवतरन्तु तापीतीरतरङ्गेषु तुरंगाः, शिशिरतरङ्गानिलान्दोलितविविधविकचमञ्जरीजालजटिलेषूत्फुल्ललताखण्डमण्डपेषु मध्याह्नसमयमतिवाहयन्तु किंनरमिथुनानि' इति सेनापतिमादिदेश ॥ क ॥

स्वयमपि पुष्कराक्षसुचितार्धपथश्रमखिन्नकिंनरमिथुनदिदृक्षया कृतमृगयाविनोदव्यपदेशी दिशि दक्षिणस्यामास्तोकपरिवारपरिवृतो झरन्निर्झरझात्कारिवारिरमणीयासु रममाणपुलिन्दनितम्बिनीवदनबिम्बचन्द्रितासु सान्द्रद्रुमद्रोणीषु विचरितुमारभत ॥ ख ॥

पुरःस्थितश्चास्य वर्त्म दर्शयन् जात्यतरतुरंगमारोपितः पुष्कराक्षोऽप्यभाषत ॥ ग ॥

'देव, मार्कण्डेयप्रमुखमहामुनिनिवासपवित्रिताः पुण्याः खल्विमाः पयोष्णीपरिसरवनभूमयः ॥ घ ॥

तथाहि—

श्रूयते किलास्मादुद्देशात्पूर्वदिग्भागे भगवतः पुराणपुरुषावतारस्य परशुरामस्य जनयितुर्जमदग्नेराश्रमः। ततोऽपि नातिदूरेण(१)सुरासुरमौलिमालामुकुलमुक्तमकरन्दबिन्दुस्नपितपादारविन्दस्य भगवतः स्वस्वेदप्रसरप्रवर्त्तितपयोष्णीप्रवाहस्य महावराहस्यायतनम् ॥ ङ ॥

इतोऽप्यवलोकयतु देवः—

(२)सैषा चलच्चन्द्रकिचक्रवाकचञ्चच्चकोराकुलकूलकच्छा ।

---

नसाधनानि ॥ २६ ॥

राजा त्विति ॥ कायमानानि तृणमयगृहाणि । वंशानां करीराणामङ्कुराः ॥ क ॥
सैषेति ॥ चन्द्रकी मयूरः । कच्छाः काशादिक्षेत्रप्रदेशाः । स्वःसीमेत्यत्र स्वरित्य-

---

(१) सुरसुरेति—सुरासुराणां देवदैत्यानां मौलिषूत्तमाङ्गेषु मालाः स्रजस्तासां मुकुलेभ्यः कोशेभ्यो मुक्ता मकरन्दबिन्दवस्तैः स्नपितमभिषिक्तं पादारविंदं यस्य स तस्य तथोक्तस्य ।
(२) सेति—चलन्तश्चन्द्रकिणो मयूराश्चक्रवाकाश्च तथा चञ्चन्तश्चकोराश्च तैराकुला व्याप्ताः कूलकच्छास्तटस्थकाशादिक्षेत्रप्रदेशा यस्याः सा । स्वःसीम्नः स्वर्गसीम्नः सोपानसदृशो निःश्रेणिकासमास्तरङ्गा वीचयो यस्याः । गङ्गायाः सरितः प्रतिस्पर्धि संनिभं पयो जलं यस्याः । सैषा पयोष्णी सरिद्वर्त्तते ॥ २६ ॥

स्वःसीमसोपानसङ्कुकरङ्गा गङ्गाप्रतिस्पर्धिपयाः पयोष्णी ॥ २६ ॥

यस्याः पश्यैते—

(१)मुक्तास्त्रैः श्रूयमाणां सिकतिलपुलिनप्रान्तविश्रान्तपान्थै-
रुन्धानं मञ्जुगीतप्रियहरिणकुलान्यम्बुपानागतानि।
सांध्यध्यानावसाने तृणमिव मुनयः संनिधौ पङ्कजाना-
मोङ्कारोच्चाररम्यं मधुकरमधुरध्वानमाकर्णयन्ति' ॥ २७ ॥

राजा तु 'नमस्याः खल्वमी महानुभावाः ॥ क ॥

तथाहि—

(२)मृगेषु मैत्री मुदितात्मदृष्टौ कृपा मुहुः प्राणिषु दुःखितेषु।
येषां न ते कस्य भवन्ति वन्द्याः कौशेयकौपीनभृतो मुनीन्द्राः' ॥ २८ ॥

इत्यवधारयँस्तान्ववन्दे ॥

मुनयोऽपि 'सोऽयं सोमपीथी निषधनाथः' इत्यनुध्यानादवगम्य प्रयुक्तब्रह्मोक्ताशिषः, अनुगृह्णन्त इवार्द्रार्द्रैर्दृष्टिपातैः, आश्वासयन्त इव प्रियस्वागतप्रश्नालापेन, स्नपयन्त इव दरहसितदन्तज्योत्स्नामृतप्लवेन, आह्लादयन्त इवादरेण, दत्वार्घ्यमनन्तरमिदमवोचन् ॥ ख ॥

---

त्ययं स्वर्गार्थम् ॥ २६ ॥

मुक्तेति ॥ सिकतास्यास्तीत्यर्थे इलच्। मधुकरध्वानस्योत्कण्ठाजनकत्वात्पान्थानां मुक्ताश्रुत्वम्। गीतप्रियत्वाद्धरिणानां रोधो मुनीनां च देवत्रयीवेदत्रयीवाचिन्योंकारे लीनत्वात् तत्प्रतिनिधौ मधुकरध्वाने बहुमानः। तथा च 'त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति। तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्' ॥ २७ ॥

मृगेष्विति ॥ मैत्री मुदिता करुणा इति तिस्रोऽपि चेतःप्रसादिन्यो भावनाः। कौशेयकौपीनभृत इति निःसङ्गत्वोक्त्या पापकारिषूपेक्षाप्यभिहिता ॥ २८ ॥

मुनयोऽपीति ॥ दर अर्धं यद्धसितं तेन दन्तज्योत्स्ना सैवामृतप्लवस्तेन। दरेत्यव्य-

---

(१) मुक्तेति—सिकतिलपुलिनप्रान्तेषु सिकतामयतटप्रदेशेषु विश्रान्ताः स्थिताः पान्थास्तैः। तथा मुक्तानि त्यक्तान्यस्राणि बाष्पाणि यैस्ते तैः सद्भिः श्रूयमाणमाकर्ण्यमानम्। तथाम्बुपानागतानि जलार्थमायातानि। मञ्जुगीतप्रिया रम्यगानप्रिया हरिणा मृगास्तेषां कुलानि रुन्धानम्। सान्ध्यध्यानावसाने सायं सन्ध्याकाले। पङ्कजानां कमलानां समीपे क्षणं लवमात्रम्। एते मुनयः। ओङ्कारोच्चारवदोङ्कारोच्चारणसमं रम्यं रमणीयं मधुकराणां भृङ्गाणां ध्वानं ध्वनिमाकर्णयन्तीव शृण्वन्तीव ॥ २७ ॥

(२) मृगेष्विति—येषां मुनीनां मृगेषु हरिणेषु मैत्री स्नेहः। आत्मदृष्टावध्यात्मज्ञाने मुदिता हर्षिता। दुःखितेषु दुःखयुतेषु प्राणिषु जन्तुषु मुहुर्वारंवारं कृपा दया। सन्ति। ते कौशेयं कौपीनं मलमल्लकं बिभ्रतीति कौशेयकौपीनभृतो मुनीन्द्राः कस्य वन्द्या न भवन्ति। अपि तु वन्द्या एव भवन्ति। "मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" इति योगसूत्रच्छायात्र निबद्धा ॥ २८ ॥

'आयुष्मन्, अस्मदीयमिह धर्मोपदेशप्रदानमेव प्रथममातिथेयमतिथिजनेष्वतोऽभिधीयसे। पुण्यं पयोऽस्याः सरितः तदेतदवगाह्य कुरु पुण्यमयमात्मानम् ॥ क ॥

तथाहि—

(१)पर्वतभेदिपवित्रं जैत्रं नरकस्य बहुमतङ्गहनम्।
हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी' ॥ २९ ॥

राजापि 'एवमेतत्—

(२)महावराहाङ्गविनिर्गतयाः किमन्यदस्याः परितः पवित्रम्।
यदीयमालोकनमप्यघानि निहन्ति पुंसां चिरसंचितानि ॥ ३० ॥

तदेष करोमि भवतामादेशम्' इत्यभिधाय यथाविधि स्नानाय सरिन्मध्यमवातरत् ॥ ख ॥

---

यमीषदर्थे ॥ ख ॥

पर्वतेति ॥ राजन्। पश्यत यूयमवलोकयत। पर्वतविदारकं पावनं नरकस्य दुर्गतेर्जैत्रं पराभविष्णु। अत एव बहुमतं बहुमाननीयम्। गहनमगाधम्। पयः पाथः। कर्मभूतम्। पयोष्णी वहति धारयति। उपमाने हरिशब्दत्रयमिन्द्रविष्णुसिंहार्थम्। तत्क्रमेण विशिष्यते। तद्यथा पर्वतभेदी गिरिविदारको यः पविर्वज्रं तं त्रायते धारयति वज्रधरम्। नरकस्य भौमासुरस्य जैत्रमभिभावुकं विष्णुम्। मतङ्गान्मुनिविशेषादीषदूना बहुमतङ्गा गजा मतङ्गादुत्पन्नत्वात्। तान् हन्तीत्यच्। किम्वा। अथवा बहून्मतङ्गान्हन्तीति सिंहम् ॥ २९ ॥

महावेति ॥ आदिवराहाद्विनिःसृताया अमुष्याः परतः परमन्यदपरं किं पवित्रं न किमपीत्यर्थः ॥ ३० ॥

---

(१) पर्वतेति—एषा पयोष्णी नदी हरिमिवेन्द्रमिव, हरिमिव विष्णुमिव, हरिमिव सिंहमिव, पयो वहति धारयति तत्पश्यत विलोकयत। इन्द्रपक्षे-पर्वतानां पक्षच्छेदकत्वात्पर्वतभेदी। पविं वज्रं त्रायते धारयतीति पवित्रम्। स चासौ स चेति तम्। जैत्रं जयनशीलम्। नरकस्य मानवस्य बहुमतं भृशं पूजितम्। गहनं दुर्जयम्। विष्णुपक्षे—पर्वतभेदी गोवर्धनधारी स चासौ पावनश्च। नरकस्य नरकनाम्नोऽसुरस्य भौमासुरस्य। जैत्रं विनाशकम्। बहुमतं सर्वपूजितम्। गहनं दुर्ज्ञेयतत्त्वम्। सिंहपक्षे—पर्वतभेदी गिरिगह्वराश्रयतया। पवित्रं नृसिंहरूपत्वात्। नरकस्य मनुष्यस्य जैत्रं जयनशीलम्। बहुमतङ्गान् बहून् गजान् हन्तीति तम्। पयोष्णीपयःपक्षे–तु पर्वतविदारकं पावनं नरकस्य दुर्गतेर्जैत्रं जयनशीलम्। बहुभिर्मतं पूजितम्। गहनं दुरवगाहं पयः पश्यत यूयम्। अत्रश्लेषानुप्राणितोपमालङ्कारः। अत्र यद्यपीन्द्रपक्षे पवित्रशब्दस्याप्रसिद्धार्थे प्रयुक्तत्वान्निहतार्थत्वदोषः। सिंहपक्षे च मतङ्गशब्दस्य मातङ्गार्थे (गजरूपार्थत्वे) कविभिरनादृतत्वादत्राप्रयुक्तत्वदोषश्च संभवति। तथापि श्लेषादावेतयोर्निर्दोषत्वम्। यथोक्तम्—"स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते" इति ॥ २९ ॥

(२) महावराहेति—महावराहादादिवराहाद्विनिर्गतया निःसृताया अस्याः परतः परमन्यत् किं पवित्रमस्ति। यदीयमालोकनमपि विलोकनपि चिरसंचितानि बहुकालात्संचितानि। पुंसामघानि पापानि निहन्ति विनाशयति ॥ ३० ॥

अवतीर्य च मन्त्रमार्जनप्राणसंयमसंध्यासूक्तजपपितृतर्पणादिसमुचिताह्निकावसाने रक्तकमलगर्भमर्घ्याञ्जलिमुत्क्षिप्य भगवतो भास्करस्य स्तुतिमकरोत् ॥ क ॥

(१)जयति जगदेकचक्षुर्विश्वात्मा वेदमन्त्रमयमूर्तिः ।
तरणिस्तरणतरण्डकमघपटलपयोनिधौ पुंसाम् ॥ ३१ ॥

तदनु च (२)चटुलचञ्चरीककुलाकुलितकमलकुड्मलगलद्बहलमकरन्दसुरभिततरङ्गमुत्पतत्कपिञ्जलं जलमवगाह्य चिरमुत्तीर्य तीरमापृच्छ्य मुनिजनमभिवाद्य च पुनः पुलिनपालिपर्यटनाय प्रस्थितः प्रणयादनुव्रजतो मुनीन्निवर्तयन्निदमवादीत् ॥ ख ॥

(३)'चक्रधरं विषमाक्षं कृतमदकलराजहंससंचारम् ।
हरिहरविरञ्चिसदृशं भजत पयोष्णीतटं मुनयः' ॥ ३२ ॥

एवमुक्तास्तेऽप्यार्द्रहृदयाः स्वल्पपरिचयेनाप्युपचितोचितप्रणयाः प्रियंवदतया प्रियमाशशंसुः ॥ ग ॥

(४)'सुगमस्तवास्तु पन्थाः क्षेमा दिग्देवताः शिवाः शकुनाः ।
अभिलषितमर्थमचिरात्साधयतु भवानविघ्नेन' ॥ ३३ ॥

---

अवतीर्येति ॥ मन्त्रमार्जनं मन्त्रस्नानम् । प्राणसंयमः श्वासप्रश्वासरोधने करन्यासोऽङ्गन्यासश्च विद्यते यत्र तत् संध्यासूक्तम् ॥ क ॥

चक्रेति ॥ चक्रवाकधरम् । विषमविभीतकम् । तथा कृतो मदकलराजहंसानां संचारो येन तथाविधम् । पयोष्णीतटं यूयं भजत । मुनय इति सम्बोधनम् । हरिहरविरञ्चिसादृश्यं विशेषणत्रयेण । तदा चक्रं सुदर्शनं धारयति विष्णुः । विषमाण्यक्षीण्यस्य त्रिनेत्रत्वाद्धरः । कृतो मदकलराजहंसेन कृत्वा संचारो येन स ब्रह्मा, हंसवाहनत्वात् ॥ ३२ ॥

---

( १ ) जयतीति—जगतः संसारस्यैकं चक्षुः प्रकाशकम् । विश्वस्य सर्वस्य जगत आत्मा । वेदमन्त्रमयमूर्तिर्वेदस्वरूपः । "द्वादशात्मा त्रयीतनुः" इत्युक्तत्वात् । पुंसां जनानामघपटलपयोनिधौ पापनिवहसागरे तरणतरण्डकं तरणार्थं प्लवः । तरणिः सूर्यो जयति ॥ ३१ ॥

( २ ) चटुलेति—चटुलैश्चञ्चलैश्चञ्चरीककुलैर्भृङ्गकुलैराकुलितानि व्याप्तानि यानि कमलानि पद्मानि तेषां कुड्मलाः कोशास्तेभ्यो गलन् पतन् बहलो बहुर्मकरन्दो मरन्दस्तेन सुरभिताः सुगन्धितास्तरङ्गा वीचयो यस्मिंस्तत् ।

( ३ ) चक्रेति—हे मुनयः । हरिर्विष्णुर्हरः शिवो विरञ्चिर्ब्रह्मा चेति द्वन्द्वः । एतेषां सदृशं समानं पयोष्णीतटं भजताश्रयत कीदृशं तत् । चक्रधरं चक्रवाकधरं विषमा विभीतका अक्षा वृक्षविशेषा यस्मिंस्तत् । तथा कृतो विहितो मदकलराजहंसानां संचारो गमनं येन तथाविधम् । हरिस्तु चक्रस्य सुदर्शनाख्यस्य धरं धारकं हरस्तु विषमाण्यक्षीणि नयनानि यस्य स त्रिनयनत्वात् । विरञ्चिः कृतो मदकलहंसेन कृत्वा संचारो गमनं येन स हंसवानत्वात् ॥३२॥

( ४ ) सुगमेति—तव नलस्य पन्था वर्त्म सुगमः सुखेन गमनार्हो भवतु । दिग्देवताः क्षेमाः क्षेमकारिण्यो भवन्तु । शिवाः कल्याणकराः शकुनाः सन्तु । भवान् नलोऽविघ्नेन निर्विघ्नतयाचिराच्छीघ्रमभिलषितमर्थं समीहितार्थं साधयतु निष्पादयतु ॥ ३३ ॥

इत्यभिधाय व्यावृत्तेषु मुनिषु कौतुकादितस्ततः(१)संचरच्चटुलषट्चरणचक्रचुम्बनाकूततरलितपुष्पपरागपटलपांसुलिततरुतलेषु वहत्सुरभिशिशिरकोमलपवनेषु वनेषु, वनेचरमिथुनमन्मथक्रीडानुकूलेषु कूलेषु, पुलिन्दडिम्भकाध्यासितफलितबदरीषु दरीषु, पुञ्जितकुञ्जरेषु निकुञ्जेषु, दुर्दर्शभानुषु सानुषु, सानुचरश्चरन्नेकस्मिन्नतिनिबिडसंधिसंनिवेशे शिलान्तरालप्रदेशे, प्रियतममुद्दिश्य पठन्त्याः किंनर्याः साश्चर्यमार्यागीतिमिमश्शृणोत् ॥ क ॥

'विपिनोद्देशं सरसं केतकमकरन्दवासितवियत्ककुभम् ।
ग्राममिमं वा सर संकेतकमकरन्दवासितवियत्ककुभम्' ॥ ३४ ॥

तदनु पुनस्तत्प्रतिवादिना किंनरेण च पठ्यमानामिमामार्यामश्रौषीत् ॥ख॥

(२)'अजनि रजनिः किमन्यत्तरणिस्तरतीव पश्चिमपयोधौ ।
घनतरुणि तरुणि विपिने क्वचिदस्मिन्नेव निवसामः' ॥ ३५ ॥

एवमन्योन्यालापमाकर्ण्य किंनरमिथुनस्य विस्मितो नरपतिः 'अहो माननीयमहिमोद्गमा दमयन्ती यस्याः परिचारिणः पक्षिणोऽपि श्रवणस्पृ-

---

इत्यभिधायेति ॥ पुलिन्दडिम्भैरध्यासितासु कासु फलवद्बदरीषु, न केवलं फलवद्बदरीषु, तथा दरीषु । चकारादिमन्तरेणापि समुच्चयः स्यादेव । तद्यथा माघे दशमसर्गे,—'सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु । गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम्' । अध्यासितास्विति व्यस्तमेव । न च फलन्त्यो बदर्यो यास्विति दरीविशेषणम् । 'नद्यृतश्च' इति कप्प्रत्ययस्य दुर्निवारत्वात् । बाहुलकाश्रयणात्कप्प्रत्ययाभाव इति तु न युक्तम् ॥ क ॥

विपिनेति ॥ सरसं सजलम् । तथा केतकमकरन्देन वासितं वियन्नभः ककुभश्च दिशो येन तथाभूतम् । विपिनप्रदेशम् । अथवा इमं पुरोवर्तिनं ग्रामं सर व्रज । कीदृशं ग्रामम् । संकेतयति निवासयति अनुकूलत्वान्निवासहेतुर्भवतीति संकेतकम् । तदेवानुकूल्यमाह—अकरमिति । न विद्यते करो राजग्राह्योंऽशो यत्र । पार्वतीयत्वादकरम् । आसनमासितं सद्भावः । दवस्यासिताद्वियन्तो विश्लिष्यन्तः ककुभास्तरवो यत्र । यदि वा 'षिञ् बन्धने' आङ्पूर्वस्य आसयनमासितम् । आबन्ध इत्यर्थः । यद्वा सिताः सम्बद्धाः । दवेन असिता असंबद्धा वयः पक्षिणो यत्र । तथा यद् वहत् कं पयो यस्यां सा चासौ कुश्च तया भातीति । इणः शतरि यद्वहदित्यर्थः ॥ ३४ ॥

तदिति ॥ किंचिन्नराः किंचित्पक्ष्यश्वादिरूपमिश्राः किंनराः ॥ ख ॥

अजनीति ॥ घनास्तरवो यस्मिन् तस्मिन्विपिने । तरुणीति सम्बोधनम् ॥ ३५ ॥

---

(१) संचरदिति—संचरन्तो भ्राम्यन्तश्चटुलाश्चञ्चलाः षट्चरणा भृङ्गास्तेषां चक्रं निवहस्तेषां चुम्बनाकूतेन तरलितानि चटुलानि पुष्पाणि कुसुमानि तेषां परागपटलो धूलिनिवहस्तैः पांसुलितानि रजोमयानि तरूणां वृक्षाणां तलानि येषु तानि ।

(२) अजनीति—रजनिर्निशाऽजनि जाता । अन्यत्किम् । तरणिः सूर्यः पश्चिमपयोधौ पश्चिमसागरे तरतीवावगाहते । हे तरुणि युवति । अस्मिन्नेव घना निबिडास्तरवो वृक्षा यस्मिंस्तत् तादृशे विपिने क्वचित् कुत्रापि निवासामो वयम् ॥ ३५ ॥

हणीयामेवंविधसुभाषितामृतमुचं वाचमुच्चारयन्ति ॥ क ॥

प्रथममिह तावदाभिजात्यवित्तविद्याविवेकविभवैरनाकुले कुले जन्म ततोऽप्यनुरूपरूपसंपत्तिस्तदनु श्लाघानुगुणगुणलाभस्ततोऽपि च शुचिविदग्धस्निग्धपरिजनावाप्तिरिति महती भाग्यपरम्परा' इति चिन्तयन्नतिदूरवर्त्तिनः पुष्करादस्य मुखमवलोकयांचकार ॥ ख ॥

पुष्कराक्षोऽपि पुरःसृत्य तं किंनरमभाषत ॥ ग ॥

'सुन्दरक, कान्तामुखावलोकनासक्तः समीपमागतानप्यस्मान्न पश्यसि ॥ घ ॥

तदितो दत्तदृष्टिर्भव ॥ ङ ॥

स एष निषधेश्वरः कुसुमचापचक्रं विना
प्रसादितमहेश्वरः स्मर इवागतो मूर्तिमान्।
विलोकय विलोचनामृतसमुद्रमेनं नृपं
विधेहि नयनोत्सवं कुरु कृतार्थतामात्मनः ॥ ३६ ॥

त्वमपि विहंगवागुरे, परमरहस्यसखी देव्याः सा हि त्वच्चक्षुषा पश्यति, त्वत्कर्णाभ्यामाकर्णयति, त्वन्मनसा मनुते ॥ च ॥

तदिह दमयन्तीमनोरथपान्थपिपासाच्छिदि लावण्यपुण्यह्रदेऽस्मिन् राजनि निर्वापय चक्षुः' इति किंनरमिथुनमभिमुखीकृत्य नरपतिमवादीत् ॥ छ ॥

'देव, तदेतत्किंनरमिथुनम्, इदं हि द्वितीयमिव हृदयं देव्याः, प्रियं प्राणेभ्योऽपि प्रेम्णा प्राभृतमेतत्प्रहितं तुहिनाचलचक्रवर्तिना देवस्य, देवेन देव्यै दत्तम्। तथा च दमयन्त्याः समर्पितं परं पात्रं मन्त्रगीतेः ॥ ज ॥

तथाहि—जातख्याति जातिषु, गीतयशो गीतकेषु, वर्धितमानं वर्धमानेषु, सारमासारितकेषु, निपुणं पाणिकासु, धाम साम्नाम्, आचार्यकमृचाम्, आलयः कलादिभेदानाम्, रसगीत्यामपि सुस्वरं स्वरालापेषु, अव-

---

प्रथममिति ॥ आभिजात्यादीनि अहंकारकृतवैक्लव्यस्य कारणानि। कुले त्वेभिरनाकुले। अनुगुणोऽनुरूपः ॥ ख ॥

स एषेति ॥ एष निषधेश्वरो नलः कुसुमचापचक्रं विनाभूतो मूर्तिमान् प्रसादितमहेश्वरः स्मरः। एतावता पूर्वस्मराद्व्यतिरेकोक्तिः। यतः पूर्वः कुसुमचापचक्रं धत्ते। न च मूर्तिमान् दग्धाङ्गत्वात्। तथा प्रकोपितमहेश्वरः। यदा तु प्रसाधितेति पाठः, तदा प्रसाधिता अलङ्कृता महान्त ईश्वराख्राणादिना येन तादृग् निषधेश्वरः। स्मरस्तु साधयितुं वशीकर्तुं प्रारब्धो महेश्वरः शिवो येन। कुसुमान्येव चापचक्रं धनुर्मण्डलम् ॥ ३६ ॥

देवेति ॥ तुहिनाचलस्य हिमाचलस्य चक्रवर्तिना नृपेण प्राभृतं प्रहितमेतत्। मीमायेति शेषः। मन्त्रा गीयन्तेऽस्यामिति मन्त्रगीतिः ॥ ज ॥

जातेति ॥ जातयो नन्दयन्तीप्रभृतयः। वर्धमानान्यासारितकानि पाणिकाः सामानि ऋचः कलादिभेदा गीतविषया भरतशास्त्राद्गम्याः। मध्यमादयः सप्तस्वराः षड्जमध्यमगा-

ग्राम्यं ग्रामरागेषु, विचित्रभाषं भाषासु, प्रवर्तकं नर्तनानाम्, कारणं करणमार्गस्य, वाद्येष्वपि प्रवीणं वीणावेणुषु, लब्धपाटवं पटहेषु, अप्रतिमल्लं झल्लरीषु ॥ क ॥

किंबहुना—

कालमिव कलाबहुलं सर्वरसानुप्रवेशि लवणमिव ।
तव नृप सेवां कर्तुं किंनरयुगलं तया प्रहितम् ॥ ३७ ॥

'तदेतदात्मपरिग्रहेणानुगृह्यताम्' इत्यभिधाय विश्रान्तवाचि तस्मिन्स किंनरयुवा किमप्युपसृत्य (१)मृगमदमिलन्मलयजरसोल्लासिलेखालाञ्छितललाटपट्टार्पितकरकमलमुकुलं प्रणतिप्रेङ्खितमणिकर्णावतंसस्तया सह प्रियया प्रणाममकरोत् ॥ ख ॥

उक्तवांश्च—

लब्धार्धचन्द्र ईशः कृतकंसभयं च पौरुषं विष्णोः ।
ब्रह्मापि नाभिजातः केनोपमिमीमहे नृप भवन्तम् ॥ ३८ ॥

इदं च—

(२)अरुणमणिकिरणरञ्जितलिखिताक्षरमङ्गुलीयकाभरणम् ।

---

त्वारस्त्रयो ग्रामाः । भाषाः षट्त्रिंशत् । कला गीतवाद्याद्या मुहूर्तभेदाश्च । करणानि तलपुष्पपुटादीन्यष्टोत्तरशतसंख्यानि ॥ क ॥

कालमिति ॥ कला गीतावाद्याद्या मुहूर्तभेदाश्च विदन्त्यधीयते वा कलाः कलविदः । तेषां समूहः कालम् । तद्यथा । कालशास्त्रविषये बहुलं तन्निष्ठं भवति । तथेदमपि समग्रकलाप्रवीणम् । रसाः शृङ्गाराद्यास्तिक्ताद्याश्च । समयार्थे तु कालशब्दे पुंस्त्वं स्यात् । यदा तु 'काल इव कलाबहुलम्' इति पाठः । तदा कालः कलाभिर्निमेषोन्मेषाद्यंशरूपाभिर्बहुलो व्याप्तः । इदं तु कलाभिर्गीतनृत्यादिभिर्व्याप्तम् । कालोऽवसरः आत्मसमर्पणायावसर इव प्रेषित इति भावः ॥ ३७ ॥

लब्धेति ॥ अर्धं चन्द्रस्य अर्धचन्द्रः शशिकला गलापहस्तनं च । तत्तु निन्दाभासे । तद्युक्त ईश्वरः । कृतं कंसस्य भयं येन तत्पौरुषं विष्णोः । निन्दाभासे तु कृतकं कृत्रिमम् । सभयं भयान्वितम् । वैष्णवतो नाभेर्जातो ब्रह्मा । निन्दाभासे तु अभिजातः कुलीनः पश्चान्नञ्योगः ॥ ३८ ॥

अरुणेति । अनयाशिषा पाणिग्रहणं सूचितम् । अरुणमणिः पद्मरागादिः । लिखि-

---

(१) मृगेति—मृगमदेन कस्तूर्या मिलन् यो मलयजरसश्चन्दनस्तेनोल्लासिनी शोभमाना या लेखा तया लाञ्छिते युक्ते ललाटपट्टेऽलिकपट्टेऽर्पितं दत्तं करकमलमुकुलं येन यथा तथा ।

(२) अरुणेति—अरुणमणिकिरणैः पद्मरागकिरणै रञ्जितं तथा लिखितानि लिपिबद्धकृतान्यक्षराणि यत्र तत् । चार्थे द्वन्द्वः । इदमङ्गुलीयकाभरणमूर्मिका तदग्रा दमयन्त्याः पाणिपङ्कजमिव तव पाणिपद्मे चिरं लगतु नियुक्तं भवतु । दमयन्तीहस्तपक्षे—अरुणं तथा मणिखचिताभरणै रञ्जितं पुनर्लिखितान्यक्षराणि येन ॥ ३९ ॥

तस्याः करकिसलयमिव तव करकमले चिरं लगतु ॥ ३९ ॥

अनया च—

(१)तव सुभग रम्यदशया तयैव रक्तान्तनेत्रमण्डनया ।
चीनांशुकयुगलिकया क्रियतामङ्गे परिष्वङ्गः ॥ ४० ॥

अयं च—

(२)उज्ज्वलसुवर्णपदकस्तस्याः संदेशकथनदूत इव ।
रुचिरमणिकर्णपूरः श्रयतु श्रवणान्तिकं भवतः ॥ ४१ ॥

किंचान्यत्—

(३)आनन्ददायिनस्ते कुण्डिननगरे कदा भविष्यन्ति ।
त्वन्मुखकमलविलोलन्नागरिकानयनषट्पदा दिवसाः' ॥ ४२ ॥

एवमाविर्भावितप्रश्रयमुज्ज्वलितानुरागमुदीरितादरमाप्यायितप्रणयमभिधाय स्थितवति किंनरे, नरेश्वरो दमयन्तीप्रहितप्राभृतानि स्वयमादरेण गृहीत्वा, 'सुन्दरक, तस्याः संदेश एवास्माकं कर्णपूरः, परिकरोऽयं मणिकर्णावतंसः । तस्याः सुगृहीतेन नाम्नैव वयं मुद्रिताः प्रपञ्चोऽयमङ्गलीमुद्रालंकारः । तदनुरागेणैव वयमाच्छादिताः पुनरुक्तमाच्छादनयुगलमपरं च युवां प्रेषयन्त्या तया किं न प्रहितमस्माकम् , किमन्यत्त्वत्तोऽपि प्रियं प्राभृतं भविष्यतीति । तदेहि शिविरमनुसरामः' इत्यभिधाय बहु मानयन्किंनरमिथुन-

तान्यक्षराणि यस्मिन् । करकिसलयं त्वरुणम् । तथा मणिकिरणैराभरणरत्नकान्तिभिः कलितम् । तथा लिखितान्यक्षराणि येन ॥ ३९ ॥

तवेति ॥ दशा वस्त्रान्तसूत्रमवस्था च नेत्रं चित्रवस्त्रविशेषोऽक्षि च ॥ ४० ॥

उज्ज्वलेति ॥ उज्ज्वलं सुवर्णं पदं यस्य । पक्षे उज्ज्वलान्यग्राम्याणि शोभनवर्णानि पदानि वचनानि यत्र ॥ ४१ ॥

एवमिति ॥ कर्णपूरोऽवतंसः कर्णयोः पूरणं च । मुद्रिता अपरस्त्रीनाम्नो दुष्करप्र-

(१) तवेति—हे सुभग । तयैव दमयन्त्यैव चीनांशुकयुगलिकया चीनवस्त्रयुगलेनाङ्गे शरीरे तव परिष्वङ्ग आलिङ्गनं क्रियतां विधीयताम् । कीदृश्या तयैतया च । दमयन्तीपक्षे—रम्या दशावस्था यस्याः सा तया । रक्तान्ते रक्तप्रान्ते नेत्रे नयने एव मण्डनं भूषणं यस्याः सा तया । वस्त्रपक्षे—रम्या दशा वस्त्रप्रान्तं यस्याः । तथा रक्तान्तं नेत्रं वस्त्रमेव मण्डनं यस्याः सा तयैतया चेत्युभयपक्षे समानम् ॥ ४० ॥

(२) उज्ज्वलेति—तस्या दमयन्त्याः संदेशकथनाय दूत इव संदेशहारी दूत इव रुचिरमणिकर्णपूरो मनोरमकर्णावतंसो भवतो नलस्य श्रवणान्तिकं कर्णान्तिकं श्रयतु भजतु । कीदृशोऽसौ । उज्ज्वलं यत्सुवर्णं हेम तस्य पदमेव पदकोऽवस्थानम् । दूतपक्षे—उज्ज्वलानि कान्तिगुणविशिष्टानि सुवर्णानि शोभनवर्णरचितानि पदानि यस्य सः । "औज्ज्वल्यं कान्ति"रिति वामन आह स्म शब्दगुणं कान्तिनामानम् ॥ ४१ ॥

(३) आनन्देति—कुण्डिननगरे कुण्डिनपुरे ते प्रसिद्धा दिवसाः कदा भविष्यन्ति । कीदृशास्ते—त्वन्मुखकमले तव वदनपद्मे विलोलन्ति चञ्चलानि नागरिकाणां स्त्रीणां नयनान्येव नेत्राण्येव षट्पदा भ्रमरा येषु ते तादृशाः । कुण्डिनपुरे भवान् कदा समास्यतीति भावः ॥४२॥

(१)मतिचपलकपिकुलान्दोलिततरुशिखराग्रगलितशिलास्फालनस्फुटत्फलरससुगन्धिना स्रवत्कुसुममकरन्दद्रवार्द्रितपांसुपटलेन वर्त्मना निजावासमुदचलत् ॥ क ॥

उच्चलिते च पश्चिमाम्भोनिधिसलिलक्षालितपादपल्लवे वासार्थिनीवास्तगिरिगह्वरं विशति वियद्वीथीपान्थे विवस्वति, क्रमेण तस्यां दिशि (२) दिनकररथचक्रचङ्क्रमणचूर्णनोच्चलन्मन्दरगिरिगैरिकाधूलिपटलोल्लोल इवोल्ललास संध्यारागः ॥ ख ॥

तेन च संवलितानि विजृम्भितुमारभन्त जम्भनिसुम्भनककुभि विपिनजरत्कृकवाकुकंधरारोमरोचींषि तमांसि ॥ ग ॥

ततश्च नष्टचर्याक्रीडयेवादर्शनमयान्तीषु दिक्कन्यकासु, वनमुनिहोमधूमगन्धेन संतर्प्यमाणासु वनदेवतासु, निद्रान्धसिन्धुरयूथेष्विवोन्नतवप्रस्थलीषु परिणमत्सु शनैस्तिमिरेषु, जाते मनाग्भिन्नाञ्जनपत्त्रस्तवकिते निशामुखे, नरपतिस्तेन किंनरमिथुनेन सार्धमर्धपथायातप्रज्वलितदीपिकापाणिपरिजनपरिकरितः शरणागतकपोतमुत्पतितोलूककृतशब्दं शिबिमिव शिबिरसंनिवेशमविशत् ॥ घ ॥

तत्र च क्रमेण कृतकरणीयस्त्वरमाणपाचकवृन्दोपनीतमुत्पतत्पाकपरिमलस्पृहणीयमत्युष्णमेदुरमांसोपदंशमाज्यप्राज्यमुपभुज्य पुष्कराक्षकिंनरमिथुनाप्तजनैः सह मधुररससारमाहारम्, अनन्तरमाचान्तः शुचिचन्दनाञ्चितकरः कर्पूरपारीपरिकरितताम्बूलोज्ज्वलवदनारविन्दः 'सुन्दरक, कमपि प्रस्तारय विद्याविनोदं त्वयापि विहंगवागुरिके, गीयतां किमपि मधुरम्' इति मृदुमणिपर्यङ्किकासुखासीनः किंनरमिथुनमादिदेश ॥ ङ ॥

---

वेशा कृता ॥ क ॥

उच्चलित इति ॥ पान्थो हि सलिलेन चरणौ प्रक्षाल्य वासागारं प्रविशति ॥ ख ॥

तेन चेति ॥ जम्भनिशुम्भन इन्द्रः ॥ ग ॥

ततश्चेति ॥ नष्टचर्या शिशुक्रीडाविशेषः । निद्रान्धेत्यादौ परिणामः, परिपाकस्तिर्यक्प्रहारदानं वा । निशासु हि कपोताः पारावताः शरणं नीडमागच्छन्ति, उलूकाश्च घूका उड्डीयन्ते । उपमाने तु 'नारदकृतां शिबिप्रशंसामसूयन्तौ कपोतोलूकरूपधारिणौ हरौ सरवं जिज्ञासमानौ शिबिनृपमागतौ' इत्यमागमः ॥ घ ॥

तत्र चेति ॥ कपूरस्य पारी शकलम् ॥ ङ ॥

---

(१) अतिचपलेति—अतिचपलाश्चटुलाः कपयो वानरास्तेषां कुलानि निवहास्तैरान्दोलितानि कम्पितानि तरुशिखराग्राणि वृक्षाग्राणि तेभ्यो गलितानि पतितानि शिलास्फालनेन दृषदाघातेन स्फुटन्ति फलानि तेषां रसेन सुगन्धवता ।

(२) दिनेति—दिनकररथचक्रस्य सूर्यरथचक्रस्य चंक्रमणेन भ्रमणेन चूर्णीभूत उच्चलंश्च मन्दरगिरिर्मन्दराचलस्तस्य गैरिकाधूली रक्तरजस्तस्य पटलो निवहस्तद्वदुल्लोलः ।

दर्शिते च वांशिकेन (१)वंशमुखोद्गीर्णगान्धारपञ्चमरागस्थानके स्थिरीकृतमध्यमश्रुतिप्रसन्नप्रेङ्खोलनाप्रयोगमुचितस्थानकृतकांस्यतालमकठोरतारस्वरम्, आकर्षदिव हृदयम्, अभिषिञ्चदिवामृतेन श्रवणेन्द्रियम्, अस्तं नयदिवान्यविषयसंधानम्, अनुच्चप्रपञ्चितपञ्चमं विपञ्चीस्वरसंदर्भितमभूत्तत्किमपि गीतम् ॥ क ॥

यत्र—

(२)प्रसरति रणरणकरसः कुण्ठयति हठेन चित्तमुत्कण्ठा ।
स्मरति स्मरोऽपि धनुषः प्रगुणीकृतनिशितबाणस्य ॥ ४३ ॥

एवंविधे च व्यतिकरे वैतालिकः पपाठ—

(३)'सकलविषयवृत्तीर्मुद्रयन्निन्द्रियाणां हृदि विदधदवस्थां कांचिदुन्मादनीं च ।
ध्वनिरनुगतवीणानिक्वणः कोमलोऽयं जयति मदनबाणः पञ्चम पञ्चमस्य ॥४४॥

अपिच—

(४)प्रियविरहविषादस्यौषधं प्रोषितानां विविधविधुरचिन्ताभ्रान्तिविश्रान्तिहेतुः ।
अयममृततरङ्गः कर्णयोः केन सृष्टो मधुररसनिधानं निःस्वनः पञ्चमस्य ॥४५॥

अपिच—

(५)अयं हि प्रथमो रागः समस्तजनरञ्जने ।
यस्य नास्ति द्वितीयोऽपि स कथं पञ्चमोऽभवत्' ॥ ४६ ॥

सकलेति ॥ पञ्चमस्य रागस्य ध्वनिर्जयति कथंभूतः । पञ्चमः पञ्चानां पूरणा मदनबाणः ॥ ४४ ॥

प्रियेति ॥ अत्र पञ्चमस्येत्याख्या । न तु पञ्चानां पूरणस्येति व्युत्पत्त्यर्थः ॥ ४५ ॥

अयमिति ॥ प्रथमः प्रधानभूत आद्यः । द्वितीयः समानो द्वयोः पूरणश्च । स कथं पञ्चानां च पूरणोऽथ च पञ्चम इति संज्ञा ॥ ४६ ॥

(१) वंशेति—इति वंशमुखेनोद्गीर्णं उच्चरितो गान्धारः पञ्चमरागश्च तयोः स्थानके ।

(२) प्रसरतीति—रणरणकरस उत्कण्ठारसः प्रसरति वर्धते । तथोत्कण्ठा रणरणकरसो हठेन बलाच्चित्तं मानसं कुण्ठयति संरुणद्धि । स्मरोऽपि कामोऽपि । प्रगुणीकृतः प्रत्यञ्चोपरिस्थितो निशितस्तीक्ष्णो बाणः शरो येन स तस्य । धनुषः कोदण्डस्य स्मरति ध्यायति ॥४३॥

(३) सकलेति—इन्द्रियाणां चक्षुस्त्वगादीनां सकलेषु सर्वेषु विषयेषु वृत्तीः प्रवृत्तीर्मुद्रयन् संकोचयन् । तथा हृदि मनसि कांचिदुन्मादिनीं प्रमत्तताविधायिनीमवस्थां दशां विदधत् कुर्वन् । अनुगतो वीणानिक्वणो वीणाशब्दो यस्य सः । कोमलः सुकुमारः । अयं पञ्चमो मदनबाणः कामबाणोऽयं पञ्चमस्य रागस्य ध्वनिरनुरणनं विजयते ॥ ४४ ॥

(४) प्रियेति—प्रोषितानां प्रवासिनीनां प्रियविरहस्य प्रियवियोगस्य विषादस्य दुःखस्यौषधं भेषजं निवारकमित्यर्थः । विविधा नानाविधा या विधुरस्य वियोगस्य चिन्ता भ्रान्तिर्भ्रमश्च तयोर्विश्रान्तेर्विश्रामस्य हेतुर्निदानम् । कर्णयोः श्रोत्रयोरमृततरङ्गः पीयूषलहरिः । मधुररसनिधानं शृङ्गाररसनिधिः । अयं पञ्चमस्य रागस्य निःस्वनो ध्वनिः केन सृष्टो विरचितः॥४५॥

(५) अयमिति—समस्तानां सर्वेषां जनानामनुरञ्जनेऽयं पञ्चमाख्यो रागः प्रथमः प्रधानभूत आद्यश्च । यस्य रागस्य द्वितीयोऽपि रागो जनरञ्जने नास्ते स पञ्चमः कथमभवज्जात इति वैचित्र्यम् ॥ ४६ ॥

(१)इति विविधमुदञ्चत्पञ्चमोद्गारगर्भं पठति मधुरकण्ठे धाम्नि वैतालिकेऽस्मिन्।
अपहरति च चित्तं किंनरद्वन्द्वगीते सुखमय इव निद्रानिःस्पृहो लोक आसीत्॥४७॥

एवमनवरतमारोहावरोहमूर्च्छनाभङ्गितरङ्गिते गीतामृतस्रोतसि निमग्नमनसि कठोरितोत्कण्ठे रणरणकारम्भभाजि राजनि 'रजनि, किं न विरमसि। दिवस, किं नाविर्भवसि। अध्वन्, किं न स्तोकतां व्रजसि। कुण्डिननगर, किं न नेदीयो भवसि। श्रम, किमन्तरायोऽसि। विधे, किमुत्क्षिप्य न मां तत्र नयसि' इत्यनेकधा चिन्तयति स किंनरयुवा प्रक्रमोचितश्लेषमिदमवादीत्॥ क॥

"वर्धमानोल्लसद्रागा सुजातिमृदुपाणिका।
दमयन्ती च गीतिश्च कस्य नो हृदयंगमा॥ ४८॥

अपि च—

साप्यनेककलोपेता साप्यलंकारधारिणी।
सापि हृद्यस्वरालापा किंत्वसाधारणा तव॥ ४९॥

अपि च—

संगीतका त्वदौत्सुक्यात्त्वां स्मरन्ती समूर्च्छना।
किं तु तस्यास्त्वयि स्वामिँल्लयभङ्गो न दृश्यते'॥ ५०॥

---

इतीति॥ परब्रह्मालोकनसमयसमुल्लासितसान्द्रानन्दमय इव। रसस्य हि तत्त्वं परब्रह्मास्वादसोदरत्वं पूर्वाचार्यैर्व्यचार्यत। सुखमय इव निद्रानिमीलित इवेत्युभयत्रापीवशब्दो योज्यः। अथवा सुखमयः सन्निद्रानिमीलित इवेतीवशब्दो भिन्नक्रमे॥ ४७॥

वर्धमानेति॥ वर्धमानो वर्धिष्णुः। न तु हीयमानः। उल्लसन् रागोऽनुरागो यस्याम्। सुष्ठु शोभना क्षत्रियाख्या यस्याः। पाणिः करः॥ पक्षे वर्धमाने तालविशेषे उल्लसन् रागः श्रीरागादिर्यत्र। जातयो नन्दयन्तीप्रभृतयः। पाणयः समपाण्यादयः॥ ४८॥

सापीति॥ कला विज्ञानकौशलम्। अलङ्कार आभरणम्। स्वरः शब्दः। आलापो मिथोभाषणम्। गीतिपक्षे 'पताकेनावकृष्टिश्च विरलाङ्गुलिना च या। आवाप इति विज्ञेया कलाविद्भिस्तु सा कला' इत्यावापादयः सप्त कलाः। अलंकारा उपमारूपकादयः। स्वराः षड्जादयः सप्त। आलाप आलप्तिः। परं किं तु दमयन्ती असाधारणा अनन्यविषयत्वादेकाश्रया। गीतिस्तु साधारणा स्वरसाधारणा जातिसाधारणा चेति॥ ४९॥

सङ्गीतेति॥ त्वय्यौत्सुक्यं त्वदौत्सुक्यं तस्माद्धेतोः। सम्यग् गीतं प्रशस्तिरस्याः। इति सर्वत्र त्वदुत्का गीयत इति भावः। तथा त्वां स्मरन्ती सह मूर्च्छनया वर्तते इति समोहा॥ गीतिस्तु सङ्गतं गीतं स्वरगुणदूषणग्रामश्रुतियतिमूर्च्छनालक्षणं यस्याम्। तथा 'स्वरः सन्तर्जितो यत्र रागत्वं प्रतिपद्यते। मूर्च्छनामिति तां प्राहुर्मुनयो ग्रामसम्भवाम्'। सा चैकविंशति-

---

(१) इतीति—इतीत्थं विविधं नानाविधमुदञ्चन् निर्यन् पञ्चमोद्गारः पञ्चमरागोच्चारणं गर्भे मध्ये यस्मिंस्तत् यथा तथा। धाम्नि गृहेऽस्मिन् मधुरकण्ठे वैतालिके स्तुतिपाठके पठति सति गायति सति। तथा च किंनरद्वन्द्वस्य गीते चित्तमपहरति सति निद्रायां निःस्पृहो विगतस्पृहो लोकः सुखमय इवानन्दित इव विगलितनेत्रान्तर इवासीत्॥ ४७॥

एवमुक्तवति किंनरेश्वरे किमप्यलीककोपकुटिललोलद्भ्रूवलयावलितकंधरमवलोक्य किंनरी वक्तुमारभत ॥ क ॥

'सुन्दरक' मा मैवं वादीः ॥ ख ॥

(१)शुष्काङ्गी घनचार्वङ्ग्याः सुवाचः काकलीस्वरा ।
दमयन्त्याः कथं गीतिः सादृश्यमवगाहते ॥ ५१ ॥

अपिच—

गीतेर्ग्रामाः किल द्वित्राः सा तु ग्रामसहस्रभाक् ।
कूटतानघना गीतिः कथं तस्याः समा भवेत् ॥ ५२ ॥

किं चान्यत्—

ज्वरितेव बहुलङ्घनप्रयोगप्रकाशितमूर्च्छना बहुलकम्पा च, उन्मत्तेव बहुभाषा बहुताला च, वेश्येव बहुगा बहुढक्करागा च, अटवीव बहुककुभभेदा बहुलनिषादस्थानका च गीतिरियम् ॥ ग ॥

विधा। यदुक्तम्—'सप्त स्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेकविंशतिः' इति यथोक्तया सह समूर्च्छना। इत्येतावता दमयन्तीगीत्योः साम्यमुक्तम्। अधुना तु भेदं निरूपयति—किंत्विति ॥ लयस्तत्परता। द्रुतमध्यविलम्बितलक्षणश्च ॥ ५० ॥

शुष्केति ॥ शुष्कमवकृष्टमङ्गमवयवो यस्याः। कु ईषत् कलोऽस्यामिति (गौरादित्वान्ङीषि) काकलिः निषादसंज्ञः स्वरो यस्याः। दैसादृश्यपक्षे शुष्कमनार्द्रम्। काकलो श्लेष्मवैगुण्याद्द्विधाभूतः स्वरः ॥ ५१ ॥

गीतेरिति। षड्जमध्यमगान्धारास्त्रयो ग्रामाः। गान्धारस्य स्वर्गविषयत्वाद् द्वावेवेति द्वित्राः। ग्रामः खेटकं च। कूटतानाः पञ्चत्रिंशत्। तैर्घना। दमयन्ती तु न कपटविस्तारबहुला ॥ ५२ ॥

ज्वरितेत्यादि ॥ लङ्घनमुद्ग्राहितादधिकोच्चारणम्। पक्षे लङ्घनं शोषणम्। अनशनमिति यावत्। प्रयोगे उच्चारणे प्रकाशिता मूर्च्छना उत्तरमन्द्रादिका यस्याम्। पक्षे प्रकृष्टा योगाः क्वाथादयः। मूर्च्छना मोहः। कम्पोऽङ्गकृतं स्वरकृतं च चलनम्। उन्मत्तेति ॥ भैरवीप्रभृतयः षट्त्रिंशद्भाषाः। तालश्चञ्चत्पुटादिः। उन्मत्ता तु बहु भाषते तालिकाश्च दत्ते। वेश्येवेति ॥ रागः श्रीरागादिः। तथा बहुलढक्कनामा रागो यस्याम्। वेश्या तु बहुषु रागोऽस्या इति बह्वासक्तिः। प्रभूतठक्कागामिनी च। ठक्कशब्दोपलक्षिता क्रीडया कराहतिः ठक्का। गमेः प्राप्त्यर्थाड्डः। अटवीति ॥ ककुभो ध्वनिविशेषः। निषादः स्वरविशेषः। स्थानकं मन्द्रमध्यमतारलक्षणम्। अटवीपक्षे ककुभोऽर्जुनवृक्षः। निषादाः शबराः। स्थानकान्यालवालाः शिबिरसंनिवेशाश्च। एवं ज्वरिताद्युपमानप्रतिपादितदोषा गीतिः कथंकारमिव दमयन्तीसमा ॥ ग ॥

(१) गीतिर्दमयन्तीसाम्यं नावगाहते। कथमिति चेद् गीतिः शुष्काङ्गी नीरसशरीरा। तथा काकलीस्वरा खरखरस्वरा। विरोधपरित्यागे शुष्कमवकृष्टमङ्गं यस्याः। काकलीस्वरो मधुरध्वनिः। दमयन्ती तु घनं निबिडं चारु रम्यमङ्गं यस्याः सा। सुवाचो मधुरभाषिण्याः ॥ ५१ ॥

तद्वरमिदमुच्यताम्—

(१)वेदविद्योपमा देवी मनोहरपदक्रमा ।
उद्द्योतिता पुराणाङ्गमन्त्रब्राह्मणशिक्षया ॥ ५३ ॥

किं त्वियमेकपथा, सा तु दृष्टशतपथा' इत्येवमनेकविधवक्रोक्तिविशेषैरभिनन्दयति दमयन्तीकिंनरमिथुने, भूतभूयिष्ठायां विभावर्याम्, सुरसङ्ग इवादृश्यमानमानुषे निशीथे, स्थगितवति भृङ्गभासि तमसि भुवनम्, अनन्तरमवसरपाठकः पपाठ ॥ क ॥

(२)'उपरम रमणीयात्किंनरद्वन्द्वगीतादभिभवति निशीथो नाथ नेत्राणि पश्य ।
मदनवशविलोलल्लोचनाम्भोरुहाणां मिलतु कुलवधूनां सेवको लोक एषः।५४।

अपि च—

(३)शतगुणपरिपाट्या पर्यटन्नन्तराले कमलकुवलयानामर्धरात्रेऽपि खिन्नः ।
उपनदि दयितायाः क्वापि शब्दं निशम्य भ्रमति पुलिनपृष्ठे चक्रवच्चक्रवाकः।५५।

अथ यथाप्रियं प्रेषितपरिजनो राजा रजनिशेषमतिवाहयितुमनुरूपं निरूप्य किंनरमिथुनस्य शयनमासन्ननिद्रागृहे (४)हंसपिच्छच्छायाच्छप्रच्छद-

वेदेति ॥ पदक्रमः पदन्यासः । पुराणं जीर्णं वपुर्येषाम् । तथा मन्त्रप्रधानब्राह्मणानां पुरोधःप्रभृतीनां च शिक्षयोपदेशेनोद्द्योतिता । वेदविद्या तु पदक्रमाभ्यामभिधीयते । पुराणानां मार्कण्डेयादीनाम् । अङ्गानां शिक्षाकल्पादीनाम् । मन्त्रब्राह्मणस्य ग्रन्थविशेषस्य शिक्षयाभ्यासेन भूष्यते । अन्तःपुरे हि वृद्धा एवाधिक्रियन्ते । यदुक्तम्—'आशीतिकाश्च पुरुषाः पञ्चाशत्काश्च योषितः । शुध्येरन्नवरोधानां शौचमागारिकाश्च ये' ॥ ५३ ॥

किंत्वियमिति ॥ इयं दमयन्ती एकमार्गा । वेदविद्या तु दृष्टशतपथाख्यग्रन्था ।

(१) वेदेति—वेदपाठस्यैकादश प्रकारा भवन्ति । यथोक्तं याद्विवेदीयनीतिमञ्जर्याम्—'एकादशप्रकारैस्तु संहिता पाठतत्परः" इति । ते चैकादश प्रकाराश्चरणव्यूहेऽमी प्रदर्शिताः—संहितापाठः, पदपाठः, क्रमपाठः, चर्चा, श्रावकः, चर्वकः ( क्रमचर्चकः ); श्रवणीपारः; क्रमपारः, चटः ( क्रमचटः ), जटा ( क्रमजटः ), दण्डः ( क्रमदण्डः ), एतेषां लक्षणानि प्रातिशाख्यग्रन्थेषु द्रष्टव्यानि । कात्यायनेन तु विकृतिवल्ल्यामिमे प्रकाराः प्रदर्शिताः—

"जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः" ॥ इति ।

(२) उपरमेति—हे नाथ स्वामिन् रमणीयान्मनोरमात्किंनरद्वन्द्वस्य गीताद्गानात् । उपरम विरम । निशीथोऽर्धरात्रं नेत्राणि नयनानि । अभिभवति त्वं पश्य विलोकय । मदनवशेन कामायत्तेन विलोलन्ति चटुलानि लोचनान्येव नेत्राण्येवाम्भोरुहाणि कमलानि यासां तासाम् । कुलवधूनां कुलाङ्गनानां लोको जनो मिलतु त्वाम् । कीदृगसौ सेवकः परिचारक एषः॥५४॥

(३) शतेति—कमलकुवलयानां नीलकमलानामन्तराले शतगुणपरिपाट्या शतगुणप्रणाल्या पर्यटन् । अर्धरात्रे निशीथे खिन्नोऽपि दुःखितोऽपि चक्रवाक उपनदि नद्यां क्वापि कुत्रापि दयितायाः स्वीयसहचारिण्याः शब्दं निःस्वनं निशम्याकर्ण्य पुलिनपृष्ठे तीरदेशे चक्रवत्कुलालचक्रवद् भ्रमति सञ्चलति ॥ ५५ ॥

(४) हंसेति—हंसपिच्छस्य छाया कान्तिस्तद्वदच्छः स्वच्छः प्रच्छदपटः प्रावरणपटस्तेनाच्छादितमावृत्तं हंसतूलतल्पं हंसतूलशय्या तत् ॥

पटाच्छादितहंसतूलतल्पमभजत ॥ क ॥

तत्र च दमयन्त्यनुरक्तोऽयमितीर्ष्ययेवानायान्त्यां निद्रायां द्रोणीद्रुमान्तरालसुप्तोत्थितविविधविहंगविरुतानि विनिद्रवनदेवतापठ्यमानप्राभातिकपुण्यकीर्तनानीवाकर्णयन्ननेककालप्रणालिकापर्यायेण पर्यस्तेऽस्तगिरिमस्तके मुक्तास्तवकितनीलवितानपट इव तारातिमिरपटले, पट्टांशुकवैजयन्तीष्विव भविष्यति दिनकरोदयोत्सवे नभस्तलमलंकुर्वतीषु पूर्वस्यां दिशि प्रभातप्रभावल्लरीषु, वल्लकीक्वाणरमणीये श्रयति श्रवणपथमीषदुन्मिषत्कमलमुकुलमुखमुक्तमधुकरमन्द्रध्वनौ, ध्वस्तनिद्रेण (१)प्रभातोचितषड्जानुविद्धशुद्धभाषामालपतानेन किंनरमिथुनेन गीयमानमिमं श्लोकमशृणोत् ॥ ख ॥

(२)'धुतरजनिविरामोन्मीलदम्भोजराजिस्तनुतुहिनतुषारानुद्गिरन्गन्धवाहः ।
कलितकलभकुम्भभ्रान्तिषूद्घाटितेषु स्खलति निधुवनान्तश्रान्तकान्ताकुचेषु ॥५६॥

तदनु पुनः प्रभातप्रहतप्रयाणभेरीरवविनिद्रितस्यापूरयतः समविषमवनविभागानुत्कल्लोलजलनिधेरिव चलतः सैन्यसमूहस्य कलकलमाकर्णयन्नुत्थाय कृतोचिताचारश्चारुचर्चितचन्द्रचूडचरणश्चटुलखुरचारीप्रचारेणाडम्बरिततालवस्य खण्डपरशोः पदलीलामिवाभ्यस्यता(३)स्फुरद्घुर्घुरायमाणघोणाग्रस्खलत्खलीनवशविगलितवहललालाजलप्लवेन वनभुवि फेनिलजलनिधिमिवाकारयता जात्यतरतुरगसैन्येन परिवृतः पूर्वप्रस्थानस्थित्या प्रतस्थे । ग ।

भूयिष्ठं भूता अतिक्रान्ता, भूतभूयिष्ठा । आहिताग्न्यादित्वात् । निशीथे तमोऽतिशयान्मानुपादर्शनम् । छत्राणां समूहे च स्वभावात् ॥ क ॥

तत्रेति ॥ द्रोण्यां द्रुमास्तेषामन्तरालं द्रोणीद्रुमान्तरालम् । मध्ये निम्नः प्रान्तयोश्चोन्नतस्तरुराजिविराजितो नौसदृशः पर्वतादिभूभागो द्रोणी । यदाह मुकुटताडितकनाटके बाणः—'आशाः प्रोषितदिग्गजा इव गुहाः प्रध्वस्तसिंहा इव द्रोण्यः कृत्तमहाद्रुमा इव भुवः प्रोत्खातशैला इव । बिभ्राणाः क्षयकालरिक्तसकलत्रैलोक्यकष्टां दशां जाताः क्षीणमहारथाः कुरुपतेर्दैवस्य शून्याः सभाः' ॥ यया प्रणालिकाया काल इयानिति ज्ञायते, सा कालप्रणालिका ताम्रमयघटिका । अथवा प्रकृष्टा नाडिकैव डलयोरैक्ये प्रणालिका । नाडिका कालविशेषः । तथाच 'अहोरात्रं च विद्वद्भिः कथ्यते षष्टिनाडिकम्' । यथा च—'स्नात्वा तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च । इत्यन्तः—

(१) प्रभातेति—प्रभातोचिता प्रातःकालयोग्या षड्जानुविद्धा षड्जस्वरानुगता शुद्धा या भाषा तामालपता ।

(२) धुतेति—धुताः कम्पिता रजनिविरामे प्रातःकाले उन्मीलन्ति विकसन्त्यम्भोजानि कमलानि तेषां राजयो येन सः । तनून् कृशान् । तुहिनस्य हिमस्य तुषारान् लवान् । उद्गिरन्नुद्वमन् गन्धवाहो वायुः । कलिता जाता कलभकुम्भयोः करिगण्डस्थलयोर्भ्रान्तिर्येषु तेषु । उद्घाटितेष्वनावृतेषु । निधुवनान्ते रतान्ते श्रान्तानां रमणीनां कुचेषु स्तनेषु स्खलति संचरति ॥५६॥

(३) स्फुरदिति—स्फुरन्ती संचलन्ती घुर्घुरायमाणा या घोणा नासा तस्या अग्रे स्खलत्खलीनवशेन प्रग्रहवशेन विगलितः पतितो वहलो बहुर्लालाजलप्लवस्तेन ।

स्थपुटस्थलीस्थितं स्थूलमेकमव्यग्रमग्रे राजा गजग्रामण्यमवलोक्य पुष्करात्तमभाषत ॥क ॥

'भद्र—

सालानकमनालानमत्युन्नतमनुन्नतम् ।
दन्तवन्तमदन्तं च पश्यैनमगजं गजम् ॥ ५७ ॥

अयं हि मन्मथविलासेषु परं वैदग्ध्यमवलम्बते ॥ ख ॥

तथाहि—

(१)मृदुकरपरिरम्भारम्भरोमाञ्चितायाः सरसकिसलयाग्रग्रासशेषार्पणेन ।
मदमुकुलितचक्षुश्चाटुकारी करीन्द्रः शिथिलयति रिरंसुः केलिकोपं प्रियायाः ॥५८॥

अपिच—

(२)उपनयति करे करेणुकायाः किसलयभङ्गमनङ्गसङ्गताङ्गः ।
स्पृशति च चलदक्षिपक्ष्मलेखं मुखमखरेण करेण रेणुदिग्धम् ॥ ५९ ॥

अथवा विवेकपूर्वव्यवहारविचारेष्वमी मानुषेभ्यः स्तोकमेवावहीयन्ते ।ग॥

तथाहि—

(३)श्रूयते पुरा किल नारायणनाभ्यम्भोरुहकुहरकुटीमधिशयानस्य

---

पुरछन्दरीः प्रति मया विज्ञाय विज्ञापिते देवेनाप्रतिपत्तिमूढमनसा द्विन्नाः स्थितं नाडिकाः।' अन्यदपि प्रणालिकया जलपद्धत्या परिक्षिप्यते। ताराणां मुक्ताः, तिमिरपटलस्य नीलवितानपट उपमा ॥ ख ॥

सालेति ॥ अलीनां समूह आलं तदेव प्रत्यायकत्वात्पटहस्तेन सह । मदविधुरगजे भृङ्गाः समीपीभवन्ति । तेन च मत्तो ज्ञायत इति भावः । तथा अनालानं वन्यत्वान्निरर्गलस्तम्भम् । तथातीवोन्नतमुच्चम् । तथा नास्ति उन्नता प्रेरणास्येति स्वच्छन्दचरमित्यर्थः । यद्वा अनुन्नेत्यामन्त्रणम् । तमिति गजविशेषणम् । दन्तवन्तं दन्तुरम् । अदन्तं तृणादिकमदन्तं । अगजं गिरिजं गजं पश्येति सम्बन्धः । अथवा सालांस्तरूनदन्तम् । तथा अकमकुत्सितम् । सर्वलक्षणपरिपूर्णम् । तच्च 'उच्चैःकुम्भः–' इत्यादिना वक्ष्यति । अत्र 'किम्' क्षेपे । शेषं पूर्ववत् ॥ ५७ ॥

श्रूयत इति ॥ सामस्तोभरसनिष्यन्दादिति । सामनि स्तोभ आसक्तिस्तस्माद्रसस्य

---

( १ ) मृदुकरेति—मदेन रसिकतया मुकुलिते मुद्रिते चक्षुषी येन । चाटुकारी प्रार्थनाकरो रिरंसुः क्रीडितुकामः करीन्द्रः । मृदुकरेण कोमलहस्तेन यः परिरम्भस्यारम्भस्तेन रोमाञ्चितायाः समाश्लेषेण पुलकयुतायाः प्रियायाः सरसोऽशुष्कः किसलयः पल्लवस्तस्याग्रस्य ग्रासस्तस्य शेषोऽवशेषस्तस्यार्पणेन दानेन केलिकोपं सुरतकोपं शिथिलयति दूरीकुरुते ॥५८॥

( २ ) उपेति—अनङ्गेन कामेन संगतं युक्तमङ्गं यस्य सः । करी करेणुकायाः करिण्याः करे हस्ते किसलयभङ्गं पल्लवलवमुपनयति प्रापयति । चलन्ती चञ्चलाक्ष्णोर्नेत्रयोः पक्ष्मलेखा पक्ष्मराजिर्यस्मिंस्तत् । रेणुदिग्धं धूलिधूसरितं मुखमाननमखरेण सुकुमारेण करेण शुण्डादण्डेन स्पृशति संमर्दयति ॥ ५९ ॥

( ३ ) श्रूयत इति नारायणनाभिकमलमधिशयानस्य ब्रह्मणो बृहद्रथन्तरसाम गायतः सतः सामस्तोभे यो रसस्तस्य निष्यन्दात् स्रावादष्टौ दिग्गजाः समजायन्त । स्तोभो नाम सामवेदे गानप्रणालीविशेषः स्तोभग्रन्थेषु विदितः । अष्टौ दिग्गजाश्चैतेषामष्टौ पत्नयश्चेमाः—

वेदविद्यां निगदतो भगवतः पितामहस्य बृहद्रथन्तरविकीर्णभासनामानि सामानि गायतः सामस्तोभरसनिष्यन्दादुदपद्यन्तैरावतसुप्रतीककुमुदवामनाञ्जनप्रभृतयोऽष्टौ दिग्गजेन्द्राः ॥ क ॥

तेभ्योऽभवन्भद्रमन्द्रमृगसंकीर्णजातयो गिरिचरनदीचरोभयचारिणः करिणः ॥ ख ॥

प्रसिद्धं चैतत् । 'सामजा गजाः' इति ॥ ग ॥

केचित्पुनरन्यथा कथयन्ति—

(१)किल सकलसुरासुरकरपरिवर्त्यमानमन्दरमन्थानमथितदुग्धाम्भोनिधेरजनि जनितजगद्विस्मयो लक्ष्मीमृगाङ्कसुरभिसुरद्रुमधन्वन्तरिकौस्तुभोच्चैःश्रवसां सहभूः शशधरकरकान्तिरैरावतः । तत्प्रसूतिरियमशेषवनान्यलंकरोतीति ॥ घ ॥

तदेष भद्रजातिर्भविष्यति ।

तथाहि—

(२)उच्चैःकुम्भः कपिशदशनो बन्धुरस्कन्धसंधिः
स्निग्धाताम्रद्युतिनखमणिर्लम्बवृत्तोरुहस्तः ।

---

स्वेदस्य निष्यन्दः स्रावस्तत इत्यर्थः । स्तोकरसपाठे तु रस आसक्तिः । निष्यन्दः स्वेदः ॥क॥

---

"ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥
करिण्योऽभ्रमु-कपिला-पिङ्गलानुपमाः क्रमात् ।
ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती" ॥ इत्यमरकोशे ।

एतेभ्यो दिग्गजेभ्यो "भद्रो मन्द्रो मृगश्चैव विज्ञेयास्त्रिविधा गजाः" इत्युक्तत्वात्त्रिविधा गजजातिः संजाता । तत्रभद्रजातीयगजवर्णनं कविना "उच्चैःकुम्भः" इति पद्येन करिष्यते । मन्द्रजातीयगजवर्णनं च शिशुपालवधकाव्ये ( ५ सर्गे ४९ ) दृश्यम्—

"जज्ञे जनैर्मुकुलिताक्षमनाददाने, संरब्धहस्तिपकनिष्ठुरचोदनाभिः ।
गम्भीरवेदिनि पुरः कवलं करीन्द्रे, मन्द्रोऽपि नाम न महानवगृह्य साध्यः" ॥इति॥

( १ ) किलेति--सकलैः सर्वैः सुरासुरकरैर्देवदैत्यहस्तैः परिवर्त्यमानं भ्राम्यमाणं मन्दराद्रिरेव मन्थानं मन्थनदण्डस्तेन मथिताद् दुग्धाम्भोनिधेः क्षीरसागरादैरावतो गजः संभूतस्तत्प्रसूतिरियं गजजातिः । सुरासुरैर्मथितादम्भोनिधेश्चतुर्दशरत्नानि निःसृतानि । तानि यथा—

"लक्ष्मीकौस्तुभपारिजातकसुराधन्वन्तरिश्चन्द्रमा
गावः कामदुघाः सुरेश्वरगजो रम्भादिदेवाङ्गनाः ।
अश्वः सप्तमुखः सुधा हरिधनुः शङ्खो विषं चाम्बुधे
रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु नो मङ्गलम्" । इति ॥

( २ ) उच्चैरिति-उच्चैरुन्नतौ कुम्भौ गण्डस्थले यस्य सः । कपिशदशनो पीतदन्तः । बन्धुरो मनोरमो स्कन्धयोः सन्धिः सन्धानं यस्य सः । स्निग्धा मसृणा आताम्रा रक्तवर्णा द्युतयः कान्तयो येषां तादृशा नखा एव मणयो यस्य सः । वर्तुल उरुर्महान् हस्तः शुण्डादण्डो यस्य सः । शूरः पराक्रमी । सप्तच्छदस्य सप्तपर्णवृक्षस्य परिमलस्पर्धि गन्धसमं दानोद्रेकं

शूरः सप्तच्छदपरिमलस्पर्धिदानोदकोऽयं
भद्रः सान्द्रद्रुमगिरिसरित्तीरचारी करीन्द्रः ॥ ६० ॥

तन्मोदतामयम्, अनुरागिणोर्दम्पत्योः क्रीडारसविघातः कृतो न श्रेयान्' इत्यभिधाय, हृतहृदयः, स्वैरं रममाणमृगमिथुनविलासैरुल्लासितपुलकः कुसुमितकाननानिलैरुत्कम्प्यमानः, झरन्निर्झरोपान्तपादपतलचलत्केलिकिलकेकिकेकारवैर्विनोद्यमानः समीपचरसेवकसुभाषितैश्च, सममसमं च, निम्नगात्रमनिम्नगात्रं च ग्रावविषममग्रावविषमं च, सश्वापदमश्वापदं च, सपादपमपादपं च, विन्ध्यस्कन्धमुल्लङ्घ्य, 'देव, विलोक्यतामिह विषमविषाणि पन्नगकुलानि द्रोणीगहनं च, इह शरासनकरस्बाणि वनानि पापर्द्धिकपुलिन्दवृन्दं च, इह बहुसुखानि शबरद्वन्द्वानि रत्नाकरस्थलं च, इह सुमधुराणि फलानि कीचकवनं च, इहामोदितविश्वककुम्भि कुसुमानि सरित्तीरं च, इह सत्प्रभावन्ध्यानि दवदग्धारण्यानि मुनिमण्डलं च' इति विविधवनप्रदेशान्दर्शयतः पुष्कराक्षस्य विचित्रवचनोक्तीर्भावयन् क्रमेणातिक्रम्य शिखरपरम्परां परैरसह्यः सह्याचलमवततार ॥ क ॥

रमणीयतया स्निग्धतया च पुनः परिवर्तितमुखो विलोक्य विन्ध्यदक्षिणमेखलाशिखरश्रेणीपादपान् पुष्कराक्षमभाषत ॥ ख ॥

'भद्र, दुस्त्यजाः खल्वमी विन्ध्यतटीतरवः ॥ ग ॥

तथाहि—

(१)आवासाः कुसुमायुधस्य शबरीसंकेतलीलागृहाः
पुष्पामोदमिलन्मधुव्रतवधूझङ्कारुद्धाध्वगाः ।
सुस्निग्धाः प्रियबान्धवा इव दृशो दूरीभवन्तश्चिरात्
कस्यैते न दहन्ति हन्त हृदयं विन्ध्याचलस्य द्रुमाः ॥ ६१ ॥

तदिति ॥ उच्चैःकुम्भ इत्याद्यभिधाय तेनैव करिणा हृतहृदयो मृगमिथुनविलासादिभिः पुलकाद्युपेत ईदृशं विन्ध्यमतिक्रम्य 'देव, वीक्ष्यताम् इह विन्ध्यस्कन्धे इदमिदमिति वनप्रदेशान्दर्शयतः पुष्कराक्षस्य वक्रोक्तीर्भावयन्नतिक्रान्तशिखरपरम्परः सह्यमयात् । केलये किलतीति केलिकिलः ( 'इगुपध' इति कः ) क्रीडापात्रम् । केलिकिलानां केकानुकारप्रवृत्तानां केकिनां च केकारवैर्विनोद्यमानः । सह मया श्रिया समं सश्रीकम् । असमं विषमम् । न समोऽस्येति कृत्वा उत्कृष्टं वा । निम्नगा नदीस्त्रायत इति कः । तथा अनिम्नमुच्चं

मदजलं यस्य सः । सान्द्रा घना द्रुमा वृक्षा येषु तादृक्षु गिरिषु पर्वतेषु सरित्तीरेषु च चारी भ्रमणकर्तायं भद्रजातीयः करीन्द्रो वर्तते ॥ ६० ॥

( १ ) आवासेति—कुसुमायुधस्य कामस्यावासाः सदनानि । शबरीणां निषादस्त्रीणां संकेतस्य कामचेष्टाया लीलागृहा विलासस्थानानि । पुष्पामोदेषु कुसुमगन्धेषु मिलन्तः पतन्तो मधुव्रता भृङ्गास्तेषां वधूनां कान्तानां झङ्कारैः काकलीस्वरै रुद्धा अध्वगा येषु ते । सुस्निग्धाः प्रियबान्धवा इव । एते विन्ध्याचलस्य विन्ध्याद्रेर्द्रुमा वृक्षाश्चिराद् दृशो दूरीभवन्तो दूरं गच्छन्तः कस्य हृदयं मानसं न दहन्ति न संतापयन्ति । हन्त खेदे ॥ ६१ ॥

अपिच—

(१)भ्राम्यद्भृङ्गभरावनम्रकुसुमश्च्योतन्मधूद्गन्धिषु
च्छायावत्सु तलेषु पान्थनिचया विश्रम्य गेहेष्विव।
निर्यन्निर्झरवारिवारिततृषस्तृप्यन्ति येषां फलै-
स्ते नन्दन्तु फलन्तु यान्तु च परामभ्युन्नतिं पादपाः॥ ६२॥

अपिच—

(२)यत्र न फलितास्तरवो विकसितसरसीरुहाः सरस्यो वा।
न च सज्जनाः स देशो गच्छतु निधनं श्मशानसमः॥ ६३॥

गात्रं मूर्तिर्यस्य। ग्रावभिर्दृषद्भिर्विषमम्। अग्रे अवविषमं समम्। अवेति मत्वर्थे। श्वापदं हिंस्रपशुः। अश्वानामपदमभूमिम्। समनिर्जलो हि देशोऽश्वीयः। अयं च ग्रावविषमो निम्नगाधारश्च। सह पादपैर्वृक्षैः। तथा अपादान् गूढपदः पातीत्यपादपम्। शून्ये हि सर्पादिप्राचुर्यम्। अथवा अतिवैषम्यात्संचरतां पादान् न पातीत्यपादपम्। इह विषेति॥ विषमं विषं येषु पन्नगकुलेषु। द्रोणीगहनेषु तु विषमा विषाणिनो दन्तिनः शृङ्गिणो वा शम्बरादयो यत्र। इह शरेति॥ शरेण मुञ्जेन असनेन बीजकवृक्षेण च करम्बाणि शबलानि। पुलिन्दवृन्दं तु शरासनं धनुः करे यस्य। तथा बाणाः सन्त्यस्येति बाणि सशरम्। इह बेति॥ बहु सुखं येषां तानि बहुसुखानि। स्थलं तु बहु विपुलम्। तथा सुष्ठु खानिराकरो यत्र। बहुशब्दो वैपुल्येऽपि। इह सुमेति॥ सुष्ठु मधुराणि। वनं तु सुष्ठु मधु यत्र तत्सुमधु। तथा रणन्त्यवश्यं रणि। सच्छिद्रा हि वंशा वायुवशाद्रणन्तीति। इहामविति॥ आमोदिताः सुरभिता विश्वाः सर्वाः ककुभो दिशो यैः। तीरं तु आमोदिता हर्षिता वयः पक्षिणः श्वकाः शुनः संज्ञा वृकाः कुम्भिनश्च गजा यत्र। आमोदो हर्षेऽपि। यद्विश्वप्रकाशः—'आमोदो गन्धहर्षयोः।' यद्वा तु विश्वा शुण्ठी कुम्भी च वल्लीविशेषः। तद्बहुव्रीहौ 'शेषात्'—इति कप् दुर्वारः। सादृश्यवृत्तेः शुनः। संज्ञाप्रतिकृत्योः कन्। इह सेति॥ सती शोभना प्रभा कान्तिस्तया वन्ध्यानि रहितान्यरण्यानि। मुनिमण्डलं तु सत्प्रभावम्। तथा ध्यानमस्त्यस्तीति ध्यानि॥ क॥

यत्र नेति॥ देशश्मशानयोः समतायामरतिजनकत्वं हेतुः॥ ६३॥

(१) भ्राम्यदिति—भ्राम्यन्तश्चलन्तो भृङ्गास्तेषां भरैः संघैरवनम्राणि निम्नानि कुसुमानि पुष्पाणि तेभ्यः श्च्योतन्ति स्रवन्ति मधूनि, तेषामुद्गन्धीनि सुगन्धीनि तेषु तथा छायावत्सु छायायुतेषु वृक्षतलेषु गेहेषु सदनेष्विव विश्रम्य स्थित्वा पान्थनिचयाः पथिका निर्यन्ति निःसरन्ति निर्झरवारीणि तैर्वारिता दूरीकृता तृट् पिपासा यैस्ते तादृशाः सन्तो येषां पादपानां फलैस्तृप्यन्ति तृप्तिं प्राप्नुवन्ति। ते पादपा वृक्षाः। नन्दन्तु फलन्तु परामभ्युन्नतिं समुदयं यान्तु गच्छन्तु॥ ६२॥

(२) यत्रेति—यत्र देशे फलिताः फलयुक्तास्तरवो वृक्षा न सन्ति। तथा विकसितानि प्रफुल्लानि सरसीरुहाणि कमलानि यासु ताः सरस्यो न सन्ति सरोवराणि न सन्ति। एवं यत्र सज्जना न सन्ति। स श्मशानसमो देशो निधनं गच्छतु विनश्यतु॥ ६३॥

तत्कथय कदा पुनरिमां विन्ध्यवनवीथीं विचित्रपत्त्रलकुचां दमयन्तीमिव निर्विघ्नमलोकयिष्यामः ॥ क ॥

तथाहि—

(१)पीनोन्नमद्घनपयोधरभारभुग्नमध्यप्रदेशरुचिमल्लवलीलतायाः ।
उत्कण्ठितोऽस्मि चलदेणदृशः प्रियायास्तस्याश्च पर्वतभुवो वनवीथिकायाः॥६४॥

अपिच—

सानूनां सानूनां विलोक्य रमणीयतां च सानूनाम् ।
सालवने सालवने विहरिष्यति सह मयाऽत्र कदा ॥ ६५ ॥

सखे सखेदा इव वयम्, तत्कथय कियद्दूरेऽद्यापि स विदर्भविषयः, यत्र ब्रह्माण्डशुक्तिसंपुटमध्यमुक्ताफलगुलिकया तयालङ्कृतं तत्कुण्डिनं नगरम्' इत्यभिदधाने निषधनाथे तैस्तैरालापैरनुवर्त्तितोक्तिः पुष्कराऽक्षोऽप्यभाषत॥ख॥

'देव, प्राप्ता ननु वयम् ॥ ग ॥

इदं हि—

(२)वीरपुरुषं तदेतद्वरदातटनामकं महाराष्ट्रम् ।

---

तत्कथयेति॥ विचित्रपत्त्रा लकुचास्तरवो यस्याम् । दमयन्ती तु विविधपत्त्रवल्लीयुक्तस्तनी । पत्त्रं लात इति के पत्त्रलौ ॥ क ॥

पीनोन्नेति ॥ कठिनस्तनभरेण भुग्ने नम्रे उदरे रुचिं मल्लन्ते धारयन्ति इत्यणि तथोक्ता वल्य एव लता यस्याः । वली उदररेखा । तथा चलतामेणानामिव दृशौ यस्याः । वनवीथपक्षे पयोधरो मेघः । रुचिमती तेजस्विनी लवली नाम्नी लता तथा । चलदेणानां दृक् दर्शनं यस्याम् ॥ ६४ ॥

सानूनामिति ॥ सानूनां तटानां सम्बन्धिनो ये सानवो मार्गास्तेषां रमणीयताममूनां परिपूर्णा विलोक्य अलवनेन सह यत् सालनां सर्जतरूणां वनं तस्मिन्मया समं कदा सा विहरिष्यति । अत्र प्राच्यः सानुशब्दस्तटार्थोऽन्यश्चाध्वार्थः । यद्विश्वः—'सानुः शृंगे बुधे मार्गे पथायां पल्लवे वने' । यदि वा 'णू स्तवने' आनवनमानूः प्रशंसा तया सह वर्तन्त इति सानूनि तेषां स्तुत्यानामित्यर्थः ॥ ६९ ॥

सखे इति ॥ ब्रह्माण्डमेव शुक्तिसंपुटः । सा च तन्मध्ये मुक्ताफलगुलिका साधुमु-

---

(१) पीनेति—अत्र दमयन्तीवनवीथिकासाम्यमुक्तम् । दमयन्तीपक्षे—पीनौ पीवरावुन्नमन्तौ घनौ सान्द्रौ यौ पयोधरौ तयोर्भारेण गौरवेण भुग्नो यो मध्यप्रदेश उदरं तत्र रुचिमल्ला कान्तिधारिणी वली त्रिवली एव लता यस्याः सा । चलतां गच्छतामेणानां मृगाणामिव दृशौ नेत्रे यस्याः सा तस्याः । वनवीथीपक्षे—पीना उन्नमन्तो घनाः सान्द्राः पयोधरा मेघास्तेषां भारेण भुग्नो मध्यप्रदेशस्तत्र रुचिमती तेजस्विनी लवलीलता यस्यां सा । तथा चलतामेणानां मृगाणां दृक् दर्शनं यस्यां सा ॥ ६४ ॥

(२) वीरेति—वीराः पुरुषा यस्मिंस्तत् । वरदातटनामकं वरदानामकसरितस्तीरभूतं महाराष्ट्रं नाम नगरमास्ते । यत्र देशे दक्षिणस्यां दिशि सरस्वतीनदीसमा सा विदर्भा नदी वहति गच्छति । अयं भावो महाराष्ट्रे वरदानदी विदर्भानदी चेति नदीद्वयमास्ते । वरदानदी

दक्षिणसरस्वती सा वहति विदर्भा नदी यत्र ॥ ९६ ॥

इहाकरभया सिंहलद्वीपभुवा सदृशी, बहुदया त्यागिजनतया तुल्या समृद्धनया भूनिखातकृपणजननिक्षेपकुम्भिकया समाना, प्रजा ॥ क ॥

इह समकरन्दानि कमलवनानि राजराजन्यचक्रं च, इह बहुधामानि नगराणि लोकहृदयं च, इह सारम्भाणि कृपाणकुलानि दशरूपकप्रेक्षणं च, इह बहुकृपाणि जनमनांसि प्रजापालबलं च, इह महाविप्राणि ग्रामपुरपत्तनानि मेषगोष्ठं च ॥ ख ॥

इयं च गगनवीथीव पूर्वोत्तराफाल्गुनीराशिवायूपयुक्ता ब्राह्मणाग्रहारभूमिः ॥ ग ॥

इतश्च—

(१)आरुह्यैताः शिखरिसदृशान्ग्राममध्योच्चकूटा-
न्न्योन्यांसप्रणिहितभुजाः संगताः कौतुकेन ।
प्रेक्षावेशाद्विचलदृशो योषितः पामराणां

---

क्काफलम् । गुलिकाकारत्वात् । एतावता स्थूलवृत्तत्वम् ॥ ख ॥

इहेति ॥ न कराद्राजदेयांशाद्भयं यस्यां साऽकरभया । भुवा तु न कामा यस्यामिति करभरहितया तथा बह्वी दया यस्यां सा बहुदया । त्यागिनां जनतया तु बहु ददातीति बहुदा तया बहुदया । जनानां समूहो जनता । 'ग्रामजन–' इति समूहे तल् । समृद्धो नयो यस्यां सा समृद्धनया । कुम्भिकया तु समृत् मृत्तिकोपेतं धनं यस्यां तया समृद्धनया ॥क॥

इहेति ॥ सह मकरन्देन वनानि । राजन्यचक्रं तु समः करो राजांशो यस्य । तथा दानमस्यास्तीति दानि । इह बेति ॥ बहूनि धामानि गृहाणि येषु । हृदयं च बहुधा अनेकधा मानोऽस्यास्तीति मानि । इह सेति ॥ सह आरम्भैरुपक्रमैः कुलानि । प्रेक्षणकं तु सारमुत्कृष्टम् । तथा भाणो रूपकविशेषः सोऽस्यास्तीति भाणि । यदाह धनिकः—'भाणस्तु धूर्तचरितं कृतं स्वेन परेण वा । यत्रोपवर्णयेदेको निपुणः पण्डितो विटः' । इह बेति ॥ बह्वी कृपा येषु तानि । बलं च बहु । तथा कृपाणः खड्गोऽस्यास्तीति । इह मेति ॥ महान्तो विप्रा येषु । गोष्ठं तु महान्तोऽवयो मेण्ढास्ते एव प्राणिनो बलवन्तो यत्र ॥ ख ॥

इयं चेति॥ पूर्वस्यामुत्तरस्यां चाफल्गु सारमुत्कृष्टं यस्याम् । तथा शिवा कल्याणी । तथा यूपैर्यज्ञकीलैर्युक्ता । गगनवीथी तु पूर्वा उत्तराः फल्गुन्यो राशयो मेषाद्या वायुः पवनस्तैरुपयुक्तोपयोगीकृता ॥ ग ॥

आरुह्येति ॥ शिखरी गिरिः । कूटा अवकरोत्कराः प्रेक्षायामवलोकने आवेश आग्र-

---

च दक्षिणपूर्वस्यां दिशि वहन्तो गोदावरीनद्यां प्रविशति ॥ ९६ ॥

( १ ) आरुह्येति—शिखरिसदृशान् गिरिसमान् ग्राममध्ये उच्चकूटान् उन्नतानवकरोत्करदेशान् । आरुह्योपरि स्थित्वा । अन्योन्यांसेषु परस्परस्कन्धेषु प्रणिहिता निहिता भुजा हस्ता याभिस्ताः । कौतुकेन कौतूहलेन संगता मिलिताः । प्रेक्षावेशात् त्वद्दर्शनाग्रहात् । अविचलन्त्यौ दृशौ यासां ताः । तथा निभृता निश्चला तनुः शरीरं यासां ताः । पामराणां प्रा-

पश्यन्त्यस्त्वां निभृततनवो लेख्यलीलां वहन्ति ॥ ६७ ॥

किं चान्यत्—

(१)नृप चलसि यथा यथा त्वमस्मिन्नपि वदनानि तथा तथा चलन्ति ।
तरलितनयनानि पामरीणां पवनविनर्तितपङ्कजोपमानि ॥ ६८ ॥

अपिच—

(२)उत्कम्पाद्गलितांशुकेषु रभसादत्यन्तमुच्छ्वासिषु
प्रोत्तुङ्गस्तनमण्डलेषु विलुठद्गुञ्जावलीदामसु ।
आसां स्वेदिषु दृश्यते मृगदृशां संक्रान्तबिम्बो भवा-
नाश्लिष्यन्निव गोपिकाः कृतबहुप्राकाम्यरूपो हरिः ॥ ६९ ॥

अहो नु खल्वाश्चर्यमिदमेतासां तथाविधनेपथ्यनिरपेक्षाप्युन्मादयति यूनां मनो युवतीनां यौवनश्रीः ॥ क ॥

तथाहि—

(३)माल्यं मूर्धनि कर्णिकारकलिकाः पिष्टातकं चन्दनं
मुक्तादाम गले च काचमणयो लाक्षामयाः कङ्कणाः ।
रागोऽङ्गेषु हरिद्रया नयनयोरत्युल्बणं कज्जलं

---

ह्रः । पामराः प्राकृतजनाः ॥ ६७ ॥

उत्कम्पादिति ॥ भ्रष्टांशुकत्वं स्वेदित्वं च स्तनमण्डलस्य निरावरणत्वेन नृपप्रतिबिम्बस्य संक्रान्तौ हेतुः । प्राकाम्यं महासिद्धिविशेषः । प्राकाम्येण रूपाणि प्राकाम्यरूपाणि। कृतानि बहूनि प्राकाम्यरूपाणि येन ॥ ६९ ॥

अहो न्विति ॥ तथाविधमुदारं हारकुण्डलादिरूपं नेपथ्यम् ॥ क ॥

---

कृतजनानां रमण्यस्त्वां पश्यन्त्यो विलोकयन्त्यो लेख्यस्य चित्रस्य लीलां साम्यं वहन्ति दधति ॥ ६७ ॥

( १ ) नृपेति—हे नृप यथा यथा त्वं चलसि गच्छसि । अस्मिन् प्रदेशे । तथा तथा तरलिते नयने येषु तानि पवनेन वायुना विनर्तितानि पङ्कजानि कमलानि उपमानानि येषां तानि पामरीणां पामरस्त्रीणां वदनान्यपि मुखान्यपि चलन्ति गच्छन्ति ॥ ६८ ॥

( २ ) उत्कम्पेति—उत्कम्पाद्वेपथुनिमित्तात् । गलितानि पतितान्यंशुकानि येभ्यस्तेषु । रभसाद्वेगादत्यन्तमुच्छ्वासिषूच्छूनेषु । विलुठन्ति चलन्ति गुञ्जावलीनां दामानि दोरका येषु तेषु । स्वेदिषु घर्मजलयुतेषु । आसां पामरीणां प्रोत्तुङ्गस्तनमण्डलेषु पीवरपयोधरप्रदेशेषु संक्रान्तो बिम्बो प्रतिबिम्बो यस्य सः । भवान् नैषधः । गोपिका गोपस्त्रीः समाश्लिष्यन् कृतानि विहितानि बहूनि भूयांसि प्राकाम्येण सिद्धिविशेषेण रूपाणि येन तादृशो हरिरिव दृश्यते । योगसिद्धयश्चाष्टौ प्रथिताः—

"अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः" इत्यमरे ॥ ६९ ॥

( ३ ) माल्यमिति—मूर्धनि शिरसि मालैव माल्यं स्रक् । कर्णिकारस्य कलिकाः । चन्दनं पिष्टातकं विलेपनं तथा गले कण्ठे मुक्तादाम मुक्तासरः । काच एव मणिर्यासां ताः । तथा कङ्कणा वलया लाक्षामया अलक्तकेन निर्मिताः । अङ्गेषु हरिद्रया रागो विलेपनम् । नयन-

वेषोऽयं विरसस्तथापि हृदयं ग्राम्या हरन्ति स्त्रियः ॥ ७० ॥

इतश्च—

(१)कन्दलितकन्दविशेषाः कर्कशकर्कटिका विशालकालिङ्गाः कूष्माण्डमण्डितमण्डपाः सुवृत्तवृन्ताकाः सुहस्तितहस्तिकर्णपुनर्नवाः स्थूलमूलकाः पिण्डितपलाण्डवो वास्तूकवास्तुभूतभूतलाः संजीवितजीवन्तिकाः सर्षपराजिकाराजिराजिताः सरित्सारिणीसारिवारिसेचनसुकुमारपल्लवितविविधशाकाः शाकवाटिकाः ॥ क ॥

इतश्च—

(२)विकसन्मुचुकुन्दानन्दिनो मकरन्दस्यन्दिसुन्दरसिन्दुवाराः पामरीसंकेतनिकेतकेतकीवनाः कम्राम्रातकाः कुड्मलितकङ्कोलफलाः कोरकितकुरण्टकाः पल्लवितवल्लीकाः फुल्लन्मल्लिकोल्लासिनः सुजातजातयो विचित्रशतपत्त्रिकास्ताण्डवितपाण्डुपिण्डितागुरुकरवीरवीरुधो दृश्यमानसर्वर्तुपुष्पाः पुष्पायुधावासा आरामाः ॥ ख ॥

माल्यमिति ॥ हरिद्रा तण्डुलचूर्णम् । पिष्टातकं विलेपनम् ॥ ७० ॥

कन्दलितेति ॥ शाकवाटिकाः । सुहस्तितेति ॥ हस्तः कन्दलोद्भेदः संजातोऽस्येति । तारकादित्वादितच् । हस्तिकर्णः पुनर्नवा च वल्लीभेदौ । वास्तूकेन शाकविशेषेण वस्तुभूतं गणनार्हं भूतलं यासु । राजिकानां राजसर्षपाणां राज्या राजिता ॥क॥

योर्नेत्रयोरत्युल्बणं बहु कज्जलमित्यादिवेशो नेपथ्यं यद्यपि विरसो रसविरोधी तथापि ग्राम्या ग्रामे भवाः स्त्रियो नार्यो हृदयं मानसं हरन्ति । मनोरमा इति भावः ॥ ७० ॥

( १ ) कन्दलितेति—कन्दलिताः कन्दविशेषा यासु ताः । कर्कशाः कठिनाः कर्कटिका इर्वारुफलानि यासु ताः । विशाला महान्तः कालिङ्गाः कुटलवृक्षा यासु ताः । कूष्माण्डैः कर्कारुभिर्मण्डिताः शोभिता मण्डपा निकुञ्जा यासु । सुहस्तिताः कन्दलिता हस्तिकर्णा एरण्डाः पुनर्नवाश्च शोथघ्न्यो यासु । पिण्डिता गोलाकराः पलाण्डवः सुकन्दका यासु । वास्तूकेन वथुवाख्यशाकविशेषेण वास्तुभूतं गणनार्हं भूतलं यत्र तासु । संजीविताः प्रफुल्ला जीवन्तिका गिलोयेति नाम्ना ख्याता वृक्षा यत्र । सर्षपराजिकाणां राजसर्षपाणां राजिभिः श्रेणिभी राजिताः शोभिताः । सरितां नदीनां सारिणीभ्यः क्षुद्रनदीभ्यः सारिवारसेचनेन प्रवरवारिसेचनेन सुकुमारपल्लविताः कोमलकिसलययुता विविधा नानाः शाका यत्र ।

( २ ) विकसदिति—विकसद्भिर्मुचुकुन्दैरानन्दिनः । मकरन्दस्यन्दिनो मरन्दस्राविणः सुन्दरा रम्याः सिन्दुवारा निर्गुण्डीवृक्षाः सिंभालूनाम्ना ख्याता येषु ते । पामरीणां स्त्रीणां संकेतनिकेतनानि संकेतस्थानानि केतकीनां क्रकचच्छदवृक्षाणां वनानि येषु ते । कम्रा रम्या अम्रातका कपीतना ( अम्बाडनाम्ना विदिताः ) येषु ते । कुड्मलितानि कोरकितानि कङ्कोलफलानि कोशफलानि यत्र ते । कोरकिताः संजातमुकुलाः कुरवका यत्र । पल्लविताः संजातपल्लवा वल्लीका विडङ्गा यत्र । फुल्लन्मल्लिकाभिः शीतभीरुवृक्षैः ( रायवेलनाम्ना ख्यातैः ) उल्लासिनः शोभमानाः । सुजाता जातयो मालतीवृक्षा ( चमेलीनाम्ना ख्याताः ) येषु ते । विचित्राः शतपत्रिका वचावृक्षा येषु ते । ताण्डविताः पाण्डवः पिण्डिताश्चागुरूणां शिशपावृक्षाणां ( शीशमनाम्ना ख्यातानाम् ) करवीराणां हयमारकवृक्षाणां च वीरुधो लता येषु ते तादृशा आरामाः सन्ति ।

इतश्च—

नातिदूरे दक्षिणदिशि दृशं निवेशयतु देवः ॥ क ॥

(१)एतास्ताः परिपक्वशालिकलमाः सुस्वादुदीर्घेक्षवो
वप्रप्रान्तहरित्तृणस्थलचलत्पीनाङ्गगोमण्डलाः ।
दृश्यन्ते पुरतः सरोरुहवनभ्राजिष्णुनीराशयाः
प्रान्तोन्नादिविचित्रपत्रिनिचयाः सस्यस्थलीभूमयः ॥ ७१ ॥

अपि च—

(२)स्वःसौन्दर्यविडम्बि कुण्डिनमिदं सैषा विदर्भा नदी
सा चेयं वरदा स चायमनयोः पुण्याम्भसोः सङ्गमः ।
अस्यैवोन्मदहंसहारिणि तटे सेनास्थितिः कल्प्यतां
यस्मिन्मत्तकरीन्द्रकुम्भकषणक्रीडासहाः पादपाः' ॥ ७२ ॥

एवमनेकधा दर्शनीयप्रदेशप्रकाशनव्याजेन विनोदलीलां पल्लवयति पुष्कराक्षे, 'प्राप्ताः कुण्डिनपुरम्' इत्युच्छ्वसितहृदयो निषधेश्वरः परमपरितोषात्पारितोषिकप्रदानपूर्वमिदमवादीत् ॥ ख ॥

'भद्र, भवतः सौकुमार्यमाधुर्यमधुविश्रम्भसंदर्भितभङ्गश्लेषगर्भाभिर्गीर्भिराक्षिप्तमनसामस्माकमविदितखेद इव, अदृष्टसमविषमविभाग इव, अनुत्पादितस्वेदलव इव, अर्धगव्यूतिमात्रशेषोऽतिक्रान्तः क्रीडाविहारभूमिसमो महानपि मार्गः । समुचितश्चायं सेनानिवेशस्य सरित्सङ्गमोपकण्ठवनविभागः ॥ ग ॥

तथा हि—

(३)इह भवतु निवासः सैनिकानामिहापि श्रमतरलतुरंगग्रासयोग्या तृणाली।

---

एता इति ॥ विचित्रपत्रिणो विविधपक्षिणः ॥ ७१ ॥

---

(१) एता इति—परिपक्वाः शालिकलमा यासु ताः । सुस्वादवः सुरसाः दीर्घा विशाला इक्षवो यासु ताः । वप्रप्रान्तेषु गिरितटप्रान्तेषु यानि हरित्तृणानां स्थलानि प्रदेशास्तेषु चलन्ति पीनाङ्गानां पीवराणां गवां धेनूनां मण्डलानि समूहा यासु ताः । सरोरुहवनैः कमलवनैर्भ्राजिष्णवो भ्राजमाना नीराणां जलानामाशयाः पदानि यासु ताः । प्रान्तेषु तटप्रदेशे- पून्नादिनो नदन्तो विचित्राः पत्रिणां पक्षिणां निचया निवहा यत्र । ता एताः सस्यस्थलीभूमयो धान्यप्रदेशाः पुरतो दृश्यन्ते विलोक्यन्ते ॥ ७१ ॥

(२) स्वरिति—स्वःसौन्दर्यस्य स्वर्गीयरमणीयताया विडम्बि सदृशमिदं कुण्डिनं नगरं पुरमस्ति । सैषा प्रसिद्धा विदर्भा नाम्नी नदी सा चेयं वरदा नदी । अनयोः सरितोः पुण्याम्भसोः पवित्रजलयोरयं संगमः संमेलनम् । अस्यैव विदर्भावरदासंगमस्यैव । उन्मदाः प्रमदा हंसाश्च तैर्हारिणि रमणीये तटे तीरदेशे सेनास्थितिः सेनावस्थानं कल्प्यतां क्रियताम् । यस्मिंस्तटे मत्ताः प्रमत्ता ये करीन्द्रा गजेन्द्रास्तेषां कुम्भकषणं गण्डस्थलकण्डूयनमेव क्रीडा केलिस्तस्याः सहाः क्षमाः पादपा वृक्षाः सन्ति ॥ ७२ ॥

(३) इहेति—इह वरदाविदर्भासरित्संगमे सैनिकानां निवास आवासो भवतु । इह प्रदेशे श्रमेण मार्गजेन तरलाश्चञ्चलास्तुरंगा अश्वास्तेषां ग्रासयोग्या कवलनयोग्या तृणाली घा-

इह हि कवलयन्तः पल्लवान्वारणेन्द्रा विदधतु तरुखण्डे गण्डकण्डूयनानि ॥७३॥

इतश्चात्यन्तमनोहरतयास्माकमासनयोग्या सरित्सङ्गमोत्सङ्गभूमयः ॥क॥

तथा हि—

(१)अपसृताम्बुतरङ्गितसैकता निचुलमण्डपनृत्तशिखण्डिकाः।
कुररसारसहंसनिषेविताः पुलकयन्ति न कं पुलिनश्रियः ॥ ७४ ॥

इत्यभिधाय 'भद्र, यथाक्रममकृतान्योन्यसम्बाधकलहम्, अनुपद्रुततीर्थायतनम्, अलुण्ठितासन्नोद्यानम्, अच्छिन्नचैत्यद्रुमम्, अविच्छिन्नकमलवनं निवेशय सेनाम्' इति सेनापतिमादिदेश ॥ ख ॥

सोऽपि यथादिष्टमनुतिष्ठन्निदमवादीत् ॥ ग ॥

(२)'भजत बलसमूहाः खर्वदूर्वास्थलानि स्थविरशुकविशीर्यत्पत्त्रपिच्छच्छवीनि।
उपनदि मृदुवीचीवायुनाऽन्दोलितानां कुसुमितलतिकानामन्तरालेष्वमूनि ॥७५॥

अपिच—

(३)स्मरविहरणवेदीं षट्पदापानशालां तटमनु वनमालां सस्मया मास्म भाङ्क्षुः।
कमलवनविहारानन्तरं यत्र तैस्तैर्मदनमदविनोदैरासते राजहंसाः ॥ ७६ ॥

---

अच्छिन्नचैत्यद्रुमेति ॥ चैत्या ग्रामप्रदेशप्रसिद्धवृक्षाः ॥ ख ॥

भजतेति ॥ यद्यपि पक्षपिच्छयोरभिधानकृता न भेदः प्रत्यपादि तथापि महदेवान्तरम्। यतः पक्षशब्देन पक्षती एव। पिच्छशब्देन तदंशोऽभिधीयते ॥ ७५ ॥

स्मरेति ॥ तटमन्विति ॥ तटं लक्ष्यीकृत्य। सस्मयाः सगर्वाः सन्तो भवन्तो वनमालां मा स्म भाङ्क्षुः। अन्यत्सकलं भङ्गनिषेधकारणम्। आसते इति बहुवचनान्तम् ॥ ७६ ॥

---

सोऽपि विद्यते। इह हि वारणेन्द्राः करीन्द्राः पल्लवान् किसलयान् कवलयन्तः खादन्तस्तरुखण्डे वृक्षखण्डे गण्डयोः कपोलयोः कण्डूयनानि कषणविनोदान् विदधतु कुर्वन्तु ॥ ७३ ॥

(१) अपसृतेति—अपसृतानि दूरीभूतानि अम्बूनि नीराणि येभ्यस्तानि, अत एव च तरङ्गितानि संजाततरङ्गाकाराणि सैकतानि सिकतामयप्रदेशा यासां ताः। निचुलानां मण्डपेषु कुञ्जेषु नृत्ताः शिखण्डिका मयूरा यासां ताः। कुरराः सारसा हंसाश्च तैर्निषेविताः समाश्रिताः। पुलिनश्रियस्तीरप्रदेशशोभाः कं पुरुषं न पुलकयन्ति संजातरोमाञ्चं न कुर्वन्ति ॥७४॥

(२) भजतेति—हे बलसमूहाः सैनिका यूयमुपनदि नद्यां मृदुना कोमलेन वीचीनां तरङ्गाणां वायुना पवनेनान्दोलितानां कम्पितानां कुसुमितलतिकानां पुष्पितवल्लीनामन्तरालेषु मध्येषु स्थविराणां वृद्धानां शुकानां कीराणां विशीर्यन्तो जीर्यन्तः पक्षाः पिच्छानि च तेषां छविरिव छविः कान्तिर्येषां तानि। अमूनि खर्वाणां दूर्वाणां स्थलानि भजताश्रयत ॥ ७५ ॥

(३) स्मरेति—तटमनु तटं लक्ष्यीकृत्य। स्मरस्य कामस्य विहरणवेदीं केलिस्थानम्। षट्पदानां भ्रमराणामापानशालां पानभूमिं वनमालां वनावलीं सस्मयाः साश्चर्या भवन्तो मा स्म भाङ्क्षुर्न विनाशयन्तु। यत्र वनमालासु राजहंसाः कमलवनविहाराणामनन्तरं तैस्तैर्मदनमदस्य काममदस्य विनोदैरासते तिष्ठन्ति ॥ ७६ ॥

अपिच—

(१)सुरसदननिवासं सैनिका मास्म कुर्वन्सरिति मुनिकुटीनां भङ्गमुल्लुण्ठनं वा।
इह निषधनृपाज्ञा तस्य यः क्वापि कोऽपि क्लमसुषि तरुखण्डे खण्डनं वा करोति' ७७

एवमनुशासति बलानि बहूनि बहुधा बाहुके, तत्क्षणादुत्तम्भितैः प्रेङ्खत्पताकापटपल्लवविराजितैः प्रयाणयोग्ययन्त्रचित्रशालागृहैः सञ्चारिणि गन्धर्वनगर इव रमणीये, हरिततोरणैरुड्डीनशुकावलीमय इव, गैरिकारक्तोन्नमितपटकुटीभिरुत्फुल्लकिंशुकमय इव, श्वेतांशुकमण्डपैश्च ताण्डवितबृहत्पुण्डरीकखण्डमय इव, जाते सरित्सङ्गमोत्सङ्गसङ्गिनि शिबिरसंनिवेशे, क्रमेणाक्रान्तसकलदिङ्मुखेषु निषधेश्वरागमनवार्तानिवेदनदूतेष्विव विदर्भराजधानीधामनिर्गतेषु बहलसैन्यधूलिपटलेषु, रसति विपक्षक्षितिपालकर्णपुटीकटुनि नवजलधरध्वनितगम्भीरे तत्कालप्रहतशङ्खसखप्रयाणझल्लरीझांकृते, स्वयंवरायातसमस्तराजन्यचक्रकर्णकर्तरीषु पठ्यमानासु सानन्दवन्दारुवन्दिवृन्दारकवृन्देनोच्चैर्नलनाममालासु, क्षणादेवोत्तम्भितशातकुम्भस्तम्भभवने मृदुमसृणास्तरणभाजि जात्यवैदूर्यपर्यन्तपर्यङ्किकायां सुखनिषण्णे राजनि, सुस्थिते च परिजने, नातिदूरवर्त्तिनि कुण्डिने दण्डपाशिकस्योच्चैर्वागुदतिष्ठत् ॥ क ॥

(२)'सिच्यन्तां राजमार्गाः कलशमुखगलच्चन्दनाम्बुच्छटाभिः
स्तम्भाः प्रेङ्खत्पताकाः कुसुमपरिकरास्तोरणाङ्काः क्रियन्ताम् ।
स्थाप्यन्तां पूर्णकुम्भाः प्रतिनगरगृहं प्राङ्गणे धान्यमिश्रैः
सिद्धार्थैः स्वस्तिकालीर्लिखत नरपतिर्नैषधः प्राप्त एषः ॥ ७८ ॥

अपिच—

(३)सत्काञ्च्यश्चन्दनार्द्रस्तनकलशयुगामुक्तमुक्तावलीकाः

---

एवमिति ॥ वन्दारवित्यत्र वदिः स्तुत्यर्थः ॥ क ॥

---

(१) सुरेति—सैनिका भवन्तः सुरसदनेषु देवमन्दिरेषु निवासमावासं तथा सरिति नद्यां मुनिकुटीनां मुनिपर्णशालानां भङ्गं विनाशमुल्लुण्ठनं वा मा स्म कुर्वन् । इह तस्य सैनिकस्य निषधनृपस्य नलस्याज्ञा समादेश आस्ते । यः कोऽपि सैनिकः क्वापि क्लमसुषि क्लान्तिच्छिदि तरुखण्डे वृक्षखण्डे खण्डनं करोति विदधाति । यः सैनिकस्तरुखण्डनं कुरुते तदर्थमियमाज्ञेति भावः ॥ ७७ ॥

(२) सिच्यन्तामिति—कलशमुखेभ्यो घटमुखेभ्यो गलन्त्यः पतन्त्यश्चन्दनमिश्रितजलानां छटाभिर्धाराभी राजमार्गा घण्टापथाः सिच्यन्तामार्द्रीक्रियन्ताम् । तोरणाङ्का बहिर्द्वाराणि कुसुमानि पुष्पाणि परिकरा येषां ते तादृशाः क्रियन्तां विधीयन्ताम् । प्रतिनगरगृहं नगरगृहेषु प्राङ्गणे धान्यमिश्रैर्धान्ययुतैः सिद्धार्थैः सितसर्षपैः पूर्णकुम्भाः पूर्णकलशाः स्थाप्यन्ताम् । स्वस्तिकालीः स्वस्तिकचिन्हावलीर्लिखत । एष नैषधो नलो नरपतिर्भूपः प्राप्तः समायातः ॥ ७८ ॥

(३) सदिति—सत्काञ्च्यः प्रवरमेखलाः । चन्दनेनार्द्रौ स्तनकलशयुगौ कुचकुम्भयुगौ तयोरामुक्तास्त्यक्ता मुक्तावल्यो मुक्ताहारा याभिस्ताः । तथा सोत्तंसाः साभरणाः । हंस-

पात्राण्यदाय दूर्वादलदधिकुसुमोन्मिश्रसिद्धार्थभाञ्जि ।
सोत्तंसा हंसपिच्छच्छविवसनभृतो वर्तिताश्चर्यचर्या
नार्यो निर्यान्तु तूर्यध्वनिलयललितं गीतमुच्चारयन्त्यः ॥ ७९ ॥

अपिच—

(१)अपि भवत कृतार्थाः पौरनार्यश्चिरेण व्रजतु निषधनाथश्चक्षुषां गोचरं वः ।
ध्रुवमयमवतीर्णः स्वर्गलोकादनङ्गो हरचरणसरोजद्वन्द्वलब्धप्रसादः ॥ ८० ॥

॥ इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरणसरोजाङ्कायां षष्ठ उच्छ्वासः ॥ ६ ॥

---

सत्कान्त्येति ॥ आमुक्तं योजितम् ॥ ७९ ॥

इति विषमपदप्रकाशमेतं दमयन्त्यां तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥ १ ॥

इति श्रीचण्डपालविरचिते दमयन्तीकथाविवरणे षष्ठ उच्छ्वासः समाप्तः ॥

---

पिच्छस्य छविरिव छविर्यस्य तादृशं वस्त्रं बिभ्रतीति तादृश्यः । वर्तिता विहिताश्चर्यस्य चर्या याभिस्ताः । गीतं गानमुच्चारयन्त्यो नार्यो रमण्यो तूर्यध्वनिलयेन वाद्यध्वानलयेन ललितं रम्यं यथा तथा निर्यान्तु बहिरागच्छन्तु ॥ ७९ ॥

( १ ) अपीति—पौरनार्यः पौरवनिताश्चिरेण बहोः कालात् कृतोऽर्थो याभिस्ताः कृतकृत्या भवत । निषधनाथो नलो वो युष्माकं चक्षुषां नेत्राणां गोचरं विषयं व्रजतु गच्छतु । पौरनारीणां चिराभिलषितनलदर्शनानन्दात्कृतार्थता । हरचरणसरोजद्वन्द्वेन हरचरणारविन्दयुगेन लब्धः प्राप्तः प्रसादः प्रसन्नता येन सः । ध्रुवं नियमेनायं स्वर्गलोकादनङ्गः काम एवावतीर्ण आगतः ॥ ८० ॥

## सप्तम उच्छ्वासः ।

एवमविश्रान्तमतितारस्वरेण पुरः पौरपुरंध्रिमण्डलान्युद्दण्डयतो दण्डपाशिकस्य कलकलमाकर्णयत्यास्थानस्थिते राजनि, प्रविश्य (१)प्रणामप्रेङ्खोलितगलकन्दलावलम्बितजाम्बूनदस्थूलश्रृङ्खलास्फालितवक्षःस्थलः स्थविरवयाः सवेषः प्रतीहारः सविनयमुक्तवान् ॥ क ॥

देव, धृतमाङ्गल्यकल्पवेषाः पुष्पफलाक्षतपूर्णस्वर्णपात्रपाणयः पुरःस्थिता अधीयाना ब्राह्मणाः कुण्डिनपुरपौराः पुरंध्रयश्च देवदर्शनार्थितया द्वारि सेवावसरमनुपालयन्ति ॥ ख ॥

कथयन्ति चैवमदूरे विदर्भेश्वरोऽपि देवं द्रष्टुमायाति ॥ ग ॥

लग्न इव श्रूयते च शङ्खस्वनविदर्भितो विदर्भोपकण्ठे पठद्वन्दिवृन्दकोलाहलः ॥ घ ॥

'तदादिशतु देवो यथाकर्त्तव्यम्' इत्यभिधाय स्थिते तस्मिन् 'भद्रभूते, त्वरितं प्रवेशय विदर्भाधिपस्य परिजनं स्वयमपि तदर्धपथमनुसर' इति नलो दौवारिकमादिदेश ॥ ङ ॥

सोऽपि 'यथाज्ञापयति देवः' इत्यभिधाय यथादिष्टमकरोत् ॥ च ॥

(२)अनन्तरमनतिचिरादितस्ततो दोधूयमानचारुचामरकलापपवननर्तितकर्णकुवलयः, वल्गुवल्गनोल्ललनलङ्घनलास्यलीलापदैः पथि प्लवमानमिव तरलतुरंगमधिरूढः, कनककलशशिखरैरेकदेशस्फुरितविद्युत्स्तवकैरकाण्डाडम्बरितमेघमण्डलैरिव मायूरातपत्रखण्डैराच्छादितगगनान्तरालः, शस्त्रोद्वहनकिणाङ्कितकठोरकण्ठोपकण्ठैः कठिनप्रकोष्ठलुठल्लोहवलयैरूर्ध्वबद्धोद्भट-

---

एवमिति ॥ उद्दण्डयतो गाढमुत्साहयतः । दण्डपाशिकस्तलारः । दण्डपाशोऽस्त्यस्येति । 'अत इनिठनौ' इति ठन् । जाम्बूनदस्य कनकस्य स्थूला श्रृङ्खला आभरणविशेषः ॥क॥

देवेति ॥ धृतो माङ्गल्ये कल्पो दक्षो वेषो मण्डनं यैः ॥ ख ॥

तदति ॥ भद्रभूतिरिति द्वाःस्थस्य नाम । तस्य चामन्त्रणम् ॥ ङ ॥

अनन्तरमिति ॥ वल्गु यद्वल्गनं विक्रममाणता । उल्ललनमुच्चैर्विलसनम् । लङ्घनं फाला । लास्यं नृत्यभूमिः । तेषु लीलापदैः प्लवमानं तरन्तमिव । आसनस्थैर्येणानुद्धातत्वत्वात् । मायूरातपत्रसमूहानां मेघमण्डलानि, सौवर्णकलशानां विद्युत्स्तव उपमानम् ॥

---

(१) प्रणामेति—प्रणामेन नत्या प्रेङ्खोलिता चलिता गलकन्दले कण्ठदेशेऽवलम्बिता जाम्बूनदस्य सुवर्णस्य स्थूला पीवरा या श्रृङ्खला तयास्फालितं ताडितं वक्षःस्थलमुरोदेशो यस्य सः ।

(२) अनन्तरमिति—दोधूयमाना अत्यन्तमान्दोल्यमानाश्चारुचामरास्तेषां कलापानां संघानां पवनेन वायुना नर्तितमान्दोलितं कर्णकुवलयं कर्णाभरणीकृतकमलं यस्य सः । शस्त्राणामुद्वहनस्य धारणस्य किणैश्चिन्हैरङ्किताः संजातचिन्हाः कठोरकण्ठोपकण्ठाः कठिनगलप्रदेशा यासां तास्ताभिः । मनाङ् मृदुमृदङ्गध्वनिस्तेन करम्बिते संमिश्रिते ।

जूटकैरलककरालमौलिभिरधोरुकपरिधानैर्निशातकुन्तपाणिभिरमितस्त्वरितपातिभिः पत्तिभिरनुगम्यमानः, मनाङ्मृदुमृदङ्गध्वनिकरम्बिते कोमलकांस्यतालशालिनि वांशिकवाद्यमानवंशनिस्वने दत्तकर्णः, कर्णिकारगौराङ्गोऽङ्गणस्य नातिदूरेऽप्यदृश्यत भीमभूमिपालः ॥ क ॥

ततश्च चामरग्राहिणीहस्तपल्लवमवलम्बमानः सहेलमुत्थाय प्रथममुत्थितेन(१)संभ्रमवशवलिगतवक्षःस्थलावलम्बितकुसुमदाम्ना विसर्पिकर्पूरकुङ्कुममिलन्मृगमदामोदेन त्वरितसंपातपतत्पटवासपांसुना सामन्तचक्रेण परिकरितः कतिपयपदानि निषधेश्वरस्तदभिमुखमगात् ॥ ख ॥

सोऽपि सत्वरोपसृतस्य ताम्बूलप्रसेविकावाहिनः पुरुषस्य स्कन्धमवष्टभ्य दूरादेव तुरंगपृष्ठादवातरत् ॥ ग ॥

एवमन्योन्यनयनसंपातस्मिताननौ समकालमीषन्नमितमौलमण्डलौ समसमयप्रसारितभुजौ (२)सरभससमाश्लेषवशविशीर्यमाणहारावलीगलन्मुक्ताफलच्छलेनाङ्गेष्वमान्तमिव प्रथमप्रेमामृतनिष्यन्दिविन्दुविसरमुद्गिरन्तावन्योन्यमाशिश्लिषतुः ॥ घ ॥

तथाविधे च व्यतिकरे, प्रथमे प्रेक्षकाणां दक्षिणोत्तरदिक्पालयोर्धर्मराजधनदयोरिव समागमे महानयनोत्सवो हर्षोत्कर्षकलकलश्च ॥ ङ ॥

(३)तदनु पुनः प्रधावितप्रतीहारोपनीतम्, अतिविचित्रत्रिभङ्गिभङ्गोत्कीर्णकर्णाटिकारूपरमणीयस्तम्भिकावष्टम्भम्, तज्जृम्भमाणमाणिक्यमकरमुख-

---

कठिनेति ॥ राजपुत्रा हि प्रकोष्ठे मणिकूर्परान्तरे दार्ढ्याय लोहवलयानि धारयन्ति । जूटकः केशबन्धविशेषः । अलकाः कुटिलाः करालाः सटालत्वाद्रौद्रा मौलयः संयतकेशा येषाम् । अर्धे ऊरू प्रमाणमस्य तदधोरुकम् । येन वाससा कटीप्रभृति अधोरुपर्यन्तमाच्छाद्यते ॥ क ॥

ततश्चेति ॥ पटवासो वासःसुरभीकरणद्रव्यम् । परिकरितः परिवारितः ॥ ख ॥

सोऽपीति ॥ चर्मनिर्मितं पर्णपूगाद्यास्पदं प्रसेविका स्थगितेति ख्यातिः ॥ ग ॥

तदन्विति ॥ सिंहासनादौ ह्युत्तम्भनस्तम्भिकासु पश्चिमभागे त्रिभङ्गिभङ्गेन स्थानकविशेषवैचित्र्येण स्त्रीरूपमुत्कीर्यते । मौक्तिकसरो मुक्ताहारः । व्यालः सिंहादिर्हिंस्रसत्त्वम् ।

---

(१) संभ्रमेति—संभ्रमवशेन वलिगतं चलितं वक्षःस्थलावलम्बितमुरोदेशस्थं कुसुमदाम पुष्पमाला यस्य तत् तेन ।

(२) सरभसमिति—सरभसं यथा तथाश्लेषवशेन विशीर्यमाणा या हारावली मुक्ताहारस्तस्या गलतां पततां मुक्ताफलानां मौक्तिकानां छलेन ।

(३) तदिति—अतिविचित्रेण त्रिभङ्गिभङ्गेन त्रिवक्रस्थानकविशेषेणोत्कीर्णं कर्णाटिकायाः कर्णाटकरमण्या रूपं तेन रमणीयो मनोरमः स्तम्भिकावष्टम्भो यस्य तत् । तस्य सिंहासनस्य जृम्भमाणं माणिक्यमकरस्य मणिनिर्मितमीनस्य मुखमाननं तत्र मुक्तासरैर्मुक्ताहारैर्विराजितं शोभितम् । अपूर्वकर्मणा युक्तिविशेषेण निर्मिता रचिता या भव्या सुन्दरी व्यालावली सर्पावली तस्याः कीर्णैर्मुखैरलङ्कृतं विराजितम् ।

मुक्तमौक्तिकसरविराजितम्, अपूर्वकर्मनिर्मितभव्यव्यालावलीकीर्णमुखालंकृतम्, उच्चकाञ्चनसिंहासनद्वितयमुभौ भेजतुः ॥ क ॥

अन्योन्यकुशलप्रश्नसुखालापव्यतिकरविरामे च विदर्भेश्वरो निषधनाथमवादीत् ॥ ख ॥

(१)'अद्यास्मत्कुलसंततिः सुकृतिनी धन्याद्य दिग्दक्षिणा
पुण्यप्राप्यसमागमातिथिजना जाताः कृतार्थाः श्रियः ।
श्लाघ्यं जन्म च जीवितं च निजमप्यद्यैव मन्यामहे
यत्रास्मत्सुकृतोदयेन बहुना यूयं गृहानागताः ॥ १ ॥

(२)इतः प्रभृति च—
आ ब्रह्मावधिविस्तरत्कविगिरो गीर्वाणकर्णातिथेः
कीर्तेः पूर्णकलेन्दुसुन्दररुचो यास्याम्यहं पात्रताम् ।
किं चान्यज्जनितक्लमोऽप्ययमभूदाकण्ठतृप्तस्य मे
युष्मत्सङ्गसुखामृतेन सफलः संसारचक्रभ्रमः' ॥ २ ॥

इत्यभिधाय प्रवणं प्रणयस्य, प्रगुणं गुणानाम्, अनुकूलं कुलक्रमस्य, योग्यं भाग्योदयस्य, सदृशं देशकालस्य, समानं मानोत्सवसंततेः, सरूपं रूपसंपदाम्, उचितमाचारस्यातिथेरातिथेयमगर्वः कुर्वन्, दुर्वारवैरिवारणान्वारणान्, वायुवेगातुरगांस्तुरगान्,(३)समुल्लसितांशुमञ्जरीजालजनितेन्द्रचापचक्रभ्रमममप्रमाणं माणिक्यम्, एकत्र ग्रथितताराप्रकरानुकारान्हारान्,

---

तदावली काष्ठदन्तादिनिर्मिता शोभार्थं क्रियते ॥ क ॥

अद्येति ॥ पुण्यैः प्राप्यः समागमो येषां तथोक्ता अतिथिजना यासु । श्रियां ह्येतदेव फलम् । यदतिथयः सत्क्रियन्ते ॥ १ ॥

आब्रह्मेति ॥ कविवर्ण्यायाः स्वर्गतायाः इन्दुशुभ्रायाः कीर्तेः पात्रमहम् ॥ २ ॥

इत्यभिधायेति ॥ (अतिथेः) तस्य राज्ञोऽगर्वः सन्नातिथेयं कुर्वन्भीमभूपो वार-

---

(१) अद्येति—अस्मत्कुलसंततिरस्मद्वंशप्रजा । अद्य सुकृतिनी पुण्यवती । दक्षिणा दिगद्य धन्या प्रशंसार्हा । पुण्यैः सुकृतैः प्राप्यो लभ्यः समागमः संमिलनं येषां तादृशा अतिथिजनाः प्राघुर्णिका यासु ताः । श्रियो राजलक्ष्म्यः कृतार्थाः सफला जाताः । तथा निजं स्वीयं जन्मोत्पत्तिर्जीवितं चाद्यैव श्लाघ्यं प्रशस्यं मन्यामहे मन्महे । यत्र बहुनात्यन्तिकेनास्मत्सुकृतोदयेन यूयं गृहानागताः समायाताः ॥ १ ॥

(२) आ ब्रह्मेति—अहमाब्रह्मावधि ब्रह्मपर्यन्तं विस्तरन्ती कविगीर्यस्यां सा तस्याः । गीर्वाणा देवास्तेषां कर्णातिथेः श्रवणविषयिण्याः । तथा पूर्णकलेन्दुवत् पूर्णचन्द्रवत् सुन्दरी मनोरमा रुक् कान्तिर्यस्यास्तस्याः कीर्तेर्यशसः पात्रतां योग्यतां यास्यामि । अन्यत्किम् । जनित उत्पादितः क्लमः श्रमो येन सः । अयं संसारचक्रे जगति भ्रमो भ्रमणं युष्मत्सङ्गसुखमेवामृतं तेनाकण्ठं तृप्तस्य मे सफलः कृतार्थो जातः ॥ २ ॥

(३) समुल्लसितेति—समुल्लसितानां विकसितानामंशुमञ्जरीणां किरणमञ्जरीणां जालैर्निवहैर्जनितः कृत इन्द्रचापचक्रस्य भ्रमो भ्रान्तिर्येन तत् ।

उज्ज्वलभांसि वासांसि, सलावण्याः पण्यनारीश्च स्वयमुपढौकयांचकार॥ क॥

प्रथमसमागमेऽप्यप्रमेयप्रेमारम्भरभसोल्लासितहृदयः पुनः सोत्कर्षहर्षोद्भेदगद्गदाक्षरमिदमवादीत्॥ ख॥

(१) आसेतोः कपिकीर्तनाङ्कशिखरादाराच्च विन्ध्यावधे-
रा पूर्वापरसिन्धुसीमविषयस्त्वन्मुद्रया मुद्यताम्।
अद्यास्मद्गृहमागतस्य भवतो जाता विधेया वयं
स्वीकारः क्रियतां किमन्यदपरं प्राणेषु चार्थेषु च॥ ३॥

एवमुपबृंहयति प्रेम, प्रकाशयति प्रियंवदताम्, उद्योतयत्युदारताम्, दर्शयत्यादरम्, आविर्भावयति सर्वभावम्। भीमभूभुजि नलोऽपि 'सरलस्वभावः स्वच्छार्द्रहृदयोऽयं महानुभावः' इति चिन्तयन् 'अलमलमखिलात्मसर्वस्वोपनयनेन, भवद्दर्शनमेवास्माकमिह सार्णवसुवर्णपूर्णवसुमतीलाभादपि परमो लाभः। नहि प्रियतमदर्शनसुखाद्वित्तलाभसुखमतिरिच्यते। नच भवद्भिभवेऽप्यस्माकं परस्वबुद्धिर्नापि भवच्छरीरेऽप्यनात्मभावः। किंचान्यदेवंविधसूक्तसूनृतामृतगर्भगीर्भिरानन्दयतास्मन्मनो महानुभावेन किं न कृतमभिहितं वा प्रणयोचितम्" इति ब्रुवाणस्तं बहु मानयामास॥ ग॥

एवंविधे च व्यतिकरे वैतालिकः प्रस्तुतमपाठीत्॥ घ॥

(२) 'आपूर्वापरदक्षिणोत्तरककुप्पर्यन्तवेलावना-
दाज्ञां मौलिषु मालिकामिव नृपाः कुर्वन्तु दीर्घायुषोः।
ब्रह्मस्तम्बविलम्बिकीर्तिलतयोर्विस्तारिलक्ष्मीकयो-
रन्योन्यस्य दिनानि यान्तु युवयोः स्नेहेन सौख्येन च॥ ४॥

---

...दिकमुपढौकयांचकार। वारणा निषेधका गजाश्च॥ क॥

आसेतोरिति॥ कपिकीर्तनाङ्कानि शिखराणि यस्येति सेतुविशेषणम्। सेतोः कपिभिः कृतत्वात्॥ ३॥

आपूर्वेति॥ ब्रह्मस्तम्बो ब्रह्माण्डम्॥ ४॥

---

(१) आसेतोरिति—कपिकीर्तनाङ्कानि कपीनां वानराणां कीर्तनस्य कीर्तेरङ्कानि चिन्हानि शिखराणि अग्रभागा यस्यास्तस्याः। आसेतोः सेतुपर्यन्तम्। दक्षिणभूभागस्य परमावधिरियमित्यर्थः। तथा विन्ध्यावधेर्विन्ध्याचलावधेराराव समीपाद् आपूर्वापरसिन्धुसीमविषयः पूर्वापरसिन्धुपर्यन्तदेशस्त्वन्मुद्रया मुद्रयतां त्वदायत्तो जायतामित्यर्थः। अस्मद्गृहमागतस्य भवतोऽद्य वयं विधेया आज्ञाकारिणो जाताः। अन्यत्किम्—प्राणेषु तथार्थेषु द्रव्येषु स्वीकारः क्रियताम्। मदीयं द्रव्यं प्राणाश्च मदीया भवत्स्वामिका इति भावः॥ ३॥

(२) आपूर्वेति—पूर्वा प्राची अपरा प्रतीची दक्षिणावाची उत्तरोदीची याः ककुभस्तत्पर्यन्तं तदवधि यद्वेलावनं समुद्रतीरप्रदेशस्तस्मादारभ्य नृपा राजानो दीर्घायुषोश्चिरजीविनोर्युवयोराज्ञां समादेशं मालिकामिव स्रजमिव मौलिषु कुर्वन्तु विदधतु। तथा ब्रह्मस्तम्बे ब्रह्माण्डे विलम्बिनी लम्बमाना कीर्तिलता ययोस्तयोः। विस्तारिणी प्रसरणशीला लक्ष्मीः शोभा ययोस्तयोर्युवयोरन्योन्यस्य दिनानि दिवसाः स्नेहेन प्रेम्णा तथा सौख्येनानन्देन यान्तु गच्छन्तु॥ ४॥

एवमुपक्रमाविरुद्धविद्वदालापलीलया परस्परमाश्यानतुहिनशिलाशकलाकारकर्पूरपारीपरिकरितताम्बूलार्पणप्रणयेन च परितुष्टपरिजनपरिहासगोष्ठ्या च किमप्यभिनवम्, किमपि पुरातनम्, किमप्युत्पाद्यम्, किमपि यथावस्थितं जल्पाकजनजल्पितं भावयन्तौ तस्थतुः स्थवीयसीं वेलाम् ॥क॥

अनन्तरमनुसरति मध्यभागमम्बरस्यांशुमालिनि नलः 'स्वगृहानलंकुर्वन्तु भवन्तः' इति प्रश्रयेण विदर्भेश्वरं विससर्ज ॥ ख ॥

गते च तस्मिन् 'अहो वात्सल्यम्, अहो परमौदार्यम्, अहो लोकवृत्तकौशलम्, अहो वाग्विभववैदग्ध्यम्, अहो प्रश्रयोऽस्य विदर्भराजस्य' इति तद्गुणप्रवणाः कथाः कुर्वन्नाप्तजनपरिजनेन सह मुहूर्तमिवासांचक्रे ॥ग॥

चिन्तितवांश्च—

(१)'अनुगुणघटनेन यद्यपीयं भवति हि हस्तगतेव कार्यसिद्धिः ।
भयतरलभुजंगवक्रवृत्तेस्तदपि न विश्वसिमो वयं विधातुः ॥ ५ ॥

तथाहि—

(२)अङ्गाः कङ्ककलिङ्गवङ्गमगधाः सर्वेऽप्यमी पार्थिवा
दिक्पालाश्च मरुत्पतिप्रभृतयः कन्यार्थिनः संगताः ।
नो विद्मः कथमेष्यतीह घटनां कार्यं यतस्तत्क्षणा-
न्नानाभङ्गिभिरिन्द्रजालसदृशं दैवं हि चित्रीयते ॥ ६ ॥

अथवा—

(३)का नाम तत्र चिन्ता प्रभवति पुरुषस्य पौरुषं यत्र ।

---

एवमिति ॥ आश्यानमविलीनं यत्तुहिनं हिमं तस्य शिलाशकलं तदाकारस्य कर्पूरस्य पारी शकलं तया परिकरितस्य सम्बद्धस्य ताम्बूलस्यार्पणप्रणयेन । अतिशयेन स्थूला स्थवीयसी । 'स्थूलदूर–' इत्यादिना सिद्धम् ॥ क ॥

अन्विति ।। अनुगुणानामनुकूलानां घटनेन संयोजनेन हि स्फुटं सिद्धिर्हस्तगतैव भवति । भयेन तरलो लोलः । तरलत्वं चात्र वक्रतातिशयहेतुः ॥ ५ ॥

का नामेति ॥ यत्र कार्ये पुरुषस्य पौरुषं भवति तत्र का चिन्ता, नैवेत्यर्थः । विधौ

---

(१) अन्विति—यद्यपीयं दमयन्तीपरिणयनरूपा कार्यसिद्धिरनुगुणघटनेनानुकूलसंयोगेन हस्तगतेव भवति जायते । तथापि भयेन भीत्या तरलो लोलो यो भुजङ्गः सर्पस्तद्वद्वक्रा कुटिला वृत्तिर्व्यापारो यस्य तस्य विधातुर्विधेर्वयं न विश्वसिमो विश्वासं कुर्मः ॥ ५ ॥

(२) अङ्गा इति—अङ्गा अङ्गदेशस्थाः कङ्काः कलिङ्गा वङ्गा मगधाश्च सर्वदेशस्था इति भावः । अत्र देशपदैस्तत्स्था राजानो लक्ष्यन्ते "कलिङ्गः साहसिकः" इतिवत् । एते सर्वेऽप्यमी पार्थिवा राजानः । तथा मरुत्पतिप्रभृतय इन्द्रादयो दिक्पालाश्च कन्यार्थिनो दमयन्त्यभिलाषिणः सन्तः संगता अत्र स्वयंवरे समायाताः । अस्मत्कार्यं नलविवाहरूपं कार्यं घटनां संयोगं कथमेष्यति यास्यतीति नो विद्मो न जानीमः । यतो हि तत्क्षणादल्पकालादेव नानाभङ्गिभिरिन्द्रजालसदृशं दैवं भाग्यं चित्रीयते विचित्रतामापद्यते ॥ ६ ॥

(३) केति—यत्र विषये पुरुषस्य जनस्य पौरुषमुद्योगः प्रभवति तत्र विषये चिन्तैव

वाङ्मनसयोरविषये विधौ च चिन्तान्तरं किमिह' ॥ ७ ॥

एवमनेकवितर्कभङ्गभाजि भूभुजि, भुजबलशालिषु विसर्जितेषु सेवकसामन्तेषु, विरलीकृते परितः परिजने, परिहासपेशलालापाप्तजनगोष्ठीप्रक्रमेणातिक्रान्ते स्तोकसमये, भूरिभव्याभरणावरणरमणीयरूपाः, काश्चिदार्द्रक्रमुकफलहस्ताः, काश्चित्कक्षावलम्बिततताम्बूलीपत्रपिण्डकरण्डकाः, काश्चित्पिहितपट्टांशुकपटलिकापाणयः, काश्चित्काश्मीरकरम्बितकस्तूरिकामोदामन्दचन्दनभाञ्जि भाजनानि भजमानाः, काश्चिदवाननालिकेरजम्बीरबीजपूरकपूरितपात्रीपाणयः काश्चिदसंख्यखण्डखाद्यविशेषानमूल्यमाङ्गल्यमाल्याभरणानि च सकौतुकमादाय दमयन्त्या प्रहिताः प्रथमप्रबोधितप्रतीहारसूचिताः प्रविविशुर्न्युब्जाः कुब्जिका वामनिकाश्च ॥ क ॥

प्रविश्य च सविस्मयाः स्मररूपातिशायिनं नरपतिमवलोक्य 'साधु भोः स्वामिनि, साधु । स्थानेऽभिनिविष्टासि, योग्ये जाताग्रहासि, पात्रे जातस्पृहासि, लप्स्यसे जन्मफलम्, अवाप्स्यसि स्त्रीस्वभावभाग्यम्, अनुभविष्यसि यौवनसुखानि, मानयिष्यसि संसारफलमहोत्सवम् । अहो वन्दनीया सा कापि पुरुषरत्नाकरकुक्षिर्जननी, यस्यां सकलसंसारनरहारावलीमध्यमहानायकोऽयमुत्पन्नः'इत्यवधारयन्त्यो मनाङ्नमितमौलिदोलितसीमन्तमुक्ताफलाः 'स्वामिन्नयमस्मदीयः प्रणामः, अन्यापि कापि काचित्प्रणमति' इत्यभिधाय स्मयमानवदनकमलाः सलीलमवनिपालं प्रणेमुः ॥ ख ॥

अन्योन्यकृतसंबोधनाश्च सहर्षमिदमवोचन् ॥ ग ॥

(१)'हंहो हंसि चकोरि चन्द्रवदने चन्द्रप्रभे चन्दने
चम्पे चङ्गि लवङ्गि गौरि कलिके कक्कोलिके मालति ।
एत प्राप्नुत जन्मजीवितफलं लावण्यलक्ष्मीनिधौ
सौभाग्यामृतनिर्झरे नरपतौ निर्वान्तु नेत्राणि वः ॥ ८ ॥

---

दैवे पुनर्वाङ्मनसयोरगोचरे किं चिन्तान्तरम्, तदेव प्रमाणमित्यर्थः । अन्तरशब्दो विशेषार्थः । उभयथापि चिन्ता न कार्येति भावः । वाक् च मनश्च वाङ्मनसे । 'अचतुर-' इति सूत्रेण सिद्धम् ॥ ७ ॥

एवमिति ॥ अवानानि सार्द्राणि नालिकेरजम्बीरबीजपूराणि तैः पूरिता या पात्री सा पाणौ यासाम् । वानं शुष्कं फलम् । न्युब्जा अधोमुख्यः पश्चान्नम्योगः । दिदृक्षारसेनोर्ध्ववदना इति भावः । एतच्च कुब्जिकादीनां विशेषणम् ॥ क ॥

हंहो इति ॥ हंहो इति संबोधने । एत आगच्छत ॥ ८ ॥

---

का को विचारो नामेति संभावनायाम् । तथा वाङ्मनसोरविषयेऽगोचर इह विधौ दैवे च चिन्तान्तरं विचारः कः । उभयथापि चिन्ता न कार्येति भावः ॥ ७ ॥

(१) हंहो इति—हंहो सम्बोधने हंसी चकोरी चन्द्रवदना चन्द्रप्रभा चन्दना चम्पा चङ्गी लवङ्गी गौरी कलिका कक्कोलिका मालती चेति सखीनां नामधेयानि । एतासामत्र सम्बोधनानि । यूयमेतागच्छत । जन्मनो जीवितस्य च फलं प्राप्नुत समायात । लावण्यलक्ष्मी-

अपि च—

(१)कुन्दे सुन्दरि चन्द्रि नन्दनि हले दिष्ट्याद्य वर्धामहे
देव्याः सोऽयमनङ्गसुन्दरवपुः प्राणेश्वरः प्राप्तवान् ।
तस्याः संप्रति यत्कृते कृशतनोः क्रीडावने शाखिनां
दीर्घश्वासमरुद्भिरग्निपरुषैर्म्लायन्ति ते पल्लवाः ॥ ९ ॥

अपिच—

(२)यं श्रुत्वैव मनोभवालसदृशा देव्या धृतोन्मादया
नीयन्ते गृहदीर्घिकातटतरुच्छायाश्रये वासराः ।
प्राप्तः शोणसरोजपत्रनयनो निःशेषसीमन्तिनी-
भ्राम्यन्नेत्रपतत्रिविश्रमतरुः सोऽयं नलो नैषधः' ॥ १० ॥

एवमन्योन्यमभिधाय समीपमुपसृतास्ताः क्षितिपतिस्त्वनुरागतरङ्गतरत्तारकेण सादरं दूरोत्क्षिप्तपक्ष्मणा चक्षुषा संतोषपुञ्जमञ्जूषिका इव, आनन्दकन्दलीरिव, अमृतपङ्कपुत्रिका इव, मधुमासविकसितसहकारमञ्जरीरिव, दमयन्तीप्रेषिताः सस्पृहमवलोकयन् 'इत एत कुशलं तत्रभवतीनाम्, उपविशत, गृह्णीत ताम्बूलम्, आवेदयत भवत्स्वामिनीसंदेशम्,' इति ससंभ्रमं संभाषयामास ॥ क ॥

ताश्च "महानयं प्रसादः" इति ब्रुवाणाः समुपविश्य 'राजाधिराज, रा-

---

कुन्द इति ॥ चन्द्रगन्तादाह्लादार्थाद्गौरादित्वान्ङीप् । वर्धामह इति हर्षातिशयोक्तिः ॥ ९ ॥

यं श्रुत्वेति ॥ नेत्राण्येव पतत्रिणः पक्षिणस्तेषां विश्रामतरुः ॥ १० ॥

एवमिति ॥ एवं परस्परमभिधाय समीपं गतास्ताः प्रेमोर्मिचञ्चत्कनीनिकेन सादरं दूरोत्क्षिप्तपक्ष्मणा चक्षुषा सस्पृहमवलोकयन् क्षितिपतिः ससंभ्रमम् 'इत एत—' इत्याद्यालपत् ॥ संतोषपुञ्जमञ्जूषिका इत्यादि तासां विशेषणानि ॥ क ॥

ताश्चेति ॥ ननामेति । देवस्य, अपघने शरीरे न नामेत्यभ्युपगमगर्भायां पृच्छा-

---

निधौ सौन्दर्यशोभास्पदे । सौभाग्यमेवामृतं तदर्थं निर्जरे देवे नरपतौ नैषधे वो युष्माकं नेत्राणि नयनानि निर्वान्तु तृप्यन्तु ॥ ८ ॥

( १ ) कुन्द इति—कुन्दे सुन्दरि चन्द्रि नन्दनि हले इति सखीनां सम्बोधनानि । अद्य दिष्ट्या दैवेन वर्धामहे । सोऽयमनङ्गवत्कामवत्सुन्दरं रम्यं वपुर्यस्य सः । देव्या दमयन्त्या अग्निपरुषैर्वह्निवत्कठिनैर्दीर्घश्वासपवनैः क्रीडावने क्रीडारामे शाखिनां तरूणां ते पल्लवाः किसलया म्लायन्ति मलिना भवन्ति ॥ ९ ॥

( २ ) यमिति—यं नलं श्रुत्वैव मनोभवेन कामेनालसा मन्दा दृक् दर्शनं यस्यास्तया । धृत उन्मादोऽनवधानता यया तया । देव्या दमयन्त्या वासरा दिनानि गृहदीर्घिकातटे गेहवापीतीरे तरूणां वृक्षाणां छायाश्रये छायायां नीयन्ते याप्यन्ते । शोणसरोजस्य रक्तकमलस्य पत्रवद् दलवन्नयने नेत्रे यस्य सः । निःशेषसीमन्तीनां समग्रनारीणां भ्राम्यन्ति नेत्राण्येव नयनान्येव पतत्रिणः पक्षिणस्तेषां विश्रामतरुर्निवासाश्रयः सोऽयं नैषधो नलो राजा प्राप्तः समायातः ॥ १० ॥

जीवदलदीर्घाक्षी क्षेमवार्त्तां पृच्छति 'न नाम देवस्यापघने घर्मांशुघर्मोर्मिनिर्मितः कोऽपि खेदः समपद्यत, न वा समविषममार्गलङ्घनश्रमेण कापि परिमाथिनी परिजनस्य ग्लानिरभूत्, बहूनि दिनानि देवेनाध्वनि विलम्बितम्। इदं च तया प्राणेश्वरस्य प्रियं प्राभृतं प्रहितम्, इदमुक्तम्, इदमेकान्तसंदिष्टम्, इदं प्रकाशप्रश्रयापलीलायितम्, इति राजानामञ्जसा जजल्पुः ॥ क ॥

सोऽपि स्मरव्यापारकोरकिताभिः शृङ्गाररससेकपल्लविताभिर्मुग्धहिमांशुमञ्जरिताभिरमृतच्छटाभिरिव वाग्भिः किमपि सरलाभिः, किमपि नर्मोक्तिकुटिलाभिः, किमपि कथयन्, किमपि पृच्छन्, किमपि संदिशन्, अनु जल्पमनुजल्पितम्, अनु हासमनुहसितम्, अनु सुभाषितमनुसुभाषितम्, अनु प्रियमनुप्रीतम्, प्रसादप्रदानोद्दीपितोद्दामानुरागास्ताः कुर्वन्नतिचिरमिव गोष्ठीलीलयावतस्थे ॥ ख ॥

'अहो नु खल्वस्य नरपतेः, अनश्लीलं शीलम्, अनाहार्यमौदार्यम्, अवञ्चनं वचनम्, अदैन्यं दानम्, अस्मयं स्मितम्, अविचारगोचरं गाम्भीर्यम्' इति भावयन्त्यस्ताश्च कांचिदुचितविनोदैरतिवाह्य वेलाम्, अनुभूय किमपि गोष्ठीसुखम्, आख्याय च किंचिदिव दमयन्तीविनोदविलासव्यतिकरम् 'आज्ञापयतु देवोऽस्मान्गमनाय, भवद्वार्त्तामृतपानार्थिनी देवी त्वरिताऽस्मत्प्रत्यावृत्तिमवेक्षमाणा तिष्ठति' इत्यभिधायानुमता यथागतमगच्छन् ॥ ग ॥

गतासु च तासु, प्रगल्भं प्रज्ञायाम्, अचरमं वाचि, कुशलं कलासु, निपुणं नीतौ, सप्रतिभं सभायाम्, आश्चर्यभूतमाहूय पर्वतकनामानं वामनकमुपायनीकृत्य (१)कर्कशकर्कन्धूफलस्थूलोज्ज्वलमुक्तावलीमुख्यभव्यभूषणांशुकादिसंमानदानादरपरितोषितेन पुष्करात्पुरःसरं किंनरमिथुनेन सह दमयन्तीं प्रति प्रेषयामास ॥ घ ॥

(२)स्वयं च शाङ्खिकमुखमरुत्पूर्यमाणशङ्खस्वनविभिन्नभांकारिमध्याह्नभेरीरवेण निर्यद्वेलाविलासिनीचरच्चरणाभरणरणन्मणिनूपुरझंकारेण च नि-

याम्। नवेति पक्षान्तरगर्भायाम् ॥ क ॥

सोऽपीति ॥ नल एवमेवं कुर्वन् गोष्ठीविलासेनास्थात्। जल्पितमनुलक्ष्यीकृत्य जल्पितं कुर्वन्। ता उद्दीपितानुरागाः कुर्वन् इत्येवं कुर्वञ्छब्द उभयत्रापि संबध्यते। 'अनु

(१) कर्कशेति—कर्कशानि कठिनानि कर्कन्धूफलानि बदरीफलानि तद्वत्स्थूलानां मुक्तानां मौक्तिकानामावली श्रेणिरेव मुख्यं भव्यं भूषणमलंकारोऽशुकादि च वस्त्रादि च तेषां संमानेन दानमेवादरस्तेन परितोषितेन।

(२) स्वयमिति—शाङ्खिकमुखस्य शङ्खवादकवदनस्य मरुता वायुना पूर्यमाणो यः शङ्खस्तस्य निःस्वनेन शब्देन विभिन्नो भाङ्कारी मध्याह्नभेरीरवश्च तेन। निर्यन्तीनां निःसरन्तीनां वेलाविलासिनीनां वारस्त्रीणां चरतां गच्छतां चरणानामाभरणानि रणन्ति शब्दायमानानि मणिखचितनूपुराणि तेषां झङ्कारशब्देन।

वेद्यमाने मध्याह्नसमये माध्याह्निककरणायोदतिष्ठत् ॥ क ॥

क्रमेण च निःसृते समस्तसेवकजने, विश्रान्ततूर्यतालगीतासु निर्यातनर्तकीविरहखेदादिव मूकीभूतासु नृत्यशालासु, निःशब्दतया सुप्तास्विवार्थाधिकारककुटीषु, शून्यतया मध्याह्नतन्द्रीमूर्च्छितेष्विव समस्तमण्डपेषु, संक्रान्तसेवाविलासिनीचरणकुङ्कुमपदपङ्क्तितया विकीर्णविकसितरक्तारविन्द इव प्रकाशमाने राजभवनाङ्गणे, घनं स्वनन्तीषु भोजनावसरशङ्खकाहलासु, प्रधावमानेषु प्रत्यास्वादकजनेषु, (१)परिमृज्यमानास्वतिथिसत्त्रशालासु, सज्जीक्रियमाणेष्वग्राशनब्राह्मणेषु, प्रवेश्यमानासु गोग्रासयोग्यासु कपिलासु पुण्यगवीषु, प्रक्षाल्यमानेषु वायसबलिस्तम्भशिखरफलकेषु, बहिर्दीयमानेषु, दीनानाथभिक्षुकभैक्ष्यपिण्डेषु, समुपलिप्यमानासु भोजनस्थानवेदीषु, संचार्यमाणेषु चकोरपञ्जरेषु, निवेद्यमाननैवेद्यासु पूज्यराज्याधिदेवतासु वैश्वदेवाहुतिगन्धवाहिनि वहति विविधान्नपाकपरिमलमनोहरे महानसमरुति, निर्वर्तितमज्जनादिक्रियाकलापे भजति भोजनभुवं भूभुजि, बहिः सूपकारकलकलः समुल्ललास ॥ ख ॥

(२)'आज्यं प्राज्यमभिन्नकुन्दकलिकाकल्पश्च शाल्योदनो
धूपामोदमनोहरा शिखरिणी स्वादूनि शाकानि च ।

---

जल्पमनुजल्पितम्' इति यदा क्वचित्पाठः, तदा अनुजल्पितमिति क्रियाविशेषणम् । अनुगतं जल्पितं यत्रेति । अनु जल्पमित्यादिषु तु अनुयोगे द्वितीया ॥ ख ॥

क्रमेणेति ॥ महानसं पाकस्थानम् ॥ ख ॥

आज्यमिति ॥ अभिन्नकुन्दकलिया कल्पते मीयते उपमीयते इति यावत् । कले-

---

(१) परिमृज्येति—अत्र कविना गृहस्थैः क्रियमाणं पञ्चमहायज्ञान्तर्गतं बलिवैश्वदेवाह्निकमुपवर्णितम् । पञ्चमहायज्ञाश्च मनुस्मृतौ विवृताः—

"पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिभोजनम् ॥
पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः ।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते" ॥ (३ अ० ६८-७१)

अत्र देवभूतपितृयज्ञा एव वैश्वदेवपदवाच्यम् । वायसश्वदेवपिपीलिकातिथिभ्यो देयमन्नं बलिपदवाच्यम् ।

(२) आज्यमिति—हे सैनिका भीममहानृपस्य विदर्भेश्वरस्य सुतया प्रेषितं प्रहितं नानाविधं विविधं भोज्यं भुज्यतामास्वाद्यताम् । कीदृशं तत् । प्राज्यं बहु आज्यं घृतम् । अभिन्नाऽविकसिता या कुन्दस्य माघ्यपुष्पस्य कलिका कोरकं तत्कल्पस्तत्समः शाल्योदनः । धूपस्यामोदेन गन्धेन मनोहरा रमणीया शिखरिणी रसाला स्वादूनि शाकानि । पेयानि

पेयास्वाद्यकवल्यलेह्यबहुलं नानाविधं भुज्यतां
भोज्यं भीममहानृपस्य सुतया संप्रेषितं सैनिकाः ॥ ११ ॥

अहो नु खल्वमी मत्स्यमांसैर्विरहितमुदीच्यप्रतीच्यप्राच्यजनाः प्रियसक्वो भोक्तुमेव न जानन्ति ॥ क ॥

विरलः खलु दाक्षिणात्येषु मांसाशनव्यवहारः ॥ ख ॥

तदाकर्ण्यतां भो नैषधाः ॥ ग ॥

(१)'आज्यप्राज्यपरान्नकूरकवलैर्मन्दां विधाय क्षुधां
चातुर्जातकसंस्कृतो नु शनकैरिक्षो रसः पीयताम् ।
संभारस्पृहणीयतेमनरसानास्वाद्य किंचित्ततः
स्निग्धस्तब्धदधिद्रवेण सरसः शाल्योदनो भुज्यताम्' ॥ १२ ॥

राजा तु प्रतीहार 'विनिश्चीयतां किमयं बहिः कलकलव्यतिकरः' इत्यभिधाय तत्कालयोग्यपरिजनपरिवृतो भोक्तुमुपाविशत् ॥ घ ॥

त्वरितं च गत्वागतश्च स प्रतीहारो विज्ञापयांबभूव ॥ ङ ॥

'देव, दमयन्त्या प्रहिताः सूपकाराः सैन्यजनम्, आब्राह्मणान्त्यजगोपालकम्, आकरितुरगवाहनम्, आसामन्तनियुक्तकम, आस्वाद्यैस्तैस्तैरन्नविशेषैर्भोजयन्ति ॥ च ॥

(२)लग्ना सर्वतो दृश्यन्ते पर्वताः पक्वान्नस्य, राशयः शाल्योदनस्य, स्तूपाः सूपस्य, निर्झराः सर्पिषः, सिन्धवो मधुनः, निकराः शर्करायाः, स्रोतांसि दधिदुग्धयोः, शैलाः शाकानाम्, निपानानि पानकानाम्, कुल्याः फलरसानाम्, कूटाः कषायाम्ललवणतिक्तमधुरोपदंशानाम् ॥ छ ॥

---

रदन्तात् 'अचो यत्' इति सूत्रेण यत् । केचित्तु पवर्गोपधं पठन्ति ॥ ११ ॥

आज्यप्राज्यमिति ॥ 'त्वगेलापत्रकं चैव त्रिगन्धं च त्रिजातकम् । तदेव मरिचैर्युक्तं चातुर्जातकमुच्यते' तेन संस्कृतः कृतगुणान्तरश्चातुर्जातकसंस्कृतः । सरलः सुनिष्पन्नदीर्घतण्डुलपाकजः । अतिक्लिन्नतादिदोषरहितश्च । दधिद्रवो वस्त्रगालितं दधि ॥ १२ ॥

---

पानार्हाणि आस्वाद्यानि स्वादार्हाणि, कवल्यानि ग्रासार्हाणि लेह्यानि च तैर्बहुलं नानाविधं भोज्यं युष्माभिर्भुज्यताम् ॥ ११ ॥

( १ ) आज्येति—आज्यं घृतं प्राज्यं बहु यस्मिंस्तादृशं परान्नं परकीयं कूरं विक्लित्तिशालिधान्यं तस्य कवलैर्ग्रासैः क्षुधां बुभुक्षां मन्दां स्वल्पां विधाय कृत्वा चतुर्जातक एव चातुर्जातकं स्वार्थेऽण् गुडत्वगेलानागकेशररूपं गन्धचतुष्टयं तेन संस्कृतो मिश्रित इक्षो रसः प्रपानकं शनकैः पीयताम् । ततस्तदनन्तरं संभारेण सामग्र्या स्पृहणीयोऽभिलषणीयस्तेमनरसो व्यञ्जनरसस्तान् किंचिदल्पमास्वाद्य स्निग्धश्चिक्कणः स्तब्धः प्रगाढो यो दधिद्रवः श्रीखण्डनाम्ना विख्यातस्तेन सरसः शाल्योदनो भुज्यताम् ॥ १२ ॥

( २ ) लग्ना इति–सूपस्य द्विदलस्य स्तूपाः । सर्पिष आज्यस्य निर्झराः प्रवाहाः । पानकानां प्रपानकरसानां निपानानि पल्वलाः । कषाया अम्ला लवणास्तिक्ता मधुराश्च य उपदंशा भक्ष्यद्रव्याणि तेषां कूटाः ।

एवमकार्पण्यमिच्छया भोजितं सैन्यम् ॥ क ॥

अपिच—

(१)भुक्तान्ते घृतदिग्धहस्तलयोरुद्वर्तनं चन्दनं
पश्चान्नागरखण्डपाण्डुरदलैस्तःम्बूलदानक्रमः ।
एकैकस्य मृणालतन्तुमृदुनो दत्ते ततो वाससी
देव्या किंचिदचिन्त्यमेव भवतः सैन्यातिथेयं कृतम् ॥ १३ ॥

इयं च रसवती देवस्य तया स्वहस्तपल्लवपरिमलनसंस्कृतैः पाकविशेषैरलङ्कृत्य स्वमुद्रया मुद्रिता प्रहिता' इत्यभिधाय व्यरंसीत् ॥ ख ॥

राजा तु मनाक्तरलितशिराः 'सस्मितमहो निरतिशयमुदारगम्भीरमुचितव्यवहारहारि लीलायितं तस्याः, स्पृहणीयपरिमलश्चायमपूर्व इव कोऽपि पाकक्रमः ॥ ग ॥

तथाहि—

इदमम्लमप्यनम्लास्वादम्, इदमीषत्काषायमपि मधुरतां नीतम्, इदमेकरसमप्यनेकरसीकृतम्, इदमतिमृष्टतयाऽमृतमप्यतिशेते, रसवत्यामपि रसवती विदर्भराजात्मजा' इति विभावयंस्तांस्तया प्रहितान्पाकविशेषानादरेणास्वादयामास ॥ घ ॥

चिन्तितवांश्च—

(२)'षड्रसाः किल वैद्येषु भरतेऽष्टौ नवापि वा ।
तया तु पद्मपत्राक्ष्या सर्वमेकरसीकृतम् ॥ १४ ॥

---

भुक्तान्त इति ॥ वनवासदेशोद्भवानि नागवल्लीदलानि नागरैर्विदग्धैश्चर्व्यन्ते खण्ड्यन्ते इति नागरखण्डसंज्ञानि ॥ १३ ॥

इयं चेति ॥ स्वहस्ताभ्यां परिमलनं यथोचितगन्धद्रव्यक्षेपेण सुरभीकरणम् ॥ ख ॥

इदमिति ॥ रसवत्यामपि रसवती रसिका रागिणीति यावत् । तात्पर्यवतीति च ॥ घ ॥

षडिति ॥ एकरसीकृतमुत्कृष्टास्वादीकृतम् । चमत्कृतत्वात् । आत्मविषये एकानुरागीकृतं वा । यदनेकरसं तत्कथमेकरसीभवेदिति विरोधं पुनरर्थस्तुशब्द उद्भावयति ॥१४॥

---

(१) भुक्तान्त इति—भुक्तान्ते भोजनान्ते घृतदिग्धे घृतचिक्कणे हस्ततले करतले तयोश्चन्दनमुद्वर्त्तनमालेपः । पश्चात्ततो नागरखण्डस्य नागवल्ल्याः पाण्डुराणि पीतानि दलानि पत्राणि तैः । ताम्बूलदानक्रमस्ताम्बूलदानपरिपाटी । तत एकैकस्य मृणालतन्तुवन्मृणालसूत्रवन्मृदुनी कोमले वाससी वसने दत्तेऽर्पिते । देव्या दमयन्त्या किञ्चिदचिन्त्यमेवावर्णनीयमेव भवतः सैन्यस्यातिथेयमतिथिसत्कारः कृतं विहितम् ॥ १३ ॥

(२) षडिति— वैद्येषु भिषक्षु किल निश्चयेन षड् रसाः प्रसिद्धाः । यथा कषायो मधुरो लवणः कटुस्तिक्तोऽम्लश्चेति षड् रसा आयुर्वेदशास्त्रे । भरते भरतप्रणीते नाट्यशास्त्रे त्वष्टौ नव वा रसाः प्रथिताः । काव्यप्रकाशकारा मम्मटाचार्या अपि नाट्येऽष्टावेव रसा इति मन्यते ।

तथाहि—

(१)अग्रस्थामिव चेतसः पुर इव व्यालम्बमानां दृशो-
र्जल्पन्तीमिव रुन्धतीमिव मनाङ् मुग्धं हसन्तीमिव ।
निद्रामुद्रितलोचना अपि वयं तां विश्वरूपायितां
पश्यामो बहिरन्तरे निशि दिवा मार्गेषु गेहेषु च ॥ १५ ॥

तथाहीति ॥ अनेनात्मानुभवसंभावनाद्वारेणैकरसत्वमेव व्यनक्ति ॥
अग्रस्थामिति ॥ विश्वं रूपमस्येति विश्वरूपो हरिः ॥ १९ ॥

तद् यथा—

"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः" ( ४ उल्ला० २९ का० )
इयं कारिका संगीतनाट्यशास्त्रे षष्ठेऽध्याये भरतमुनिनापि पठिता ।

साहित्यदर्पणकारः शान्तवत्सलरसावादाय दशरसान् स्वीकुरुते । रसगङ्गाधरे पण्डिराज-जगन्नाथेन नाट्येऽपि शान्तरसं स्वीकृत्य नव रसाः प्रतिपादिताः । म. म. जीवानन्दविद्यासा-गरेण साहित्यदर्पणव्याख्याने प्रोक्तम्—"षोडशप्रकारा रसा इति गोस्वामिनः । दशप्रकारा इति भरतरभसौ । नवप्रकारा इति रत्नकोशादयः । अष्टप्रकारा इत्यमरकोशकारादयो बहवः । चत्वारो वेत्यभियुक्ताः" इति ( ३ परि० १८७ कारिकाटीका ) ।

वैष्णवास्त्वेकस्यैव भक्तिरसस्य द्वादश भेदान् स्वीकृत्य रसस्य द्वादश भेदान् निरूपय-न्ति । यथोक्तं रूपगोस्वामिना हरिभक्तिरसामृतसिन्धौ—

"पूर्वमुक्ताद् द्विधा भेदान्मुख्यगौणतया रतेः ।
भवेद्भक्तिरसोऽप्येष मुख्यगौणतया द्विधा" ॥
"मुख्यस्तु पञ्चधा शान्तः प्रीतिः प्रेयांश्च वत्सलः ।
मधुरश्चेत्यमी ज्ञेया यथापूर्वमनुत्तमाः ॥
हास्योऽद्भुतस्तथा वीरः करुणो रौद्र इत्यपि ।
भयानकः सबीभत्स इति गौणश्च सप्तधा ॥
एवं भक्तिरसो भेदाद् द्वयोर्द्वादशधोच्यते" ।

रूपगोस्वामिना हरिभक्तिरसामृतसिन्धौ द्वादशविधानामेतेषां निरूपणं विधायापि मधु-रभक्तिरसनिरूपणं विशिष्योज्ज्वलनीलमणिग्रन्थे विहितं तच्च तत्रैव विलोकनीयमित्यलं प्र-सङ्गागतेन । पद्मपत्रवत्कमलदलवदक्षिणी नयने यस्यास्तया दमयन्त्या तु सर्वमिदं भोज-नमेकरसीकृतम् । मधुरो रस एकरसः, न तथाभूतो रस इत्यतथाभूतो रसः, अतथाभूतो रसस्तथाभूतो रसः कृत इति तथाभूतरसीकृतम् । एकरसीकृतमित्यर्थः । अयमाशयः—तया दमयन्त्या भोजनेऽपि मधुररसस्यैव प्रयोगो विहित । अन्यदा सर्वदा तु सा मधुररसस्या-भिव्यञ्जिकास्त्येव । मधुरशब्दः शृङ्गाररसवाची मिष्टरसवाचकश्चेति सर्वमवदातम् ।

( १ ) अग्रस्थामिति—चेतसो मानसस्याग्रस्थामिव पुरःस्थितामिव । दृशोर्नेत्रयोः पुरोऽग्रे व्यालम्बमानां वर्त्तमानां जल्पन्तीमिव वदन्तीमिव रुन्धन्तीमिव मनागल्पं मुग्धं सुन्दरं यथा तथा हसन्तीमिव विश्वं रूपं विश्वरूपं सर्वरूपं तदिवाचरितां समग्ररूपधारिणी-मिति यावत् । तां दमयन्तीम् । निद्रया आमुद्रिते निमिलिते लोचने नयने येषां ते तादृशा अपि वयं बहिरन्तरे निशि रात्रौ दिवा दिने मार्गेषु वर्त्मसु गेहेषु गृहेषु च पश्यामो विलो-कयामः ॥ १९ ॥

एवमवधारयन् अतृप्त इव तया प्रहितेषु स्वहस्तपक्वपाकरसविशेषेषु, असन्तुष्टस्तत्कथायाम्, आचम्य, चन्दनागुरुपरिमलेन पाण्डुरितपाणिपल्लवः, लवङ्गकक्कोलकरम्बिततताम्बूलमुत्सर्पिकर्पूरपरिमलमादाय, विकीर्णविविधकुसुमप्रकरहारिणि (१)यक्षकर्दमाच्छच्छटोच्छोटितपर्यन्तभित्तिभागे लम्बितप्रलम्बजाम्बूनदपद्मदाम्नि धूपधूमामोदिनि चूर्णितकर्पूररङ्गरेखाभाजि भोजनानन्तरमपरेऽपराह्णविनोदमण्डपे मनाग्विश्रम्य रणरणकाक्रान्तहृदयो दूरदिगन्तालोकनकुतूहलितः सरित्तीरोत्तम्भिताभ्रंलिहसौधस्कन्धभूमिमारुह्य च तस्यामूर्ध्वं एव ध्रियमाणमायूरातपत्रयुगलः, सलीलालसपदैरितस्ततः परिक्रामन्, नेदीयसि सरित्संगमाम्भसि मध्याह्नमखिलमवगाहनसुखमनुभूय तीरमुत्तीर्णासु तिमिरशङ्कया कृतदूरचङ्क्रमणैश्चक्रवाकचक्रवालैराकुलमवलोक्यमानासु, पुलिनपांसुविहरणविरामे विकसितविविधवीरुन्धि रोधांसि रदन्तीषु दन्तिपङ्क्तिषु दत्तदृष्टिः, विरलनलिनीपत्रान्तरालसुप्तोत्थितस्य, किंचिद्वाञ्छितचटुलचञ्चोः, चरत,, चटुलचञ्चरीकिणि विकचकमलवने, राजहंसकुलकलापस्य (२)करिकलभदन्तदण्डपाण्डुबिसकाण्डभङ्गटंकारानाकर्णयन्, अपराह्णमज्जनागताभिः कुण्डिनपुरपुरन्ध्रिभिराश्चर्यरसोर्मिमुषितनिमेषै(३)र्निष्कम्पनीलोत्पलपलाशलीलायमानैर्नेत्रपुटैरापीयमानमुखेन्दुद्युतिः, दर्शिततरङ्गभ्रूभङ्गया, दूरोच्छलद्बालशफरीछलेन विस्फारितविलोचनया, सरित्संगमसलिलाधिदेवतयापि विलोक्यमानरूपसंपत्तिरिव, क्षणमविरलचलच्चञ्चरीकचक्रचुम्बिताम्बुरुहासु क्रीडाकमलसरसीषु, क्षणमुपान्तपङ्क्तीभूतमञ्ज-

---

एवमिति ॥ उत्तम्भितस्य तत्कालारोपितस्य जङ्गमस्य चित्रकूटाख्यस्याभ्रंलिहसौधस्य स्कन्धभूमिमारुह्य तस्यामितस्ततः परिक्रामन्, निकटतरे नदीसंभेदोदके कृतजलक्रीडासु, तमोभ्रान्त्या चक्रैराकुलमालोक्यमानासु, कृतधूलीस्नानासु, तटीः पाटयन्तीषु न्यस्तदृष्टिः, वने चरतो हंसवृन्दस्य बिसभङ्गरवाञ्शृण्वन्, कुण्डिनस्त्रीभिर्दृश्यमानमुखेन्दुश्रीः, उच्छलच्छफरीछलविलोकितया जलदेवतया वीक्ष्यमाणरूपसम्पदिव, क्षणमेकं सरसीषु क्षणं चूतालीषु क्षणं गृहालीषु क्षणमवरोधभवनपङ्क्तिषु क्षणं पुरपद्धतिषु विश्रान्तनेत्रो नलश्चिरमस्थात । सादरेक्षणं नेत्रपानम् । तच्च पत्रपुटैर्युक्तमिति नेत्रपुटैरापीयमानेत्युक्तम् । कण्टकादिदो-

---

(१) यक्षेति—यक्षकर्दमस्य सुरभिद्रव्यविशेषस्याच्छच्छटाभिः स्वच्छधाराभिरुच्छोटितो लिप्तः पर्यन्ते भित्तिभागः कुड्यप्रदेशो यस्य तस्मिन् । कोशेषु यक्षकर्दमस्येयं परिभाषा—"कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः" इत्यमरे । "कर्पूरागुरुकस्तूरीकक्कोलघुसृणानि च । एकीकृतमिदं सर्वं यक्षकर्दम इष्यते" इति व्याडिकोशे । "कुङ्कुमागुरुकस्तूरी कर्पूरं चन्दनं तथा । महासुगन्धिरित्युक्तं नामतो यक्षकर्दमः" इति धन्वन्तरिकोषे च ।

(२) करीति—करिकलभस्य दन्तदण्डवत् दशनदण्डवत्पाण्डूनि सितानि बिसकाण्डानि कमलतन्तवस्तेषां भङ्गस्य विनाशस्य टंकारान् टंकारशब्दान् ।

(३) निष्कम्पेति—निष्कम्पानि स्तिमितानि यानि नीलोत्पलानि नीलकमलानि तेषां पलाशाः पल्लवास्तेषां लीला विलासानाचरद्भिः ।

रितसहकारराजिषु समरवाजिवाह्यालीषु, क्षणमुन्मिषत्कुसुममनोहारितरुल-तारमणीयासु भवनोद्यानमालासु, क्षणमुत्पतत्पताकापटपल्लवराजितासु भीमभूपालान्तःपुरप्रासादपङ्क्तिषु, क्षणमवकीर्णकुसुमरङ्गावलीरम्यासु नगरवीथीषु विश्रान्तविलोचनश्चिरमवतस्थे ॥ क ॥

चिन्तितवांश्च—

(१)'नोद्याने न तरङ्गिणीपरिसरे नो रम्यहर्म्ये न वा
पुष्यत्पुष्करगर्भगुञ्जदलिषु क्रीडातडागेष्वपि ।
वात्याघूर्णितशीर्णपर्णतरला दृष्टिर्मदीयाधुना
लुभ्यल्लुब्धकभीषितेव हरिणी श्रान्तापि विश्राम्यति ॥ १६ ॥

अपि च—

(२)न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विहितैः शान्तिकशतैः ।
भ्रमावशादङ्गे कमपि विदधद्भङ्गमसमं
स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ १७ ॥

किंचान्यदद्भुतम्—

(३)पौष्पाः पञ्चशराः शरासनमपि ज्याशून्यमिक्षोर्लता

परिहिताश्च तरुराजिराजिताश्च च भूमिश्च वाहवाहना । तथा च—'रम्या समतला लोष्टकीलकण्टकवर्जिता । वाह्याली भूमिरम्यर्णतरुराजिविराजिता' इति । एतदेव पङ्क्तीभूतेत्यादिनोक्तम् । हिङ्गुलहरितालादिविचित्रवर्णकचित्रहेतुत्वात्कुङ्कुमान्येव रङ्गावली विचित्रवर्णकुङ्कुमभक्तिः ।। क ।।

नोद्यानेति ॥ विश्राम्यतीति प्रत्येकं योज्यम् ।। १६ ।।

न गम्य इति ॥ भ्रमः सन्देहः । स चात्र दमयन्तीलोभविषयः ।। १७ ।।

पौष्पा इति ॥ अत्र प्रथमोऽपिशब्दः शरासनस्य ज्याशून्यस्य शरापेक्षया द्वितीयश्च

(१) नोद्यानेति—वात्याघूर्णितानि प्रचण्डपवनचालितानि शीर्णानि जीर्णानि यानि पर्णानि शुष्कपत्राणि तद्वत्तरला लोला श्रान्तापि श्रमक्लान्तापि मदीया दृष्टिर्दर्शनं साम्प्रतं लुभ्यल्लुब्धकेन लोलुपमृगयुना भीषिता हरिणीव मृगीव नोद्याने नारामे, न तरङ्गिणी नदी तस्याः परिसरे प्रान्ते, नो वा रम्यहर्म्ये मनोरमप्रासादे, पुष्यन्ति पुष्पवन्ति पुष्कराणि कमलानि तेषां गर्भे गुञ्जन्तः शब्दायमाना अलयो भ्रमरा येषु तेषु । क्रीडातडागेषु केलिसरोवरेष्वपि न विश्राम्यन्ति विश्रान्ति लभते ॥ १६ ॥

(२) न गम्य इति—अयं स्मरापस्मरः काम एवापस्माराख्यो व्याधिः । मन्त्राणां गम्यो लभ्यो न । भैषज्यस्यौषधस्य विषयो न । विहितैः कृतैः शान्तिकशतैरनेकैः शान्तिसाधनैरपि प्रध्वंसं विनाशं न व्रजति याति । किन्तु भ्रमो भ्रान्तिस्तदावेशादङ्गे शरीरे किमपि वचनानर्हमसमं कठिनं भङ्गं विनाशं विदधत कुर्वन् भ्रमयति दृशं नयने घूर्णयति च चालयति च ।१७॥

(३) पौष्पा इति—समरविजयसाधनविकलोऽपि कामो जगत्त्रयजेतेति महदाश्चर्यम् । तथा हि कामस्य शरा बाणाः पौष्पाः पुष्पनिर्मिताः तेऽपि पञ्चैव न त्वधिकाः । तथा—इक्षोर्लता ज्याशून्यं प्रत्यञ्चा शून्यं शरासनं धनुरपि । प्रतिदिनं प्रत्यहं जगतां त्रयं त्रिभु-

जेतव्यं जगतां त्रयं प्रतिदिनं जेताप्यनङ्गः किल ।
इत्याश्चर्यपरम्पराघटनया चेतश्चमत्कारय-
न्व्यापारः सुतरां विचारपदवीवन्ध्यो विधेर्वन्द्यताम् ॥ १८ ॥

एवमनेकविधवितर्कतरलितहृदये कुण्डिननगरवीथीविश्रान्तदृशि शनैरुद्वेल्लितमल्लिकाक्षपक्ष्मलस्य मृदुतरतरङ्गितसरितः कमलवनवायोः समर्पितवपुषि निषधभूभुजि, भुजंगनिर्मोकधवले वसानो वाससी, रणन्मणिकङ्कणोराकूर्परं पूरितप्रकोष्ठः श्रीखण्डपिण्डपाण्डुरिततनुरपूर्व इव पर्वतकः प्रतीहारसूचितः प्रविवेश ॥ क ॥

प्रविश्य च प्रकटितप्रणयप्रणामः प्रभुणा सविस्मयस्मितहुंकारेणाभिभाषितः स्तोकावनमितभ्रूसंज्ञया विज्ञापयितुमारेभे ॥ ख ॥

'देव, श्रूयताम् । इतो गतवानहम् । (१)अनन्तरमतिशयितस्वर्गान्मार्गाननेकविधचर्चाचारूणि चत्वाराणि विलङ्घ्य, विहितमनःप्रसादान्प्रासादानवलोकयन्, इतस्ततः सस्मितस्मरालसचलद्वेलाविलासिनीविकारकूणितकोणेक्षणाक्षिप्तहृदयः, सेवाविरामनिःसरत्सामन्तसंकुलम्, अविरलगलन्मधुमञ्जरीपुञ्जपिञ्जरितसरससहकारवननिकुञ्जपुञ्जितपुंस्कोकिलकुलकलरवरमणीयोद्यानमालावलयितम्, उपान्तकृतमणिमन्दुरामन्दिरनिबद्धस्निग्धपोषणोत्कर्षहर्षहेषितराजवल्लभतुरंगम्, उत्तुङ्गशृङ्गसंगतमङ्गलध्वजम्, अङ्गणोत्सङ्ग-

---

जेतुरनङ्गस्य प्रतिदिनजेतव्यजगत्त्रयापेक्षया वैषम्यव्यञ्जकः ॥ १८ ॥

एवमिति ॥ मल्लिकाक्षो हंसविशेषः । चिरदृष्टस्यापि पर्वतकनाम्नो वामनस्यापूर्वत्वमिह पूर्वमभूषितस्य सम्प्रति पारितोषकभूषणभूषितत्वाद्दयितोदन्तप्रश्नतात्पर्याद्वा ॥क॥

देव श्रूयतामिति ॥ मार्गांश्चत्वराणि च विलङ्घ्य, प्रासादान्पश्यन्, ईदृग्राजभव-

---

वनं जेतव्यं विजेयम् । जेतापि योद्धाप्यनङ्गोऽशरीरः कामः किलेति निश्चये । इतीत्थमाश्चर्यपरम्पराया घटना निर्माणं तया चेतो मानसं चमत्कारयन् चमत्कृतं कुर्वन् । सुतरां विचारपदवीवन्ध्यो विचारसरणिशून्यो विधेर्ब्रह्मणो व्यापारः कार्यं वन्द्यतां नमस्क्रियताम् ॥१८॥

(१) अनन्तरमिति — सस्मितं समन्दहासं यथा तथा स्मरेण कामेनालसाश्चलन्त्यो गच्छन्त्यो या वेलाविलासिन्यो वारनार्यस्तासां विकारेण कामजनितेन कूणितो वक्रीकृतः कोणो येषां तादृशेनेक्षणेन दर्शनेनाक्षिप्तमाकृष्टं हृदयं मानसं यस्य सः । अविरलं निरन्तरं यथा तथा गलत्पतन्मधु मकरन्दो येभ्यस्ते मञ्जरीपुञ्जा मञ्जरीनिवहास्तैः पिञ्जरितानि पीतानि सरससहकारवनानि सरसरसालवनानि येषां तादृशा निकुञ्जा लताच्छादितप्रदेशास्तत्र पुञ्जिताः संघीभूताः पुंस्कोकिलास्तेषां कुलानां व्रातानां कलरवेण कलकलेन रमणीया मनोहरा उद्यानमाला आरामततयस्ताभिर्वलयितं परीतम् । उपान्ते प्रान्ते कृतानि रचितानि मणिखचितानि मन्दुरामन्दिराणि वाजिशालास्तेषु निबद्धाः स्निग्धपोषणोत्कर्षेण हर्ष आनन्दस्तेन हेषिता अश्वशब्दो हेषाध्वनिस्तद्युक्ता राजवल्लभा राजप्रियास्तुरंगा अश्वा यस्मिंस्तत् । अतिसूक्ष्मैर्मुक्ताफलै रचिता कृता तरङ्गैस्तरङ्गाकारै रम्या रमणीया या रङ्गरेखा तस्या राजिभिः श्रेणिभी राजितं शोभितमजिरं प्राङ्गणं यस्य तत् । एतादृशं राजभवनं पर्वतकोऽविशदिति भावः ॥

रङ्गक्रीडाकुरङ्गविहंगम्, अभङ्गाङ्गरक्षितकक्षान्तररममाणराजकुमारकम्, अतिसूक्ष्ममुक्ताफलरचिततरङ्गरम्यरङ्गरेखाराजिराजिताजिरं राजभवनमविशम् ॥ क ॥

अतिमनोहारिणि यत्र सुपुष्करमालानि क्रीडावापीपयांसि नागयूथं च, सारवाणि लीलोद्यानसारसमिथुनानि सेवककविवृन्दं च, विलम्बतानि काञ्चनकुङ्कुमदामानि गीतं च, अनलसङ्गानि लक्षप्रदीपवर्तिसुखानि प्रेक्षणकं च ॥ ख ॥

किं बहुना—

(१)सुस्थिततेजोराशेर्लक्ष्मीजनकस्य रत्ननिलयस्य ।
तस्योपरि प्लवन्ते वार्धेरिव वर्णकाः सर्वे ॥ १९ ॥

(२)तत्र च चलत्कञ्चुकिसंकुलं पातालमिवान्तःपुरमनन्तालयं प्रविश्य

---

नमविशमिति संबन्धः । चर्चा गन्धोदकसेचनपुष्पप्रकारादिवार्तावशात्प्रस्तावान्नलप्रवेशादिलक्षणा चामुण्डापि । मणिमन्दुरेत्यत्र षष्ठीसमासः ।। क ।।

अतीति ॥ यत्र राजभवने । उत्पलश्रेणीनि पयांसि। यूथं च छष्ठु पुष्करं शुण्डाग्रं यस्य तथोक्तम् । आलानमर्गलनस्तम्भोऽस्यास्तीति । तथा सह आरवैः सारवाणि । वृन्दं च सारोत्कृष्टा वाणिर्यस्य तथाविधम् । विशेषेण लम्बितानि लम्बायमानीकृतानि । गीतं च स्वरकृतविलम्बोपेतं तानोपेतं च। अनलेन ज्वालालक्षणेण सङ्गो येषाम् । प्रेक्षणकं च नालसमनलसमोजस्वि । उच्चैः स्थाने गीयमानत्वात् । तथा गानमस्यास्तीति इनिः । लक्षसंख्यद्रव्यपतीनां हि वेश्मसु यावल्लक्षं दीपा ज्वाल्यन्ते इति ख्यातिः ॥ ख ॥

सुस्थितेति ॥ तेजोराशिर्वडवानलः प्रतापचयश्च । लक्ष्मीर्विष्णुपत्नी शोभा च । तथाभूतस्य तस्य सागरोपमस्योपरि वर्णकाः स्तोतारः प्लवन्ते तरन्ति। अपरिच्छिन्नगुणत्वादलब्धमध्या बाह्यमेव वर्णयन्तीति भावः । वारो जलानि धीयन्तेऽस्मिन्निति वार्धिः ॥ १९ ॥

तत्र चेति ॥ कञ्चुकिनो महल्लका उरगाश्च । ( बहुनिलयं शेषनिलयं च । ) प्रवि-

---

( १ ) सुस्थितेति—सर्वे वर्णकाः स्तोतारो वार्धेरिव सागरस्येव, वारो जलानि धीयन्तेऽस्मिन्निति वार्धिः। तस्य तथाभूतस्योपरि प्लवन्ते उपरि तरन्ति। न त्वान्तरं विलोकयितुं समर्थाः। सागरपक्षे विशेषणानि—सुस्थितस्तेजोराशिर्वडवाग्निर्यत्र तस्य। लक्ष्मीजनकस्य लक्ष्मीसमुत्पादकस्य। रत्ननिलयस्य रत्नास्पदस्य। रत्नाकरत्वादिति भावः। पक्षान्तरे—सुस्थितस्तेजोराशिः प्रतापनिचयो यस्य तस्य। लक्ष्मीः शोभा तज्जनकस्योत्पादकस्य। रत्नानां निलयस्याधारस्य। यो लक्ष्मीयुतस्तमेव सर्वे स्तुवन्ति बाह्यभावेनेति भावः ।

( २ ) तत्रेति—पर्वतको दमयन्तीमद्राक्षीदिति वर्णनम् । तथाहि—विविधानां नानाविधानां कुसुमानां पुष्पाणां सम्पत्या विभूत्या सम्पन्ना युक्ताः पुण्याः पवित्राः पादपा वृक्षास्तैः परिकरितं व्याप्तमङ्गणमजिरं यस्यास्तादृशी वापी दीर्घिका तत्परिसरे प्रान्ते चलन्तो भ्रमन्तश्चक्रवाका यस्मिंस्तस्मिन्। अनवरतमजस्रं तरले लोले लोचने नयने ताभ्यामालोकनं दर्शनं तैः। नीलोत्पलोपहारमिव नीलोत्पलप्राभृतमिव दिशि दिशन्तीम्। दृश्यमाना

विविधकुसुमसम्पत्संपन्नपुण्यपादपपरिकरिताङ्गणवापीपरिसरचलच्चक्रवाके चन्द्रशालाशालिनि, शैलूष इवानेकभूमिकाभाजि, धनंजय इव सुभद्रान्विते, कुरुवंशाख्यान इव चारुचित्रविचित्रभित्तिभाजि, तुहिनाचलोच्चकूटायमाने सुधाधवलस्कन्धे धाम्नि ध्वजावलीविलसत्सप्तसितिसप्तौ सप्तमभूमिकायाम्, इतोमुखवातायने निविष्टाम्, इतो गतास्ताः कुब्जवामनकन्यकास्त्वद्वार्ताव्य- तिकरविनोदारम्भिणीः सम्भाषयन्तीम्, अनवरततरललोचनालोकनैर्नीलो- त्पलोपहारमिव त्वदधिष्ठितायै दिशे दिशन्तीम्, उत्तरीयांशुकस्याच्छतया दृश्यमानमदनवाणव्रणकिणानुकारिकस्तूरिकापङ्कपत्रलताङ्कितकुचकलशश्रि-

इय ईदृग्विधे धाम्नि गृहे, सप्तमभूमिकासप्तमक्षणः, तत्र स्थिते इतोमुख एव हस्तादिसङ्केत- कथिते एव, वातायने गवाक्षे, निविष्टामासीनां, दमयन्तीमद्राक्षमिति सम्बन्धः । चन्द्र- शाला शिरोगृहम् । शैलूषो नटः । भूमिका गृहक्षणा वेषधारणं च । शोभनानि भद्राणि गृहावयवविशेषास्तैरन्विते । पक्षे सुभद्रार्जुनपत्नी । चारु चित्रेण विचित्रा भित्तीर्भजते । अन्यत्र चित्रविचित्रौ शान्तनुसुतौ । तौ च कुरुवंश्यानां भित्तिभूतौ । तत्कलत्राभ्यामम्बि- काम्बालाभ्यां पाण्डुधृतराष्ट्रयोरुत्पन्नत्वात् । तथा सप्ताः सप्तसप्तेरादित्यस्य सप्तयोऽश्वा

विलोक्यमाना मदनबाणेन कामवाणेन व्रण आघातस्तस्य किणाश्चिह्नास्तदनुकारिण्या तत्स- मानया कस्तूरिकापङ्केन मृगमदेन या पत्रलता पत्ररचना तयाङ्कितौ चिह्नितौ कुचकलशौ स्त- नकुम्भौ तयोः श्रीः शोभा यस्याः सा ताम् । कुङ्कुमस्य मृगमदस्य कस्तूर्या मलयजस्य चन्दनस्य च रसो द्रवीभावस्तेन रचिता विहिता या ललाटपट्टे त्रिपुण्ड्रकस्य रेखा लेखा त- स्याश्रितयमुद्वहन्ती । त्रिपुण्ड्रकतिलकं शैवाः कुर्वते । त्रिपुण्ड्रं त्रयाणां पुण्ड्राणामिक्षुवदाका- राणां समाहारस्त्रिपुण्ड्रम् ।

"ऊर्ध्वपुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं भस्मना सदा ।
तिलकं वै द्विजः कुर्याच्चन्दनेन यदृच्छया ॥
ऊर्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियश्च त्रिपुण्ड्रकम् ।
अर्धचन्द्रं च वैश्यश्च वर्तुलं शूद्रयोनिजः" ॥
"शिवागमे दीक्षितैस्तु धार्यं तिर्यक् त्रिपुण्ड्रकम् ।
विष्णवागमे दीक्षितस्तु ऊर्ध्वपुण्ड्रं विधारयेत्" ॥ ( वाचस्पत्यबृहदभिधाने )

त्वत्संगमस्य वाञ्छया कृतो विहितः संतापस्तस्य संविभागार्थमिवात्मनो बहुरूपा- णि सृजन्तीम् । अयमाशयः—कृतब्रह्मसाक्षात्कारो युक्तयोग्यपि प्रारब्धं कर्म भुङ्क्ते । स च योगी प्रारब्धं कर्माल्पेनैव कालेन भुक्तं स्यादिति वाञ्छयात्मनो बहूनि रूपाणि विधाय तत्कर्म शीघ्रं भुङ्क्ते । संचितं कर्म तु ज्ञानाग्निना भस्मसात्कुरुते । कर्माकुर्वंश्च क्रियमाणं कर्म संरुणद्धि । योगिनोऽपि प्रारब्धकर्मणां भोगादेव क्षयो भवति । तत्क्ष- यार्थं यथा योगी बहून्यात्मनो रूपाणि सृजति, तद्वदियं दमयन्त्यपि बहून्यात्मनो रूपा- णि स्वल्पेनैव कालेन कामपीडाशान्तये व्यसृजदिति भावः ।

निपतन्ति पतन्ति मण्डनानामाभरणानां मणिमयूखा रत्नकिरणा एव मञ्जर्यस्तासां जा- लानि तेषां छलेन व्याजेन । अनन्तः संसार एव रोहणगिरिरारोहणपर्वतस्तस्यैका रत्नक- न्दली मणिनिर्मितारोहणनिःश्रेणिः ।

यम्, अष्टमीशशाङ्कशकलश्रीशोभाभाजि ललाटपट्टे स्मरपरवशत्रिपुरुषैरिव 'ममेयं ममेयं ममेयम्' इति संहर्षात्कृतं स्वस्वर्णानुकारिस्त्रीकारचिह्नमिव कुङ्कुममृगमदमलयजरसरचितत्रिपुण्ड्रकरेखात्रितयमुद्वहन्तीम्, आलोहितेन च स्वद्वार्तामृतपानबालप्रवालप्रणालकेनेव कर्णप्रणयिना बालपल्लवेन विराजितवदनाम्, आसन्नमणिभित्तिदर्पणसंक्रान्तप्रतिबिम्बतया त्वत्संगमवाञ्छाकृतसंतापसंविभागार्थमिव बह्वन्यात्मरूपाणि सृजन्तीम्, आसन्नवर्तिनीभिर्वीणादिविनोदविदुषीभिः समानवयोवेषाभिः सखीभिः सरस्वतीमिव सकलविद्याधिदेवताभिरुपास्यमानाम्, उन्मिषत्कुसुमाभरणरमणीयाभिश्चामरग्राहिणीभिर्वनदेवताभिरिव शरीरिणीं वसन्तमासश्रियमुपसेव्यमानाम्, अनुलेपनपुष्पपाणिभिः प्रसाधिकाभिर्भवानीमिवानेकनाकनायकनारीभिराराध्यमानाम्, इतस्ततो निपतन्मण्डनमणिमयूखमञ्जरीजालच्छलेनामानमिव कान्तिरसविसरमुत्सृजन्तीम्, अशेषाङ्गावयवेषु प्रतिबिम्बितैरासन्नचित्रभित्तिरूपकैर्मायाविभिः सुरासुरैरिव विधीयमानाश्लेषाम्, अग्रस्थिते पद्मरागमणिदर्पणे कन्दर्पातुरे रागिणि शशिनीव करुणयार्पितच्छायाम्, अशेषजगद्विजयास्त्रशालामिव मन्मथस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम्, अधिदेवतामिव सौभाग्यस्य, विपणिमिव लावण्यस्य, शिल्पसर्वस्वपरिणामरेखामिव विधातुः, अनन्तसंसाररोहणैकरत्नकन्दलीं दमयन्तीमद्राक्षम् ॥ क ॥

ईक्षणामृतशलाकामवलोक्य च तामतिहर्षविस्मयकौतुकोत्तानितचक्षुश्चिन्तितवानहम् ॥ ख ॥

'इयं हि—

(१) स्मरराजराजधानी मङ्गलवलभी विलासविहगानाम् ।
शृङ्गाररङ्गशाला हरति न बाला मनः कस्य ॥ २० ॥

---

यत्र तस्मिन् । अष्टमी शशाङ्कशकलेति । खण्डशशिनो हि श्रियं ललाटं श्रयति । त्रयाणां सत्त्वरजस्तमसां पुरुषास्त्रिपुरुषाः । यथा—'न बाधतेऽस्य त्रिगणः परस्परम्' इत्यत्र त्रयाणां धर्मादीनां गणः । यथा च चण्डसिंहकृते चण्डिकाचरिते—'प्रियस्त्रिवर्गश्चक्रमे सकामम्' इति । कर्मधारयस्तु संज्ञायामेव । मणिदर्पणलक्षणे शशिनि कारुण्यादर्पितप्रतिकृतिमित्यर्थः । अवज्ञातो हि रागी म्रियते । संसारो रोहणगिरिः, दमयन्ती च रत्नप्ररोहशलाका ॥ क ॥

---

( १ ) स्मरेति—स्मरराजः कामस्तस्य राजधानी निवासस्थानम् । विलासा एव भावहावादय एव विहगाः पक्षिणस्तेषां मङ्गलवलभी मङ्गलकारिणी वलभी स्थितिस्थानम् । शृङ्गारस्य रङ्गशाला नाट्यभूमिः । इयं बाला दमयन्ती कस्य मानवस्य मनो न हरति नापकर्षति ॥ २० ॥

अपि च—

(१)दग्धो विधिर्विधत्ते न सर्वगुणसुन्दरं जनं कमपि ।
इत्यपवादभयादिव हरिणाक्षी वेधसा विहिता ॥ २१ ॥

किं चान्यत्—

(२)लावण्यपुण्यपरमाणुदलं तदन्य-
दन्यः स चापि निपुणः खलु कोऽपि वेधाः ।
येनाद्भुता कृतिरियं विहिता विशिष्ट-
कार्येण कारणविशेषगुणोऽनुमेयः ॥ २२ ॥

एवं वितर्कयन्तं सापि मां पुष्कराक्षसूचितमुचितसंभ्रमेण (३)मनाग्वलितकन्धराकन्दलीकम्पितकर्णोत्पलमवलोक्य स्वागतप्रश्नानन्तरम् 'अहो बहोः

दग्ध इति ॥ दग्धशब्दो निन्दार्थे । दग्धो निन्द्यो विधिः ( यतः ) सर्वगुणपरिपूर्णं कमपि जनं न विधत्ते इति योऽसावपवादः । तद्भयादिव 'तेनासौ सुन्दरी विहिता' तेन विधिना अपवादोद्विग्नेन । असाविति साक्षाद्दृष्टा । सुन्दरीति समग्रगुणसौन्दर्योपेता । अतस्तस्यां सृष्टायां स्रष्टुरपवादो न भविष्यतीति । 'हरिणाक्षी' इति पाठस्तु अक्षिमात्रसौन्दर्यार्थो न समग्रगुणसुन्दरतां वक्तीत्युपलक्षणपरतया निर्वाह्यः ॥ २१ ॥

लावण्येति ॥ येन निरुपमलावण्यदलपाटवेन वेधा दमयन्तीं सृष्टवान् । तद्दलपाटवमन्यत् । वेधाश्च । दलपाटवं वेधाश्च जगन्निर्माणविलक्षणावित्यर्थः । तद्द्वयमपि विशेषयन्नाह—येनेत्यादि ॥ येन दलपाटवेन वेधसा चेति ज्ञेयम् । तत्रार्थे हेतुमाह—विशिष्टेत्यादि ॥ २२ ॥

एवमिति ॥ 'स्मरराज–' इत्यादिपद्यत्रयेणैवमूहमानं पुष्कराक्षेण निवेदितं मां 'हे

(१) दग्धेति—दग्धो हतो विधिर्ब्रह्मा कमपि जनमेकं द्वौ वा सर्वैर्गुणैः सुन्दरं रम्यं न विधत्ते न तनोति । वेधसा विधिना । इत्यपवादस्य निन्दाया भयादिव भीतेरिव हरिणाक्षी दमयन्ती सर्वगुणसुन्दरी विहिता रचिता ॥ २१ ॥

(२) लावण्येति—येन कारणेनाद्भुता विचित्रेयं दमयन्तीरूपा कृतिर्निर्मितिर्विहिता रचिता । तल्लावण्यस्य सौन्दर्यस्य पुण्यं पवित्रं परमाणुदलं परमाणुनिचयः । अन्यदेव सर्वजनकारणभूतपरमाणुदलादन्यदिति भावः । नैयायिकमते परमाणुसंघातेनैव सृष्टिः । परमाणुस्वरूपं च—

"जालान्तर्गते भानौ सूक्ष्मं यद् दृश्यते रजः ।
तस्य षष्ठतमो भागः परमाणुः स उच्यते" इत्युक्तं तैः ॥

खलु निश्चयेन स दमयन्तीनिर्माता निपुणो दक्षो वेधा विधिरपि भिन्न एव । कथमेतज्ज्ञायते यद्विशिष्टं विलक्षणं कार्यं तेन कारणस्य समवायिकारणस्य विशेषगुणो विलक्षणतानुमेयोऽनुमातव्या । 'कारणगुणा हि कार्यगुणानारभन्ते, इति नैयायिकैः स्वीकृतत्वात् । नैषधीयचरितेऽपि कविनोक्तम्–'कार्यं निदानाद्धि गुणानधीते" इति, "अन्नानुरूपां तनुरूपऋद्धिं नालामृणालाग्रभुजो भजामः" इति च ॥ २२ ॥

(३) मनागिति—मनागल्पं वलिता चालिता या कन्धरैव ग्रीवैव कन्दली तया कम्पितं वेपितं कर्णोत्पलमवतंसकमलं यस्य तम् ।

कालादभूत्सुप्रभातमद्योद्द्योतितमिव तमस्काण्डपिण्डीकृतं कुण्डिनम्, अकाण्डाडम्बरितवसन्तविकासोत्सव इवाभवत्सरित्संगमोपकण्ठवनविभागः, चिरात्संपन्ना सलक्षणा दक्षिणा दिगियम्, उन्निद्रित इव सह्याद्रिः, अमृतद्रवार्द्रित इवोज्जीवितोऽयं जनः' इत्यभिधाय 'पर्वतक, कच्चित्कुशली परबलदलदावानलो नलः' इति स्मितमुग्धमधुरया गिरा समभाषत ॥ क ॥

अहमपि प्रणम्य यथोचितमनन्तरमतित्वरितसखीजनोपनीतमासनमध्यास्य देवेन प्रहितानि तान्याभरणोपायनान्युपानैषम् ॥ ख ॥

आदरेण तया गृहीतेषु तेषु, बहुमते मयि, प्रक्रान्ते त्वद्गुणग्रहणगोष्ठीव्यतिकरे, नर्मसुखालापलीलयातिक्रामति स्तोककालकलापे, पुष्कराक्षोऽप्यभाषत ॥ ग ॥

'देवि, विज्ञापयामि यद्यभयम् ॥ घ ॥

एवमनुश्रुतमस्माभिः 'किल सकलनाकिनायकपुरन्दरपुरःसराः सर्वेऽपि लोकपालास्त्वामभिलषन्तोऽन्तःकरणारण्यलग्नमदनदावानलानलमायान्तमभ्यर्थितवन्तो यथा महानुभावा भवन्ति हि भवादृशाः परोपकारव्रतधर्माणः, तदेष प्रार्थ्यसे स्वप्रयोजननिरपेक्षेण त्वयास्मदर्थे दमयन्ती वरणीया, इति' ॥ ङ ॥

तद्देवि, देवदूतकार्येणागतो निषधेश्वरः ॥ च ॥

पृच्छतु वा देवी पर्वतकम्' ॥ छ ॥

इति श्रुत्वा पुष्कराक्षभाषितम्, ईषद्विषादविलक्षस्मितस्मेरां दृशं मयि साचि संचारितवती ॥ ज ॥

मयापि संवादिते पुष्कराक्षवचने तस्मिन्, आकस्मिककठोरकाष्ठप्रहारव्यथामिवानुभवन्ती, विन्दतु वीणाक्वणो माधुर्यमितीव प्रतिपन्नमौनव्रता, लभेतां कर्णोत्पले परभागमितीव मुकुलितनयना, प्राप्नोतु शोभां मुक्तावली दीप्तिजालमितीव मुक्तस्मिता, गच्छतु च्छायां कण्ठावलम्बिनी चम्पकमालेयमितीवाङ्गीकृतवैवर्ण्या, लभतां लीलाकमलमिदं सौभाग्यमितीवोल्लसितवदना, सा क्षणमभूत ॥ झ ॥

तत्र च व्यतिकरे—

(१)विगलितविलासमपरसमाकस्मिकजातभङ्गशृङ्गारम् ।
मूकितमिव मूर्छितमिव मुद्रितमिव भवनमिदमासीत् ॥ २३ ॥

---

पर्वतक, कच्चित्कुशली परसैन्यदावानलो नलः' इति वचनेन दमयन्ती सम्भाषितवती ।

---

(१) विगलितेति—निगलितो निःसृतो विलासो हर्षो यस्मात्तत् । तथा-अपगतो रसो यस्मात्तत् । आकस्मिको जातो भङ्गो विनाशो यस्य तादृशः शृङ्गारो मदनविलासो यत्र तत् । मूकितमिव निःशब्दितमिव । मूर्च्छितमिव मोहमितमिव । मुद्रितमिव संकुचितमिव । इदं भवनं गृहमासीदभूत् ॥ २३ ॥

राजा तु 'पर्वतक, ततस्ततः' ॥ क ॥

पर्वतकोऽपि 'देव, श्रूयताम् ॥ ख ॥

अतः परम्—

(१)ईषन्निःसृतकुन्दकुड्मलसदृग्दन्तप्रभामञ्जरी-
रोचिष्णुस्मितमन्थरां मयि दृशं संचारयन्ती मनाक् ।
अस्यन्ती करपद्मभृङ्गमधरे बन्धूकबुद्ध्यागतं
वारंवारमकम्पयत्तरलितस्तोकावतंसं शिरः ॥ २४ ॥

ततः परम् । वारितवारविलासिनीचाटुवचनक्रमम्, आकस्मिकविस्मयविस्मृतस्मितविलासम्, (२)अतनुतुहिनाहतनवनलिनदलदीनदीर्घेक्षणम्, (३)उष्णसरलश्वासारम्भिविषमविषादविच्छायिताननेन्दुद्युति, तस्याः स्थानकमवलोक्य सखेदं सखीजनेन 'देवि, भवन्निःश्वासपवनपरम्परया पर्यस्त इवास्ताचलहस्तावलम्बनमयमाश्रयति भगवान्भानुः, इयं च सौभाग्यशालिनि नले निलीनचित्तायास्तव लोकपालपार्थिवप्रार्थनाव्यतिकरमिममाकर्ण्य लज्जितेव पिहितश्रवणा दूरे भवति वासरश्रीः, इमानि(४) निश्चलनिलीनमधुपनिपीयमानगर्भमधूनि सङ्कोचयन्ति लोचनानीव कमलानि, संविभागीकृतविषादा इव विलासवयस्याः सरसीसरोरुहिण्यः, इमाश्च 'कथमस्मत्पतयो मनुष्यकन्यकां कामयन्ते' इतीर्ष्याशोकवशादिव दिशः श्यामायन्ते, तत्प्रेष्यतामयं पर्वतकः' इत्यभिधीयमाना कथंकथमपि चिन्तान्तरायतिरस्कृतालापमीषदुन्नमय्य मुखं समुल्लसदशोकपल्लवानुकारि करतलमुत्तानीकृत्य मामविस्मरणी-

---

दावानलोपमानेनात्मनोऽपि विरहसन्तापहेतुत्वं नलस्य व्यनक्ति । मनागवलितेत्याद्यवलोकनक्रियाविशेषणम् ॥ क ॥

ततः परमिति ॥ तस्याः स्थानकमवस्था । लज्जितेव पिहितश्रवणा । श्रवणं नक्षत्रं श्रोत्रं च ॥ क ॥

---

( १ ) ईषदिति—ईषदल्पं निःसृता निर्गता कुन्दकुड्मलसदृक् माघ्यपुष्पमुकुलसमा दन्तप्रभामञ्जरी दशनकान्तिरेव मञ्जरी तया रोचिष्णु कान्तिमत् स्मितं मन्दहासस्तेन मन्थरां मन्दां दृशं दर्शनं मयि मनागल्पं संचारयन्ती प्रचारयन्ती तथा-अधरे बन्धूकबुद्ध्या जपाकुसुमभ्रान्त्यागतमायातम् । करपद्माभ्यां हस्तकमलाभ्यां भृङ्गं भ्रमरमस्यन्ती दूरं क्षिपन्ती सा दमयन्ती तरलितश्चालितः स्तोकोऽवतंसः कर्णाभरणं यया सा यथा तथा शिर उत्तमाङ्गं वारंवारं मुहुर्मुहुरकम्पयद् वेपितवती ॥ २४ ॥

( २ ) अतन्विति—अतनुना बहुना तुहिनेन हिमेनाहतानि ताडितानि नवानि नूतनानि नलिनदलानि कमलपत्राणि तद्वद्दीनानि दैन्ययुतानि दीर्घाणि विशालानीक्षणानि चक्षूंषि यस्य तत् ।

( ३ ) उष्णेति—उष्णस्तप्तः सरलो यः श्वासस्तादारम्भिणी तथा विषमेण कठिनेन विषादेन दुःखेन विच्छायिता मलिनाननेन्दुद्युतिर्वदनकान्तिर्यस्य तत् ।

( ४ ) निश्चलेति—निश्चलं यथा तथा निश्चेष्टं निलीनाः स्थिता मधुपाः षट्पदास्तैर्निपीयमानं गर्भमधु मध्यमभागस्थरसो येषां तानि तादृशानि ।

यसंमानदानावसाने व्यसर्जयत् ॥ क ॥

विसर्जितश्च तया तत्कालमाविर्भवद्विषादवशसंपन्नमौनया न पुनः संभाषितोऽस्मि, न वीक्षितोस्मि, न पृष्टम्, न संदिष्टं किमपि, केवलं चलन्नेत्रविभागप्रान्ततरत्तारया दृष्ट्या समवलोक्य समुत्तानितकरकमलसंज्ञयैव कथमपि संप्रेषितः 'कष्टम्' इति चिन्तयन्नलसालसैरसमञ्जसपातिभिः पश्चिमसुखैरिव पादैरिहायातवान् ॥ ख ॥

तदेव दमयन्ती देवदूतकार्याङ्गीकरणव्यतिकरमिममाकर्ण्य परं विषादमापद्यत ॥ ग ॥

अन्यच्च । मन्ये च—

(१)परिम्लानच्छायाविरहितसनिद्रद्रुमवनं
पतत्पङ्क्तीभूतध्वनितशकुनोन्नादितनभः ।
वियोगव्याकूतादुपनदि रुदच्चक्रमिथुनं
विषीदन्त्यां देव्यामिदमपि विषण्णं जगदभूत् ॥ २५ ॥

इत्यभिधाय स्थिते पर्वतके तत्कालोचितमिममेवार्थं समर्थयन्नवसरपाठकः पपाठ ॥ घ ॥

(२)'कन्यामन्यानुरक्तां कथममृतभुजो मानुषीं कामयन्ते
तन्वङ्गीः सस्मितास्याः स्मरविवशदृशो नाकनारीर्विहाय ।
वक्तुं खेदादिवैतद्दिनपतिरधिकं व्रीडयैवावनम्रः
कोपेनेवारुणांशुः प्रविशति वरुणस्यालयं पश्चिमाब्धिम् ॥ २६ ॥

राजा तु तदाकर्णयन्, अवतीर्य सौधशिखरतलाल्लीलापदप्रचारेण (३)सं-

कन्यामन्येति ॥ 'वक्तुं खेदात्' इत्यस्योपयोगि 'वरुणस्यालयम्' इति । वाचो हि श्रोतारमपेक्षन्ते ॥ २६ ॥

(१) परिम्लानेति—परिम्लानानि विच्छायितानि छायाविरहितानि छायाशून्यानि सनिद्राणि मुद्रितानि द्रुमाणां वृक्षाणां वनानि यस्मिंस्तत् । पतन्तः पङ्क्तीभूताः श्रेणीभूता ध्वनिता ध्वनन्तो ये शकुनाः पक्षिणस्तैरुन्नादितं शब्दितं नभ आकाशं यस्मिंस्तत् । उपनदि सरिति वियोगस्य विरहस्य . व्याकूतादभिप्रायाद् रुदन्ति चक्रवाकानां मिथुनानि युगलानि यस्मिंस्तत् । एतादृग् जगदिदं देव्यां दमयन्त्यां विषीदन्त्यां दुःखीभवन्त्यां विषण्णं खेदयुक्तमभूद् बभूव । शिखारिणीवृत्तम् ॥ २५ ॥

(२) कन्यामिति—अमृतभुजो देवाः । तन्वङ्गीः कृशाङ्गीः । सस्मितानि समन्दहासानि वदनानि यासां ताः । स्मरेण कामेन विवशा परवशा दृग् दर्शनं यासां ताः । नाकनारीः स्वर्गरमणीर्विहाय त्यक्त्वा मानुषीं मनुष्यपुत्रीमन्यानुरक्तां नलानुरक्तां कथं कामयन्ते समीहन्ते । महदनुचितमिति भावः । एतत्खेदाद्वक्तुं कथयितुमिव दिनपतिः सूर्योऽधिकं व्रीडया लज्जयैवावनम्रोऽवनतः सन् । तथा कोपेन क्रोधेन । अरुणांशुरिव सूर्य इव वरुणस्यालयं वरुणावासं पश्चिमाब्धिं पश्चिमसमुद्रं प्रविशति गाहते । उत्प्रेक्षालङ्कारः ॥ २६ ॥

(३) संध्येति—सन्ध्यावन्दनविरामे सान्ध्यकर्मावसाने उपविष्टाः स्थिता जपयुक्ता जपतत्परा ये द्विजजना विप्रास्तैः सनाथं सहितं सैकतं सिकतामयप्रदेशो यत्र ॥

ध्यावन्दनविधिविरामोपविष्टजपद्विजजनसनाथसैकते सरित्सङ्गमे सन्ध्याह्रिकमकरोत् ॥ क ॥

ततश्च पश्चिमायां दिशि स्फुरति सन्ध्यारागे, रुधिरासवपिपासया कालवेतालमण्डलीव प्रधावमाना, त्रिभिः स्रोतोभिः प्रवृत्तया गङ्गया सह संहर्षादिवानेकैः स्रोतसां सहस्रैर्गगनतलमिव प्लावयन्ती कालिन्दीव, व्यजृम्भत तिमिरपटलपङ्क्तिः ॥ ख ॥

अनन्तरं च चन्द्रमसा गर्भिणी पौरन्दरी दिक्केतकीपुष्पपत्त्रपाण्डिमानमगमत् ॥ ग ॥

उल्ललास च (१)चण्डतरमारुतान्दोलितोदयाद्रिद्रुमकुसुमकिञ्जल्करेणुराजिरिव कपिशा शशाङ्कद्युतिः ॥ घ ॥

अथ क्रमेण पूर्वपयोधिपुलिनाद्राजहंस इव गगनमन्दाकिनीमुच्चलितः, केसरिकिशोर इवोदयगिरिगुहागह्वरात्तिमिरकरियूथपपृष्ठलग्नः, स्फटिकमयः पूर्णकुम्भ इव जगद्विजयप्रस्थानस्थितस्य मङ्गलाय मकरकेतोः केनापि सज्जीकृतः, श्रीखण्डपिण्ड इव मण्डनाय महेन्द्रदिशा हस्तश्लेषोपलालितः, शङ्खिकापुष्पस्तबक इव गगनश्रिया श्रवणे संयोजितः, कुम्भ इवैकः प्राचीवनविहारिसुरकरीन्द्रस्य प्रकटतां गतः, वासरविरामवल्लीमुल्लूय कन्द इवोद्धृतो निशाशबरिकया, पाण्डुपुष्पाक्षतगुञ्जापुञ्ज इव सिद्धवधूभिरुदयाचलचतुष्पथे विरचितः, गण्डशैल इव कैलासशिखराल्लुठित्वागतः, सीमन्तमौक्तिकमिव पूर्वदिङ्मुखस्य, सितातपत्रमिव पूर्वाशाधिपतेः पुरन्दरस्य, क्रीडामौक्तिककन्दुक इव कालकुमारस्य क्षीरडिण्डीरपिण्डसदृशो दृष्टिपथमवततार तारापतिः ॥ ङ ॥

तदनु च—

(२)मदनमिति युवानं यौवराज्येऽभिषिञ्च-

---

अनन्तरमिति ॥ गर्भिणी हि केतकपत्रवत्पाण्डुतां धत्ते ॥ ग ॥

अथेति ॥ वनगहने हि विचरतः करिणः प्रायेणैक एव कुम्भस्थलविभागो लक्ष्यते । पाण्डुगुञ्जा हि मङ्गलाय स्युः । उदयाचलशब्दश्रुतेः सोमागमनसूचना । क्रीडार्थं मौक्तिककन्दुकः ॥ ङ ॥

---

(१) चण्डेति—चण्डमारुता प्रचण्डपवनेनान्दोलिताश्चालिता उदयाद्रौ द्रुमा वृक्षास्तेषां कुसुमानां पुष्पाणां किञ्जल्कस्य केसरस्य रेणुर्धूलिस्तस्या राजिरिव श्रेणिरिव कपिशा पीता शशाङ्कद्युतिश्चन्द्रकान्तिरुल्ललास दिदीपे ।

(२) मदनमिति—युवानं तरुणमिति मदनं कामं यौवराज्ये युवराजपदेऽभिषिञ्चन्नभिषिक्तं कुर्वन् । कृतो विहितः कुमुदानां विकासः प्रफुल्लता येन सः । दिङ्मुखान्याशामुखानि । भासयन् प्रकाशयन् । अमृततरङ्गैरिमं जीवलोकं संसारं प्लावयन्नवगाहयन् । मृगाङ्कश्चन्द्रमाः । मन्दमन्दं यथा तथा गगनमाकाशम् । अवजगाहे प्रविवेश । उदिया-

न्कृतकुमुदविकासो भासयन्दिङ्मुखानि।
इममृततरङ्गैः प्लावयञ्जीवलोकं
गगनमवजगाहे मन्दमन्दं मृगाङ्कः॥ २७॥

तदनन्तरम्, आप्लावितमिव मुक्तमर्यादेन दुग्धवार्धिना, सिक्तभूभागाङ्गणमिवामन्दचन्दनाम्बुच्छटाभिः, विलिप्तदिग्भित्तिकमिव सान्द्रसुधापङ्कपिण्डतैः, पूरितमिवोत्सर्पिकर्पूरपांसुवृष्ट्या, प्रविष्टमिव स्फाटिकमणिमहामन्दिरोदरदरीम्, उत्प्लवमानमिव द्रवीभूततुहिनाचलमहाप्लवेन, भुवनमासीत्॥ क॥

ततश्च—

(१)कैलासायितमद्रिभिर्विटपिभिः श्वेतातपत्रायितं
मृत्पङ्केन दधीयितं जलनिधौ दुग्धायितं वारिभिः।
मुक्ताहारलतायितं व्रततिभिः शङ्खायितं श्रीफलैः
श्वेतद्वीपजनायितं जनपदैर्जाते शशाङ्कोदये॥ २८॥

अपिच—

(२)सर्वेऽपि पक्षिणो हंसाः सर्वेऽप्यैरावता गजाः।
जाताश्चन्द्रांशुभिः सर्वे रौप्यपुञ्जाः शिलोच्चयाः॥ २९॥

अपिच—

(३)सुधापङ्कोपलिप्तेव बद्धेव स्फटिकोपलैः।
विलीनहिमदिग्धेव मेदिनी ज्योत्स्नया कृता॥ ३०॥

अपिच—

(४)सौधस्कन्धतलानि दीपपटलैः कम्पेन पाण्डुध्वजा

---

मदनमिति॥ यौवराज्याभिषेकाद्यनेककार्यव्यग्रतया मन्दमन्दावगाहः॥ २७॥

---

येति भावः॥ २७॥

(१) कैलासेति—शशाङ्कोदये जाते सति सर्वं वस्तु सर्वे च जना सिता बभूवुरिति वर्णनम्। यथा-अद्रिभिः पर्वतैः कैलास इव सितपर्वत इवाचरितम्। विटपिभिर्वृक्षैः श्वेतातपत्रं सितच्छत्रं तदिवाचरितम्। मृत्पङ्केन मृत्कर्दमेन दधीयितं दधीवाचरितम्। जलनिधौ सागरे वारिभिर्जलैर्दुग्धमिव पय इवाचरितम्। व्रततिभिर्लताभिर्मुक्ताहारो मौक्तिकमाला तदिवाचरितम्। श्रीफलैर्नारिकेलैः शङ्ख इव कम्बुरिवाचरितम्। जनपदैर्नगरैः श्वेतद्वीपस्था ये जनास्तदिवाचरितम्। सर्वमेव सितं जातमिति भावः॥ २८॥

(२) सर्वेऽपीति—चन्द्रांशुभिः शशाङ्ककिरणैः सर्वेऽपि पक्षिणो विहगाः। हंसा मराला जाताः। तथा सर्वेऽपि गजा हस्तिनः। ऐरावता जाताः। ऐरावतस्य श्वेतगजत्वात्। एवं सर्वे शिलोच्चयाः पर्वताः रौप्यस्य पुञ्जा निवहा जाताः॥ २९॥

(३) सुधेति—सुधापङ्केन सुधयोपलिप्तेवोच्छोटितेव। स्फटिकोपलैः स्फटिकमणिभिर्बद्धेव तथा विलीनेन हिमेन तुहिनेन दिग्धेव व्याप्तेव मेदिनी क्षितिर्ज्योत्स्नया चन्द्रिकया कृता विहिता॥ ३०॥

(४) सौधेति—क्षुभ्यन् क्षोभं प्राप्नुवन् यः क्षीरपयोधिर्दुग्धसागरस्तस्य पूरं संवस्त-

हंसाः पक्षविधूननेन मृदुना निद्रान्तनादेन च ।
लक्ष्यन्ते कुमुदानि षट्पदरुतैरुत्सर्पिगन्धेन च
क्षुभ्यत्क्षीरपयोधिपूरसदृशे जाते शशाङ्कोदये ॥ ३१ ॥

तथाविधे च चन्द्रोदयप्रपञ्चे हठादुत्कण्ठयाभिभूयमानो निषध-नाथश्चिन्तयांचकार ॥ क ॥

(१)'इतश्चन्द्रः सान्द्रान्किरति किरणानग्निपरुषान्
इतोऽपि प्रोन्मीलत्कुमुदवनवायुर्विलसति ।
इतः कादम्बानां ध्वनितमपि निद्रालसदृशा-
मसह्यः सर्वोऽयं मनसिजमहिम्नः परिकरः ॥ ३२ ॥

अपि च—

(२)इतो मकरकेतनः किरति दुर्निवारः शरा-
नितोऽपि वयमाकुलाः कुलिशपाणिदत्ताज्ञया ।
तदेतदतिसङ्कटं यदिह कैश्चिदुक्तं जनै-
रितो विषमदुस्तटी भयमितो महाव्याघ्रतः ॥ ३३ ॥

तदिदानीं किमिह कर्तव्यम्, कथं वा हास्येनाप्यवन्ध्यवचसामलङ्घनीयः खल्वादेशो लोकपालानाम्' इति चिन्तयन्नेकाकी पद्भ्यामेव विनिर्गत्य निज-निकेतनात्समन्तादापतद्भिः शशाङ्ककिरणजालैः परिजनैरिव परिदर्शितव-र्त्मा कैश्चित्काललवैः कैलासकूटायमानाट्टालकाभोगभव्यं भीमभूपालभव-नमवाप्य कन्यान्तःपुरं पुरंदरवरप्रदानाददृश्यमानरूपः प्रासादपालकैः प्रवि-वेश ॥ ख ॥

प्रविश्य च दूरादभिमुखागतेनानवरतदह्यमानकृष्णागुरुधूपधूमवर्त्तिनर्त-

---

प्रविश्य चेति ॥ कर्पूरकस्तूरिकादीनां क्षोदो यक्षकर्दमः ॥ क ॥

---

त्सदृशे समाने शशाङ्कोदये चन्द्रोदये जाते सौधानां प्रासादानां स्कन्धतलानि स्कन्धप्रदेशा दीपपटलैः प्रदीपनिवहैः, पाण्डुध्वजाः सितपताकाः कम्पेन चलनेन, हंसाः पक्षयोर्विधूननेन क-म्पेन तथा मृदुना कोमलेन निद्रान्ते यो नादः शब्दस्तेन, कुमुदानि रात्रिकमलानि षट्पद-रुतैर्भ्रमरशब्दैस्तथोत्सर्पिणा विस्तरता गन्धेन सौरभेण लक्ष्यन्ते । चन्द्रिकया सर्वस्मिन्सिते जात इति शेषः ॥ ३१ ॥

(१) इत इति—चन्द्रोदये जाते निषधनाथश्चिन्तयामास । इतश्चन्द्रः शशाङ्कः । अग्नि-वत्परुषान् कठिनान् । सान्द्रान्सघनान् किरणान् रश्मीन् किरति पातयति । इतश्च प्रोन्मील-न्ति विकसन्ति कुमुदवनानि कुमुदनिवहास्तेषां वायुः पवनोऽपि विलसति वहति । इतो निद्र-यालसालसयुता दृक् दर्शनं येषां तेषां कादम्बानां ध्वनितमपि कूजितमपि । अयं सर्वो मन-सिजस्य कामस्य महिम्नः परिकरः सामग्री । असह्यो वर्तते ॥ ३२ ॥

(२) इत इति—इतो मकरकेतनो मीनकेतनः कामः । दुःखेन निवारयितुं शक्यः सन् शरान् बाणान् किरति पातयति । इतश्च कुलिशपाणिनेन्द्रेण या दत्ता प्रदत्ताज्ञा समादेशो दमयन्तीदौत्यलक्षणस्तया वयमाकुला व्याकुलाः स्म । अहं दमयन्तीं कामये इन्द्रादयो लो-कपालाश्च मां दमयन्तीप्रार्थनायै बाधन्ते तदेतदतिसंकटं दुःखमस्ति । यदिह कैश्चिज्जनै-

केन (१)बहलयक्षकर्दमाम्बुसिक्तसौधस्कन्धसंधिसंचारिणा गन्धवाहेन कृताभ्युत्थान इव, परिक्रम्य स्तोकमन्तरम् 'इत इतो देवी वर्तते' इति गीतगोष्ठीस्थितसखीगीतझंकारेणाहूयमान इव, यत्रास्ते दमयन्ती तत्सौधपृष्ठमारूढवान् ॥ क ॥

(२)आरुह्य च मनाग्व्यवहितोऽनुपलक्ष्यमाण इव, वेणुवीणाक्वणानुसारिणा कोमलकाकलीप्रायेण किंनरीप्रमुखसखीनां गीतेन विनोद्यमानाम्, अलकवल्लरीमध्यनिवेशिततारानुकारिमौक्तिकेन कज्जलकलङ्कितनयनोत्पलपक्ष्मपालिना मुखेन सचन्द्रगगनस्पर्धया भूतलमपि पूर्णोदितेन्दुमण्डलमिवापादयन्तीम्, उच्चकुचमण्डलविलोलया ससमरसप्तर्षिग्रहगणपङ्क्त्येव हारलतया कृतकण्ठकन्दलाश्लेषाम्, ईषत्कपोलपालिं परामृशता चाटुकारेण वसन्तसमयप्रहितदूतेनेव कर्णलग्नेन कुसुममञ्जरीद्वितीयेन बालपल्लवेन विराजितवदनाम्, अच्छाच्छैः कस्तूरिकापङ्कपत्रभङ्गैर्भुजङ्गैरिव लावण्यामृतरक्षागतैरलंकृतभव्यभुजशिखराम्, आसन्नभुवि विकीर्णैः पाण्डुपुष्पप्रकरैर्गगनादवतीर्य रूपालोकनकुतूहलिभिर्नक्षत्रैरिव परिवृताम्, ऊरुनितम्बमण्डलस्पर्शसुखलम्पटतया नीवीप्रान्तपुञ्जिततरङ्गं क्षीरोदमिव वस्त्रतां गतमच्छपाण्डु नेत्रपट्टं परिदधानाम्, 'अहमेव त्वया स्वयंवरे वरणीयः' इत्यर्थितया पादलग्नेन शेषोरगेणेव रौप्यनूपुरवलयेन विराजितवामचरणपल्लवाम्, विविधविलासवर्तिकाभिरिवाकारिताम्, अमृतद्रववर्णकैरिव चित्रितावयवाम्, आनन्दकन्दलैरिव घटिताम्, मोहनमणिशिलायामिवोत्कीर्णाम्, शृङ्गारदारुणीवोत्कुट्टिताम्, वशीकरणपरमाणुभिरिव विनिर्मिताम्, मदनमृत्पिण्डेनेव निष्पादिताम्, वज्रलेपपुत्रिकामिव दृशोः, आकर्षणमणिशलाकामिव हृदयस्य, जीवनौषधिमिवानुरागस्य, जयपताकामिव मदनस्य,

---

आरुह्य चेति ॥ ईषत्कलोऽस्यातीति काकली । 'निषादः काकलीसंज्ञो द्विश्रुत्युत्कर्षणाद्भवेत्' । कज्जलेन कलङ्किता कलङ्क इवाचरितवती नयनोत्पलपक्ष्मपालिर्यत्र । कलङ्क इवाचरति स्मेत्याचारे क्विबन्ते ॥ अच्छेति ॥ अमृतं हि भुजंगै रक्ष्यते । विविधविला-

---

रुक्तम् । किमिति—इतो विषमा दुस्तटी, इतश्च महाव्याघ्रतः सिंहाद्भयं विद्यत इति ॥३३॥

( १ ) बहलेति—बहलेन बहुना यक्षकर्दमाम्बुना गन्धद्रव्यद्रवेण सिक्तानां सौधस्कन्धानां प्रासादप्रदेशाणां सन्धौ संचारिणा प्रचरता ॥

( २ ) आरुह्येति—अलकाः केशा एव वल्लरी मञ्जरी तन्मध्ये निवेशितं निहितं तारानुकारि तारासदृशं मौक्तिकं मुक्ताफलं यस्मिंस्तत् । कज्जलेनाञ्जनेन कलङ्किताङ्किता नयनोत्पलयोर्नेत्रकमलयोः पक्ष्मपालिः पक्ष्मपङ्क्तिर्यस्य तेन । ऊरुनितम्बमण्डलस्य विशालश्रोणिप्रदेशस्य स्पर्शेन सुखमानन्दस्तत्र लम्पटोऽनुरागी तस्य भावस्तत्ता तया । विकीर्णः पतितः सुरभिपरिमलः सुगन्धिगन्धस्तत्र मिलद्भिरागच्छद्भिर्मधुकराणां भ्रमराणां रवैर्निःस्वनैरनुमेयोऽनुमातव्यः पाण्डुपुष्पाणां सितकुसुमानां प्रकरो निवहो यस्मिंस्तस्मिन् । सौधस्कन्धे नलो दमयन्तीमद्राक्षीत् ।

वहलचन्दनाम्बुच्छटार्द्रितभुवि विकीर्णसुरभिपरिमलमिलन्मधुकररवानुमे-यपाण्डुरपुष्पप्रकरे मसृणसितसुधावन्धपिच्छले सौधस्कन्धे ज्योत्स्नामृत-स्पर्शसुखमनुभवन्तीम्, अच्छांशुस्फटिकमणिपर्यङ्किकाङ्कभाजं दमयन्तीम-लब्धनिद्रामद्राक्षीत् ॥ क ॥

तां चावलोक्य विचिन्तितवान् ॥ ख ॥

'अहो स्थानेऽभिनिवेशो लोकपालानाम् । अशेषसुखनिधानाय को न स्पृहयति ॥ ग ॥

मन्ये च ।

विस्फारिततारैर्गुणैरिमामेव पश्यन्नयमाकाशः सग्रहोऽभूत् ॥ घ ॥

अयं च चन्द्रश्चन्दनपाण्डुभिः करैरिमामेव परामृशन्मदनानलदाहमयीं व्रणलेखां कलङ्कच्छलेन हृदयेनोद्वहति ॥ ङ ॥

अयमपि समीपोद्यानमारुतोऽस्याः समर्पितकुसुमगन्धः शनैरुत्तरीयां-शुकमाक्षिपन्मदनातुरस्तिर्यक् पतति ॥ च ॥

सर्वथा जितं मनुष्यलोकेन, यत्रैवंविधमचिन्त्यम्, अनालोचनगोचरम्, अप्रतिमरूपम्, अद्भुतम्, अमूल्यमुदपद्यत स्त्रीरत्नम् ॥ छ ॥

आः प्रजापते, परिणतशिल्पोऽसि । संसार, सनाथोऽसि । मदन, महो-त्सववानसि । चक्षुः, कृतार्थमसि । हृदय, पूर्णमनोरथमसि । दूरागमने-श्रम, सफलोऽसि ॥ ज ॥

(१)सकलयुवजनमनोमधुकराकृष्टिकुसुमितलतिके निजनयननिर्जित-राजीवे जीव चिरम् ॥ क ॥

तथाहि—

(२)लक्ष्मीं विभ्राणयोः कांचिच्चञ्चद्भ्रूभङ्गभागयोः ।

---

सवर्त्तिकाश्चित्रकूर्चिकास्ताभिराकारितामालिखिताम् । आकारशब्दादाचारक्विबन्ताच्निष्ठा-यां सिद्धम् ॥ क ॥

विस्फारीति ॥ तारा नक्षत्राणि कनीनिका च । ग्रहाः सूर्यादयो भूताद्यभिनि-वेशाश्च ॥ घ ॥

अयमपीति ॥ अन्योऽपि स्मरातुरः कुङ्कमगन्धं कस्तूरिकादि चार्पयन्संव्यानाकर्षण-परस्तिर्यक्पतति ॥ च ॥

आः प्रजेति ॥ 'संसार' इत्यादीनि प्रत्येकं संबोधनानि ॥ ज ॥

लक्ष्मीमिति ॥ हे तन्वि, तव नेत्रयोर्वयं बलिं याम उपहारीभवाम इति परमप्री-

---

(१) सकलेति—सकलयुवजनानां तरुणानां मनांसि मानसान्येव मधुकरा भृङ्गास्ते-षामाकृष्टिराकृष्यतेऽनयेत्याकृष्टिराकर्षिणी कुसुमिता पुष्पिता लतैव लतिका तत्सम्बुद्धौ ।

(२) लक्ष्मीमिति—हे तन्वि कृशाङ्गि । चञ्चन्ती प्रकाशमाना भ्रूरेव भङ्गस्तरङ्गः स भाग एकप्रान्ते ययोस्तयोः कांचदनिर्वाच्याम् । लक्ष्मीं शोभां बिभ्राणयोर्बिभ्रतोरञ्जसदृशोः

वलिं यामो वयं तन्वि तवाब्जसदृशोर्दृशोः ॥ ३४ ॥

अपि च—

(१)किंनरवदनविनिर्गतपञ्चमगीतामृते श्रुतिं श्रयति।
हरति हरिणीदृशो दृक् सालसवलिता च लुलिता च ॥ ३५ ॥

इत्यनेकविधानि चिन्तयन्मृदुलीलापदैरागत्य गीतगोष्ठीस्थितस्य 'कोऽयम्' इति विस्मयविस्फारितलोचनस्य संभ्रमवतः सखीकदम्बकस्य मध्यमविशत् ॥ क ॥

प्रविष्टे च तस्मिन्, आकस्मिकविस्मयेन विस्फारितानि, भयेन भ्रमितानि, कौतुकेनोत्तानितानि, व्रीडया वलितानि, मुदा मिलद्रालपक्ष्माणि, स्मराकूतेन विलुलितानि, दिदृक्षारसेनानिमिषाणि, दृष्टिसंघट्टेन मुकुलितानि, विलासेन मिलितानि, चिरं चक्षूंषि बिभ्राणाः किमपि चलितासनम्, उत्कम्पितहृदयम्, अपसरद्धैर्यम्, अवगलत्स्वेदसलिलम्, उत्पुलकिताङ्गम्, अनङ्गभङ्गुरम्, अवलोकितान्योन्यमुखमवतस्थिरे तदभिमुखाः सख्यः ॥ ख ॥

दमयन्त्यपि 'देवी, वर्धयामो वर्धयामः कोऽपि कस्याश्चिज्जीवितेश्वरोऽयमत्रैवागतो दृश्यते' इति हर्षोत्कर्षगद्गदगिरां, गीतमुत्सृज्य ससंभ्रमोत्थितकुब्जवामनकन्यकानां मृदुकरतलतालिकाकलितकलकलेन मनाग्विलासवलितमुखी तदभिमुखमवलोक्य शय्यातलादुदचलत् ॥ ग ॥

'आः कुतोऽस्यानेकप्राकाररक्षकरक्षिते पक्षिणामपि दुष्प्रवेशे विशेषतो रजन्यां कन्यान्तःपुरे प्रवेशः' इत्यद्भुतरसावेशस्तिमितेन किंचित्संचारितेन चक्षुषा पुनःपुनर्नलमवलोक्य चिन्तयांचकार ॥ घ ॥

(२)धन्या काप्युपराधिताद्रितनया यस्यास्त्वमाल्हादय-

---

तिगर्भा लोकोक्तिः। अब्जानि लक्ष्मीं बिभ्रति। तथा भ्रूरेव भङ्गस्तरङ्गः स भाग एकदेशे ययोः। यदा तु 'चञ्चद्भ्रूभृङ्गसङ्गयोः' इति पाठः तदा भ्रुवावेव भृङ्गौ तयोः सङ्गो यत्र ॥ ३४ ॥

किंनरेति ॥ यत एव हरिणीदृक्, अत एव गीतानुरागलक्षणं हरिणी हेवाकमनुसरति ॥ ३५ ॥

धन्या केति ॥ मातृशब्दं जननीपर्यायमपि स्त्रियः सपत्न्यादिष्वपि प्रणयसंबोधने प्र-

---

कमलसमयोस्तव दृशो नयनयोर्वयं बलिं याम उपायनीभवामः ॥ ३४ ॥

(१) किंनरेति—किंनरवदनेन विनिर्गतं निःसृतं पञ्चमगीतमेव पञ्चमरागीयगानमेवामृतं तस्मिन् श्रुतिं श्रवणपथं श्रयति सति भजति सति। हरिणीदृशो मृगीदृशस्तस्या दमयन्त्या लुलिता चञ्चला तथा सालसवलिता सालसं चालिता दृग्दर्शनं मनो हरत्याकर्षति ॥ ३५ ॥

(२) धन्येति—उपराधिता सेविताद्रितनया पार्वती यया सा कापि युवतिर्धन्या प्र-

न्मुक्ताहार इव प्रसारितभुजः कण्ठे विलोठिष्यसि ।
धातस्तात तवापि धन्यममुना सृष्टेन मन्ये श्रमं
मातर्मेदिनि वन्द्यसे किमपरं यस्यास्तवायं पतिः" ॥ ३६ ॥

एवं चिन्तयत्येव(१) तत्कालमाकूतकौतुकहर्षभयाद्यनेकरसपरम्परा-परावर्तितनयनोत्पला लज्जावनमितमुखी विधेयविवेकवैकल्यमभजत ॥क॥

नलोऽपि 'विहंगवागुरिके, भवत्स्वामिन्याः किमेवंविधः समाचारः, यदभ्यागतजनेन सह स्वागतालापमात्रेणापि न क्रियते व्यवहारः' इति तस्याः समीपवर्तिनीं पूर्वपरिचितां किंनरीमभाषत ॥ ख ॥

(२) सापि ससंभ्रमप्रणामपूर्वमिदमवादीत् ॥ ग ॥

'किञ्चित्कम्पितपाणिकङ्कणरवैः पृष्टं ननु स्वागतं
व्रीडानम्रमुखाब्जया चरणयोर्न्यस्ते च नेत्रोत्पले ।
द्वारस्थस्तनयुग्ममङ्गलघटे दत्तः प्रवेशो हृदि
स्वामिन्किं न तवातिथेः समुचितं सख्याऽनयाऽनुष्ठितम् ॥ ३७ ॥

तदितः ससंभ्रमोत्थितयानया समर्पितमिदमुल्लसन्मणिपर्यङ्किकापृष्ठमधितिष्ठतु देवः ॥ घ ॥

त्वमपि देवि, विद्रुममणिपर्यङ्किकामिमामदूरवर्तिनीमध्यास्व ॥ ङ ॥

भवतु च भवतोः परमुखेन श्रुतान्योन्यस्वरूपयोरिदानीमात्मानुभवेन नयननिर्वृतिः, फलन्तु मनोरथाः सखीनाम्' इति ॥ च ॥

तयाभिहितौ तौ सर्वसत्वरसखीकरपरामृष्टयोः स्फटिकप्रवालपर्यङ्किकयोरुत्सङ्गभागं भेजतुः ॥ छ ॥

---

युज्जते इति नले भूपतावभ्यर्थिन्या दमयन्त्या 'मातर्मेदिनि' इति सम्बोधनं न दुष्टम् । अन्यथा सपत्नीं प्रति मातरित्यामन्त्रणमनुचितम् ॥ ३६ ॥

---

वास्या । यस्या युवत्याः कण्ठे गलप्रदेशे । आल्हादयन् प्रसीदन् प्रसारितौ भुजौ हस्तौ येन स मुक्ताहार इव मुक्तावलीव त्वं विलोठिष्यसि समाश्लिष्यसि । हे धातस्तात । सृष्टेन विरचितेनामुना तवापि श्रममुद्योगं धन्यं प्रशस्यं मन्ये जाने । हे मातर्मेदिनि पृथिवि । वन्द्यसे नम्यसे । अपरमन्यत्किम् । यस्यास्तवायं नलः पतिः स्वामी । आस्ते ॥ ३६ ॥

(१) तत्कालमिति—तत्कालं तत्क्षणमाकूतमभिप्रायः, कौतुकं कौतूहलं हर्ष आनन्दो भयं भीतिस्तदाद्यनेकरसानां परम्परा धारा तया परावर्तिते निवर्तिते नयनोत्पले नयनकमले यया सा ।

(२) किञ्चिदिति—किञ्चिदल्पं कम्पिताभ्यां वेपिताभ्यां पाणिभ्यां हस्ताभ्यां यः कङ्कणरवो वलयध्वनिस्तेन । स्वागतं स्वायातं पृष्टं ननु । व्रीडया लज्जया नम्रं निम्नं मुखाब्जं वदनकमलं यस्यास्तया । नेत्रोत्पले नयनकमले चरणयोः पादयोर्न्यस्ते निहिते । द्वारस्थौ स्तनयुगावेव घटौ यस्मिंस्तस्मिन् हृदि मानसे । प्रवेशो दत्तोऽर्पितः । हे स्वामिन्नल । अनया सख्या दमयन्त्यातिथेः प्राघुणिकस्य तव समुचितं योग्यं किं नानुष्ठितं नाचरितम् ॥ ३७ ॥

ततश्च तौ—

(१)हर्षाद्बाष्पचिते, भयात्तरलिते, विस्फारिते विस्मया,-
दौत्सुक्यात्स्तिमिते, स्मराद्विलुलिते, संकोचिते लज्जया ।
रूपालोकनकौतुकेन रभसादन्योन्यवक्त्राम्बुजे
किंचित्साचि च संमुखं च नयने संचारयामासतुः ॥ ३८ ॥

तत्र च व्यतिकरे—

(२)अन्तः केवलमुल्लसन्ति न पुनर्वाचां तु ये गोचरा
येषां नो भरतादयोऽपि कवयः कर्तुं विवेकं क्षमाः ।
लज्जामन्थरयोः परस्परमिलद्दृष्टिप्रपाते तयो-
स्ते सर्वे समकालमेव हृदये केऽप्याविरासन्रसाः ॥ ३९ ॥

अपि च । तत्र च व्यतिकरे—

(३)कर्णान्तकृष्टवलयीकृतचापचक्र-
श्चञ्चद्गुणस्खलनजर्जरितप्रकोष्ठः ।
लक्ष्यद्वयेऽपि युगपद्विशिखान्विमुञ्च-
न्संधानसत्वरकरः श्रमवान् स्मरोऽभूत् ॥ ४० ॥

अनन्तरमाप्तसखीवचनेन स्वयमर्घदानोद्यतां ताम् "अलमलमुत्पलाक्षि, प्रयासेन। न खल्वसि पात्रं परिश्रमस्य । न पारिजातमञ्जरी जरठपवनप्रेङ्खोलनायासं सहते' इति दमयन्तीमभिधाय तस्याः स्वादुदुर्लभसूक्तिसुधासेककोमलालापपण्डिताभिः सखीभिः सह परिमितपरिहासेन, किमपि जल्पन्, किमपि हसन्, किमपि हासयन्, मुहूर्तमिवासांचक्रे ॥ क ॥

---

( १ ) हर्षादिति—ततश्च तौ दमयन्तीनलौ । हर्षादानन्दाद्बाष्पचिते बाष्पाविले । भयात्तरलिते लोले । विस्मयदाश्चर्याद्विस्फारिते विकासिते । औत्सुक्यादौत्कण्ठ्यात्स्तिमिते निश्चले स्मराद्विलुलिते कामात्तरले । लज्जया व्रीडया संकोचिते निमीलिते । एतादृशे नयने रूपालोकनस्य स्वरूपदर्शनस्य कौतुकं कौतूहलं तेन रभसात्प्रसह्य । अन्योन्यस्य वक्त्राम्बुजे वदनकमलेऽधिकरणभूते किञ्चित्साचि वलितं तथा संमुखं यथा तथा संचारयामसतुः प्रचारयांबभूवतुः ॥ ३८ ॥

( २ ) अन्तरिति—लज्जया व्रीडया मन्थरयोर्मन्दयोस्तयोः परस्परमन्योन्यं मिलन्ती या दृष्टिर्नेत्रं तस्याः प्रपाते सति केवलमन्तरेवोल्लसन्ति प्रस्फुरन्ति पुनर्वाचां गिरां ये गोचरा विषया न । वाचामतीता इति भावः। भरतादयो नाट्यशास्त्रप्रणेतारः कवयोऽपि येषां रसानां विवेकं निरूपणं कर्तुमसमर्थाः । ते केऽप्यनिर्वचनीयाः सर्वे रसाः समाकालमेव हृदये हृदि । अविरासन्नाविरभवन् ॥ ३९ ॥

( ३ ) कर्णेति—कर्णान्तकृष्टं वलयीकृतं मण्डलीकृतं चापचक्रं धनुर्वलयं येन सः । चञ्चतो गुणस्य ज्यायाः स्खलनेनाघातेन जर्जरितो जीर्णः प्रकोष्ठो यस्य सः लक्ष्यद्वयेऽपि नलदमयन्तीरूपेऽपि युगपत्समकालं विशिखान् शरान् विमुञ्चन् संधाने ज्यारोपणे सत्वरौ शीघ्रताभाजौ करौ हस्तौ यस्य सः । स्मरो मदनः श्रमवान् क्लान्तोऽभूद्बभूव ॥ ४० ॥

